श्रीः

श्रीमच्छंकराचार्यविरचिता

# उपदेशसाहस्री ।

रामतीर्थविरचितया पदयोजनिकाख्यया

व्याख्ययासंवलिता।

नवरेइत्युपाभिध कृष्णशास्त्रिणा

यथामति संशोधिता ।

सा च




इत्यनेन

मुंबय्यां जगदीश्वराख्यमुद्रालये

मुद्रापिता.

शकाब्दाः १८०७.

(सन १८८६ इसवी)

अथ

# सटीकोपदेशसाहस्त्री

## पद्यात्मिका.

---

**चैतन्यं सर्वगं सर्वं सर्वभूतगुहाशयम् ॥ यत्सर्वविषयातीतं तस्मै सर्वविदे नमः ॥१॥ ॥छ॥ ॥छ॥**

श्रीगणेशायनमः ॥ ॥ श्रीसरस्वत्यैनमः ॥ श्रीमच्छंकराचार्यभगवतेनमः ॥ यत्राध्यस्तमिदंसर्वंमेयमात्राद्यविद्यया ॥ भातिनोभातियज्ज्ञानात्तदस्मिब्रह्मचित्सुखं ॥१॥ तदेवंसर्वोपनिषदर्थसारसंग्रहंगद्यबंधप्रबंधेनसंक्षेपतोयुक्त्योपदिश्यपुनरप्युक्तमेवार्थजातं पद्यबन्धप्रबंधेनसोपस्करंविस्तरेणोपदेष्टुकामोभगवान्भाष्यकारःपद्यग्रंथारंभेग्रंथप्रतिपाद्यपरदेवतानमस्काररूपं मंगलंकृतंशिष्यशिक्षार्थंश्लोकेनोपनिबध्नाति ॥ चैतन्यमिति ॥ तस्मैसामान्यतःप्रसिद्धायनमः प्रह्वीभावोभूयादित्यर्थः ॥ तस्य विशेषजिज्ञासायांलक्षणमाह सर्वविदइति ॥ सर्वंवेत्तीतिसर्ववित्तस्मै सर्वशब्देनभूतंभवद्भविष्यदित्येतदात्मकंजगदुच्यतेतत्सर्वंसर्वावस्थंसर्वदासवितृवत्सन्निधिसत्तामात्रेणप्रकाशयत्सर्वंवित् नहीदंजडंस्वसत्तास्फूर्त्योःस्वतंत्रंभवति अतोयदधीनसत्तास्फूर्तिमदिदंतदस्तिसर्वज्ञंसर्ववित्सर्वाश्रयइतितटस्थलक्षणं

क्यार्थस्तात्पर्यवृत्त्याप्रतिपादितोभवति॥तदेवंमंगलाचरणव्याजे नवेदांतशास्त्रीयविषयाद्यनुबंधोप्यत्रप्रपंचितोऽस्यतत्प्रकरणत्व द्योतनाय तथाहि उक्तवाक्यार्थोविषयश्चैतन्यंसर्वविषयाती तमितिचचिदात्मनः सर्वानर्थसंस्पर्शित्वाभावोक्तेरशेषानर्थनिवृ त्त्युपलक्षितंनिरतिशयानंदाविर्भावात्मकंब्रह्मैवप्रयोजनमुक्तं अ र्थात्तत्कामोधिकारीसूचितएवभवति ॥ उक्तविशेषणानांवेदांते ष्वेवप्रसिद्धेःशास्त्रब्रह्मणोःप्रतिपाद्यप्रतिपादकभावःसंबंधोध्वनि तइति ॥ १ ॥

समाप्यैव क्रियाःसर्वा दाराग्न्याधा नपूर्विकाः ॥ ब्रह्मविद्यामथेदानीं व क्तुं वेदः प्रचक्रमे ॥ २ ॥ ॥छ॥

एवंदेवतानमस्कारव्याजेनवेदांतप्रतिपाद्यपरदेवतातत्वमुप क्षिप्तमिदानींवेदान्तानांतत्परत्वंप्रतिपादयितुंकर्मकांडनिर्वृत्तम र्थमनूद्यतेनज्ञानकांडाख्यवेदान्तानांसंगतिमभिदधानस्तेषाम गतार्थत्वमनन्यशेषत्वंचतावदाह समाप्यैवेति ॥वेदइदानींब्रह्म विद्यांवक्तुंप्रचक्रमइत्यन्वयः ॥ इदानीमिती ॥ जिज्ञासोरुप[illegible] तिसमयउक्तः अथेतिजिज्ञासाप्रवृत्तिप्रयोजकहेतुसा[illegible] ष्टयसंपत्त्यानंतर्यमुच्यते ॥ तथाचविवेकवैराग्यशमादि[illegible] संपन्नस्यमुमुक्षोर्मोक्षसाधनब्रह्मविद्यांसाक्षात्प्रतिपादयितुंज्ञान कांडात्मकोवेदःप्रवर्त्ततइत्यर्थः ॥ कुतोस्यसाधनसंपत्तिरित्यपे क्षायांकर्मकांडोक्तकर्म्मानुष्ठानजनितबुद्धिशुद्धितइत्यभिप्रेत्याह समाप्यैवेत्यर्धेन ॥ दाराग्न्याधानपूर्विकाइतिविहितक्रियामात्रो

पलक्षणम् नित्यनैमित्तिकप्रायश्चित्तोपासनारूपाःसर्वाश्रमप्रयुक्ताविधिविहिताः सर्वाःक्रियाःसमापय्यसमाप्तिंप्रापय्यकर्मकांडात्मनाअनुष्ठेयकर्माणिप्रतिपाद्यस्थितोवेदइतिसंबंधः ॥ अयंभावः वेदोहिस्वतःप्रमाणभूतःसर्वार्थप्रकाशकोनित्यनिरतिशयपुरुषार्थमर्थयमानस्यतदुपायम्मृगयतःसर्वोत्साहम्प्रयतमानस्यापितमलभमानस्यताद्दक्पुरुषार्थसाधनंप्रत्यक्षादिभिरनवगम्यमानमुपदेष्टुंप्रवर्तते नित्यनिरतिशयपुरुषार्थश्चमोक्षएवनान्यइतिमोक्षोपायप्रतिपादनेवेदतात्पर्यमवगम्यते ॥ श्रुतिस्मृतीचात्रभवतःसर्वेवेदायत्पदमामनंति सर्वेवेदायत्रैकाभवंति समानसीनआत्मजनानामिति वेदैश्चसर्वैरहमेववेद्यइतिच मोक्षसाधनंचसाक्षादात्मातत्वज्ञानमेव तमेवविदित्वातिमृत्युमेति नान्यःपंथाविद्यतेयनायेतिश्रुतेस्तच्चनाशुद्धांतःकरणस्योपदेष्टुंयुक्तंतस्यतद्ग्रहणसामर्थ्याभावात् श्रुतिश्चभवति ॥ नाविरतोदुश्चरितान्नाशांतोनासमाहितः नाशांतमानसोवापिप्रज्ञानेनैनमाप्नुयादिति ॥ अतस्तस्यज्ञानोत्पत्तिप्रतिबंधकदुरितक्षयार्थानिनित्यानिकर्माण्प्रिथमंविद्यंते तानिचसंयोगरूपचोदनासमाख्यानामविशेषेणसर्व्वशाखाप्रत्ययन्यायेनेतिकर्त्तव्यांगकलापपरिमाणाधिकारिविशेषोक्तिपूर्वकमनुष्ठापयति धर्मेणपापमपनुदतिनकर्मलिप्यतेनरेअविद्ययामृत्युंतीर्त्वेत्यादिश्रुतेर्दुरितक्षयएवधर्मानुष्ठानस्यपरंप्रयोजनं परंपरयापरमपुरुषार्थोपयोगित्वात् नतुकर्मणापितृलोकइत्याद्युक्तःपितृलोकादिःप्रयोजनम् तस्यक्षयादिदोषदुष्टतयाहेयत्वात् आनुषंगिकंहितत्कर्मफलंभवति भवदपिनेदंचित्तशुद्धिप्रतिबंधकं तदुक्तंसुरेश्वराचार्यैः॥नित्येषुशुद्धिप्राधान्याद्भोगोप्यप्रतिबंधकः॥भोगंभंगुरमीक्ष्यंतेबुद्धिशुद्धि

स्तुरोचतइति ॥ काम्याभिचारादिकर्मविधानंतुपुरुषवशीकरणे नस्वाभाविकप्रवृत्तिनिवारणार्थमित्येषादिक् ॥ तथाचाचित्तशुद्धेः प्रथमापेक्षितत्वात्तदर्थंकर्मविधानंप्रथमंप्रवर्त्तते पश्चाच्चज्ञानोप देशइतिकर्मज्ञानकांडयोरर्थद्वाराहेतुहेतुमद्भावेनपौर्वापर्यसंबंध उक्तः ॥ ज्ञानकांडस्यसाक्षात्फलार्थविषयत्वात्कर्मभिरनपेक्षि तार्थत्वाच्चागतार्थत्वमनन्यशेषत्वंचतस्यासिद्धमिति ॥ २ ॥ ॥

**कर्माणि देहयोगार्थं देहयोगे प्रिया**
**प्रिये ॥ ध्रुवे स्यातां ततो रागो द्वेष**
**श्चैव ततः क्रियाः ॥ ३ ॥ ॥छ॥**

ननुकर्माणिकृतानिकर्त्तुःफलप्रदानिलोकेदृष्टानि यथापित्रा दिभिरुपदिष्टविषयाणिइष्टफलानितैर्निषिद्धविषयान्यनिष्टफला नितदुदास्तविषयाणिदैवाधीनतयोभयार्थानि तथा वेदविहि तानिकर्माणीष्टफलानि निषिद्धान्यनिष्टफलानि विहितप्रतिषि द्धव्यामिश्रकर्माणीष्टानिष्टव्यामिश्रफलानिभवंति ॥ तथाचशा स्त्रं अनिष्टमिष्टंमिश्रंचत्रिविधंकर्मणःफलमिति ॥ एवंचकर्मणां फलाव्यभिचारान्मोक्षस्यचफलविशेषत्वात्कर्मविशेषसाध्यत्वो पपत्तेर्नविद्ययाकृत्यमस्तीति नतदर्थानिज्ञानकाण्डानिमुमुक्षु णाविचारणीयानि किंतुकर्माण्येवकानिचिच्चातुर्मास्यादीन्यक्ष य्यफलार्थान्यनुष्ठेयानीतिकर्मजडानांप्रत्यवस्थानमित्याशंक्या ह कर्माणीतिद्वाभ्यां ॥ कर्मफलंहिजात्यायुर्भोगलक्षणं तच्च देहसंबंधंविनानोपपद्यतइतिकर्माणिदेहयोगार्थमेवेत्यर्थः ॥ दे हयोगेचसंसारोदुर्वारइत्याह देहयोगइति देहसंबंधेसतिप्रि

याप्रियेसुखदुःखेध्रुवेस्यातांभवेतामेव ॥ नवैसशरीरस्यसतः प्रियाप्रिययोरपहतिरस्तीतिश्रुतेः॥ ततःसुखदुःखयोस्तत्साधनयोश्चयथासंख्यंरागद्वेषौवासनारूपौस्यातां ॥ ततोरागद्वेषाख्यान्निमित्तात्क्रियावाङ्मनःकायचेष्टास्युरित्यर्थः॥ ३ ॥ ॥

धर्माधर्मौ ततो ज्ञस्य देहयोगस्तथा पुनः॥ एवं नित्यप्रवृत्तोऽयं संसारश्चक्रवद्भृशम् ॥४॥ ॥ ॥ ॥ ॥

अज्ञस्यप्रत्यगात्मतत्वंब्रह्माजानतोहंकारपारवश्यस्यततःक्रियाभ्योविहितप्रतिषिद्धरूपाभ्योधर्माधर्मौपुनर्भवेतां पुनस्ततोदेहयोगस्ततःप्रियाप्रियेइत्येवंसंसारोजन्ममरणकर्म्मकरणतत्फलभोगलक्षणःकुलालचक्रवद्भृशमत्यर्थमविश्रमंयथास्यात्तथानित्यप्रवृत्तोनादिकालमारभ्यप्रवर्त्तते अयंप्रत्यक्षइत्यर्थः॥ तस्मादैहिकार्थानांकर्मणामनित्यफलत्वस्यलोकेदृष्टत्वादामुष्मिकफलार्थानामपिकर्मत्वादनित्यफलतानुमानात्तद्यथेह कर्मजितोलोकःक्षीयतएवमेवामुत्रपुण्यजितोलोकःक्षीयत इतिवस्तुबलावलंबिश्रुतेश्चाक्षय्यंहवैचातुर्मास्ययाजिनःसुकृतमित्याद्यर्थवादश्रुत्यवलंबनेनकर्मफलस्यनित्यत्वाशानकार्येतिभावः ॥४॥

अज्ञानं तस्य मूलं स्यादिति तद्धानमिष्यते ॥ ब्रह्मविद्यात आरब्धा ततो निःश्रेयसं भवेत् ॥५॥ ॥ ॥

नन्वेवमपिनमोक्षार्थिनोज्ञानेनप्रयोजनमस्तिकृतकर्मणांसंसा

स्तुरोचतइति ॥ काम्यप्रभिचारादिकर्मविधानंतुपुरुषवशीकरणे नस्वाभाविकप्रवृत्तिनिवारणार्थमित्येषादिक् ॥ तथाचाचित्तशुद्धेः प्रथमापेक्षितत्वात्तदर्थंकर्मविधानंप्रथमंप्रवर्त्तते पश्चाच्चज्ञानोपदेशइतिकर्मज्ञानकांडयोरर्थद्वाराहेतुहेतुमद्भावेनपौर्वापर्यसंबंध उक्तः ॥ ज्ञानकांडस्यसाक्षात्फलार्थविषयत्वात्कर्मभिरनपेक्षितार्थत्वाच्चागतार्थत्वमनन्यशेषत्वंचतस्यासिद्धमिति ॥ २ ॥ ॥

**कर्माणि देहयोगार्थं देहयोगे प्रियाप्रिये ॥ ध्रुवे स्यातां ततो रागो द्वेषश्चैव ततः क्रियाः ॥ ३ ॥ ॥छ॥**

ननुकर्माणिकृतानिकर्त्तुःफलप्रदानिलोकेदृष्टानि यथापित्रादिभिरुपदिष्टविषयाणिइष्टफलानितैर्निषिद्धविषयान्यनिष्टफलानितदुदास्तविषयाणिदैवाधीनतयोभयार्थानि तथा वेदविहितानिकर्माणीष्टफलानि निषिद्धान्यनिष्टफलानि विहितप्रतिषिद्धव्यामिश्रकर्माणीष्टानिष्टव्यामिश्रफलानिभवंति ॥ तथाचशास्त्रं अनिष्टमिष्टंमिश्रंचत्रिविधंकर्मणःफलमिति ॥ एवंचकर्मणांफलाव्यभिचारान्मोक्षस्यचफलविशेषत्वात्कर्मविशेषसाध्यत्वोपपत्तेर्नविद्ययाकृत्यमस्तीति नतदर्थानिज्ञानकाण्डानिमुमुक्षुणाविचारणीयानि किंतुकर्माण्येवकानिचिच्चातुर्मास्यादीन्यक्षय्यफलार्थान्यनुष्ठेयानीतिकर्मजडानांप्रत्यवस्थानमित्याशंक्याह कर्माणीतिद्वाभ्यां ॥ कर्मफलंहिजात्यायुर्भोगलक्षणं तच्च देहसंबंधंविनानोपपद्यतइतिकर्माणिदेहयोगार्थमेवेत्यर्थः ॥ देहयोगेचसंसारोदुर्वारइत्याह देहयोगइति देहसंबंधेसतिप्रि

याप्रियेसुखदुःखेध्रुवेस्यातांभवेतामेव ॥ नवैसशरीरस्यसतः प्रियाप्रिययोरपहतिरस्तीतिश्रुतेः॥ ततःसुखदुःखयोस्तत्साधनयोश्चयथासंख्यंरागद्वेषौवासनारूपौस्यातां ॥ ततोरागद्वेषाख्यान्निमित्तात्क्रियावाङ्मनःकायचेष्टास्युरित्यर्थः॥ ३ ॥ ॥

**धर्माधर्मौ ततो ज्ञस्य देहयोगस्तथा पुनः॥ एवं नित्यप्रवृत्तोऽयं संसारश्चक्रवद्भृशम् ॥४॥ ॥ ॥ ॥ ॥**

अज्ञस्यप्रत्यगात्मतत्वंब्रह्माजानतोहंकारपारवश्यस्यततःक्रियाभ्योविहितप्रतिषिद्धरूपाभ्योधर्माधर्मौपुनर्भवेतां पुनस्ततोदेहयोगस्ततःप्रियाप्रियेइत्येवंसंसारोजन्ममरणकर्म्मकरणतत्फलभोगलक्षणःकुलालचक्रवद्भृशमत्यर्थमविश्रमंयथास्यात्तथा नित्यप्रवृत्तोनादिकालमारभ्यप्रवर्त्तते अयंप्रत्यक्षइत्यर्थः॥ तस्मादैहिकार्थानांकर्मणामनित्यफलत्वस्यलोकेदृष्टत्वादामुष्मिकफलार्थानामपिकर्मत्वादनित्यफलतानुमानात्तद्यथेह कर्मजितोलोकःक्षीयतएवमेवामुत्रपुण्यजितोलोकःक्षीयत इतिवस्तुबलावलंबिश्रुतेश्चाक्षय्यंहवैचातुर्मास्ययाजिनःसुकृतमित्याद्यर्थवादश्रुत्यवलंबनेनकर्मफलस्यनित्यत्वाशानकार्येतिभावः॥४॥

**अज्ञानं तस्य मूलं स्यादिति तद्धानमिष्यते ॥ ब्रह्मविद्यात आरब्धा ततो निःश्रेयसं भवेत् ॥५॥ ॥ ॥**

नन्वेवमपिनमोक्षार्थिनोज्ञानेनप्रयोजनमस्तिकृतकर्मणांसंसा

रनिमित्तानांफलभोगानंन्तरंनाशेसतिनिमित्ताभावान्नैमित्तिका
भावइतिन्यायादयत्नलभ्यत्वान्मोक्षस्येत्याशंक्याज्ञानमूलत्वा
त्कर्मणस्तस्मिन्सतितदनुपरमात्मैवमित्याह अज्ञानमिति यद्वा
अज्ञस्यकर्मप्रवृत्त्यविरमात्संसाराविरमः कृतकर्मफलभोगसम
येपिकर्मप्रवृत्त्यवश्यंभावात्पुनर्भोगसंतानाविच्छेदश्चेत्कथंतर्हि
कर्मनिवृत्त्यामोक्षसिद्धिरितिविवक्षायामाह अज्ञानमिति॥अय
मर्थः नीहारेणप्रावृताजल्प्याचासुतृपउक्थशासश्चरंति एकःश
त्रुर्नद्वितीयोस्तिशत्रुरज्ञानतुल्यःपुरुषस्यराजन् येनाविष्टःकुरु
तेकार्यतेचघोराणिकर्माणिसुदारुणानीत्यादिश्रुतिस्मृतिभ्योज्ञा
नंतस्यपूर्वोक्तस्यकर्म्मतत्फललक्षणस्यसंसारस्यमूलंस्यादिति
हेतोस्तस्याज्ञानस्यहानमात्यंतिकोपरमइष्यतेयत्नेनसंपादनी
यतयाभिप्रेयतेमूलोन्मूलनमंतरेणप्ररोहाविच्छेदादित्यर्थः ॥ त
रतिशोकमात्मवित् यदाचर्मवदाकाशंवेष्टयिष्यंतिमानवाः ॥
तदादेवमविज्ञायदुःखस्यांतोभविष्यति ॥ ज्ञानेनतुतदज्ञानंये
षांनाशितमात्मनः॥ तेषामादित्यवज्ज्ञानंप्रकाशयतितत्परमि
त्यादिश्रुतिस्मृतिभ्योपतोविद्यैवाज्ञानहानहेतुरवगतातोब्रह्मावि
द्यारब्धाऽततोब्रह्मविद्ययानिःश्रेयसंकैवल्यंभवेत्तदुदयेनान्तरी
यकतयाज्ञाननिवृत्तौकेवलात्मस्वरूपावस्थानरूपोमोक्षोलब्ध
इवभवेदित्यर्थः ॥ ५ ॥ ॥ ॥ ॥ ॥

विद्यैवाज्ञानहानाय न कर्माप्रतिकू
लतः ॥ नाज्ञानस्याप्रहाणे हि रागद्वे
षक्षयो भवेत् ॥ ६ ॥ ॥छ॥

ननुकर्मणांविचित्रशक्तित्वाद्धिरण्यदा अमृतत्वंभजंतइत्यादिश्रुतेश्च कर्मणैवहिसंसिद्धिमास्थिताजनकादय इत्यादिस्मृतेश्च कर्मभिरेवमोक्षसिद्धेःकथम्तंब्रह्मविद्ययेतिशंकामपाकुर्वन्ननन्तरोक्तमर्थमुपपादयतिद्वाभ्याम्॥विद्यैवेति ॥ संसारमूलाज्ञानहानायविद्यैवसमर्थेत्यध्याहारः॥एवकारार्थमाह नकर्मेति॥तत्रहेतुरप्रतिकूलतइत्यविरोधादित्यर्थः॥विद्यैवप्रकाशरूपत्वादप्रकाशरूपामाविद्यांतत्कार्यंचनिवर्त्तयति यथारज्ज्वावरणाविद्यांतमसितत्कल्पितसर्पाद्याकारंचरज्जुतत्त्वज्ञानप्रदीपोनिवर्तयतःस्वभावविरोधात् कर्मतुनाज्ञानतमोनिवर्तकंतदविरोधित्वादप्रकाशात्मकत्वाद्वा नाहीरस्तोमवदित्याद्यनुमानैर्नान्यःपंथाविद्यतेयनाय इत्यादिश्रुतिभिश्चविरोधाद्धिरण्यदाइत्यादावापेक्षिकममृतत्वंपर्यवस्यति कर्मणैवहीतिस्मृतिःनकर्मणानप्रजयेतिश्रुतिविरोधेऽन्यपरेत्यतोनतद्बलात्कर्मभिरज्ञानहानशंकेत्यभिप्रायः॥विद्यांविनाऽज्ञानक्षयाभावश्चेदज्ञानक्षयार्थमेवाविद्यान्विष्यतांतत्कार्यस्यतुपरमार्थत्वाद्विद्ययानाशानुपपत्तेस्तन्नाशेहेत्वन्तरमन्वेषणीयमित्यत आह नाज्ञानस्येति॥अज्ञानास्याप्रहाणेरागादिक्षयोनस्यादविवेकपूर्वकत्वस्यरागादावन्वयव्यतिरेकसिद्धत्वादज्ञानमयारागादयोनपरमार्थाइत्यज्ञाननिवृत्त्यैवनिवर्तंतइतिनतत्रहेत्वंतरान्वेषणेत्यर्थः ॥ ६ ॥

रागद्वेषक्षयाभावे कर्म दोषोद्भवं ध्रुवम् ॥ तस्मान्निःश्रेयसार्थाय विद्यैवात्र विधीयते ॥ ७ ॥ ॥ ७ ॥

रागाद्यनिवृत्तौकाहानिरितितत्राह रागद्वेषेति ॥ दोषारागद्वेष मोहास्तदुद्भवंतद्धेतुकंकर्मध्रुवंपुनःस्यादेवेति पुनःसंसारोदुर्वारइत्यर्थः ॥ उपपादितमर्थमुपसंहरति तस्मादिति ॥ अत्रेति वेदांतोक्तिर्विधीयते प्रकाश्यतइत्यर्थः ॥ ७ ॥

**ननु कर्म तथा नित्यं कर्तव्यं जीवने सति ॥ विद्यायाः सहकारित्वं मोक्षं प्रति हि तद्व्रजेत् ॥ ८ ॥ ॥ छ ॥**

तदेवमज्ञानमूलत्वात्संसारस्यज्ञानमेवतन्निवर्तकंमोक्षहेतुर्न कर्मइत्युक्तं तत्रयदिकर्मणांस्वातंत्र्येणमोक्षहेतुतानसंभवेत्तर्हि ज्ञानेनसमुच्चयेसतितद्धेतुतास्यादितिसमुच्चयवादिमतमुत्थापयति ननुकर्मेति॥नहिकश्चित्क्षणमपिजातुतिष्ठत्यकर्मकृत् कार्यते ह्यवशःकर्मसर्वःप्रकृतिजैर्गुणैरितिस्मृत्युक्तन्यायेनावशेनापिजीवतापुरुषेणकर्मकर्तव्यमेव विद्यायथातथानित्यंकर्मावश्यंकर्तव्यंयावज्जीवमित्यादिश्रुतिविहितत्वादित्यर्थः॥उपयोगाभावान्मुमुक्षुणानित्यंकर्मनकर्तव्यमित्यतआह विद्यायाइति ॥ विद्याया मोक्षंप्रतिकारणभूतायाःसहकारित्वमितिकर्तव्यभावं हियस्मात्कर्मव्रजेत्प्राप्नुयादतस्तत्कार्यंमुमुक्षुणेत्यर्थः ॥ विद्ययामृतमश्नुतइतितृतीययाज्ञानस्यमोक्षकरणत्वावगमात्करणस्यचेतिकर्तव्यतासापेक्षत्वादन्यस्यचेतिकर्त्तव्यस्यात्राऽभावात्कर्मभिरेवप्रयाजादिभिर्दर्शादीवफलोपकार्यंगैर्ज्ञानंसमुच्चीयतइतिभावः॥८

**यथा विद्या तथा कर्म चोदितत्वावि**

शेषतः ॥ प्रत्यवायस्मृतेश्चैव का
र्यं कर्म मुमुक्षुभिः ॥९॥ ॥छ॥

कर्मणाबध्यतेजन्तुर्विद्ययाचाविमुच्यते ॥तस्मात्कर्मनकुर्वंति यतयःपारदर्शिन इत्यादिस्मृतेर्मुमुक्षुभिः कर्म्मनकर्त्तव्यमिति चेत्तत्राह यथाविद्येति ॥ यथाविद्यामुमुक्षुभिःकार्यातथाकर्मापि कर्त्तव्यं कुतः विद्यांचाविद्यांचयस्तद्वेदोभयंसहेतिसमुच्चयावि धिनाअविशेषेणचोदितत्वादित्यर्थः ॥ किंच अकुर्वन्विहितंकर्म निंदितंचसमाचरन्॥प्रसंजंश्चेंद्रियार्थेषुनरःपतनमृच्छति ॥ इत्य ननुष्ठानेप्रत्यवायस्मृतेश्चकर्मकार्यमित्यर्थः॥तथाचोदाहृतश्रुति स्मृतिविरोधेतस्मात्कर्मनकुर्वंतियतयइतीयमपस्मृतिर्ज्ञानप्रशं सार्थावाभविष्यतीतिभावः ॥ ९ ॥

ननु ध्रुवफला विद्या नान्य त्किंचि
दपेक्षते ॥ नाग्निष्टोमो यथैवान्य
द्ध्रुवकार्योप्प्यपेक्षते ॥ १० ॥ ॥

अत्रसिद्धांती विद्यायाःसहकार्यपेक्षितत्वमुक्तमाक्षिपति न न्विति ॥ ब्रह्मविद्यासहकारिनिरपेक्षाध्रुवफलत्वाद्घटादिज्ञानव दित्यर्थः ॥ पूर्ववादीव्यभिचारेणपरिहरति नेति ॥ अवश्यंभावि फलोप्प्यग्निष्टोमोयथोद्गीथशास्त्रादितद्गतदेवताज्ञानसहकारिकर्मा पेक्षतेतथाविद्यापीत्यर्थः ॥ १० ॥

तथा ध्रुवफला विद्या कर्म नित्यम

पेक्षते ॥ इत्येवं केचिदिच्छंति
न कर्म प्रतिकूलतः ॥ ११ ॥

पूर्वपक्षमुपसंहरति इत्येवंकेचिदिच्छंतीति॥सिंद्धांतंवक्तुमुपक्रमते नेत्यादिना॥विद्यास्वकार्येनकर्मापेक्षतेतत्प्रतिकूलत्वात्तद्विरोधित्वादितियावत् नहिस्वप्रतिकूलःस्वसहायोभवति माभूत्तिमिरंतेजसःसहायभूतमित्यर्थः ॥ ११ ॥

विद्यायाः प्रतिकूलं हि कर्म स्यात्सा
भिमानतः ॥ निर्विकारात्मबुद्धिश्च
विद्येतीह प्रकीर्तिता ॥ १२ ॥

कर्मणोविद्याप्रतिकूलत्वमुक्तंसाधयति विद्यायाइत्यर्द्धेन॥हिशब्दःप्रसिद्धिद्योतकः साभिमानतइतिब्राह्मण्याद्यभिमानसहितपुरुषनिर्वर्त्यत्वात्कर्मणोविद्यायाश्चकूटस्थात्माकारतयाजात्याद्यभिमानहीननिष्ठत्वात्प्रसिद्धोविद्याकर्मणोर्विरोधइत्यर्थः ॥हिशब्दद्योतितांप्रसिद्धिमुपपादयति निर्विकारेति॥नाहंकर्त्ताभोक्ताकिंतुकूटस्थंब्रह्मैवास्मीत्येवमात्माकारांतःकरणवृत्तिर्विद्येतिइहवेदांतेषुविद्वद्भिःप्रकर्षेणोक्तेत्यर्थः॥कर्मत्वहंब्राह्मणोस्यकर्मणःकर्त्ताममेदंकर्मसाध्यंफलंभाविष्यतीत्यभिमानपूर्वकंप्रवर्ततइतिप्रत्यक्षमतःस्फुटोविरोधइत्यर्थः ॥ १२॥

अहं कर्त्ता ममेदं स्यादिति कर्म प्रव

र्त्तते॥वस्त्वधीना भवेद्विद्या कर्त्र धीनो भवेद्विधिः ॥ १३ ॥

ज्ञानकर्मणोरंतर्मुखत्वबहिर्मुखत्वाभ्यांप्रवृत्तितोविरोधमुक्त्वो त्पत्तितोविरोधमाह वस्त्वधीनेति॥प्रमाणवस्त्वधीनाविद्यायथा प्रमाणंयथावस्तुचजायतेनतत्रपुरुषस्वातंत्र्यंसंभवतीत्यर्थः॥वि धिर्विधेयंकर्म कर्त्रधीनं पुरुषेणकर्त्तुमकर्तुमन्यथावाकर्त्तुंशक्य मतःपुरुषस्वातंत्र्यास्वातंत्र्यरूपविरुद्धहेतुजन्यत्वान्नकर्मज्ञान योःसमुच्चयइत्यर्थः ॥ १३ ॥

कारकाण्युपमृद्नाति विद्या बुद्धिमि वोखरे ॥ इति तत्सत्यमादाय कर्म कर्त्तुं व्यवस्यति ॥१४॥ ॥छ॥

किंचविद्यायांसत्यांकर्मणोनिराश्रयतयास्वरूपालाभान्नज्ञा नसहकारितेतिविध्यंतरेणविरोधमाह कारकाणीति॥उखरदेशे जातामुदकबुद्धिंयथोखरस्वभावावलंबिनीविद्योपमृद्नातितथा त्मन्यविद्याध्यस्तकारकबुद्धिमात्मस्वभावावलंबिनीविद्योपमृ द्नात्येवेत्यर्थः ॥ इतितत्सत्यमित्यर्द्धश्लोकःपूर्वेणैवान्वेति ॥ उप मृद्नातीतियतोतस्तत्कारकजातंसत्यमादायकर्मकर्तुंज्ञानीकथं व्यवस्यतीति कथंशब्दाध्याहारेणायंयोजनीयः ॥ १४ ॥

विरुद्धत्वादतः शक्यं कर्म कर्तुं न वि

घया ॥ सहैव विदुषा तस्मात्कर्म
हेयं मुमुक्षुणा ॥ १५ ॥ ॥ छ ॥

विरुद्धत्वकृतसमुच्चयासंभवेफलितमाह विरुद्धत्वादिति ॥ अतोविरुद्धत्वादितिसामानाधिकरण्यं विद्ययासहकर्मकर्तुंविदुषानशक्यमेवेत्यन्वयः ॥ समुच्चयनिराकरणफलमाह तस्मादिति ॥ १५ ॥

देहाद्यैरविशेषेण देहिनो ग्रहणं निज
म्॥प्राणिनां तदविद्योत्थं तावत्कर्म
विधिर्भवेत् ॥ १६ ॥ ॥ छ ॥

ननुज्ञात्वाकर्मसमाचरेदित्यादिवचनात्स्वर्गकामादिविध्यन्यथानुपपत्तेश्चदेहादिव्यतिरिक्तात्मज्ञानवतःकर्मानधिकारात् ज्ञानकर्मणोर्विरोधेचतदयोगादधिकार्यभावेनकर्मकाण्डस्याप्रामाण्यंप्राप्तमित्याशंक्य कर्मस्वरूपभेदांगविशेषप्रयुक्तक्रमाधिकारादिविशेषज्ञानस्यदेहादिव्यतिरिक्तात्मज्ञानस्यच कर्मविशेषाधिकारिण्यपेक्षितत्वेऽपिनपरमात्मतत्त्वज्ञानंतत्रापेक्ष्यतेऽनुपयोगादधिकारिविरोधाच्चेत्यभिप्रेत्यसमाधत्ते देहाद्यैरिति ॥ यद्वा यद्यौपनिषदंज्ञानंकर्म्मकारकभेदोपमर्दकंस्यात्तदा ज्ञानकांडेन कर्मकाण्डस्यनिर्विषयीकरणाद्बाधितविषयंकर्मकाण्डमप्रमाणं स्यात्तच्चानिष्टं स्वाध्यायाध्ययनविधिविरोधादित्याशंक्य किमात्मतत्त्वज्ञानात्प्रागूर्ध्वंवातदप्रामाण्यापत्तिरितिविकल्प्याद्यंनिरा

करोति देहाद्यैरिति॥देहिन आत्मनोदेहाद्यैरिंद्रियमनोबुद्धिप्राण तद्धर्मैरविशेषेणाविवेकेनग्रहणं तद्विशिष्टतयैवात्माभिमानरूपं निजंस्वाभाविकंनयोषिदादावग्न्यादिभावबुद्धिवद्विध्यधीनं यदेवंविधम्प्राणिनामात्मज्ञानं तदविद्योत्थमनाद्यज्ञानजभ्रान्तिसंस्कारोत्थं सर्वसाधारणत्त्वाद्यावदेवं ब्राह्मणोहं ग्रहस्थोहं सकलेंद्रियवानहं सकामोबलवानित्यादिज्ञानमनुवर्तते तावत्कर्मविधिः कर्मकांडंप्रमाणंभवेदित्यर्थः॥प्रमितिजनकंहिप्रमाणंभवति अधिकारिणश्चप्रमितिजनकोवेदोनानधिकारिणइतिस्थिते कर्मप्रवृत्तिपर्यन्तम्प्रमितिजनकस्य विधिकांडस्योक्ताधिकारिलाभान्नब्रह्मात्मतत्त्वविद्योदयात्प्रागप्रामाण्यप्राप्तिरितिनाध्ययनविधिविरोधइतिभावः ॥ १६ ॥

## नेतिनेतीति देहादीनपोह्यात्मावशेषितः ॥ अविशेषात्मबोधार्थं तेनाविद्या निवर्त्तिता ॥ १७ ॥ ॥

द्वितीयंविकल्पमिष्टापत्त्याप्रत्याचष्टे नेतीति ॥ नेतिनेतीति वीप्सार्थयाश्रुत्यादेहादीन्मिथ्यादृष्ट्यात्मात्मीयभावेनगृहीतानशेषानपोह्य प्रतिषिध्य प्रतिषेधाऽवधिभूतआत्मावशेषितःसत्यस्यसत्यमित्यादौ किमर्थमित्यतआह अविशेषात्मबोधार्थमिति ॥ अविशेषश्चासावात्माचेतितथा तस्यबोधोनिर्विशेषचित्सदानंदस्वभावाविर्भावस्तदर्थमित्यर्थः ॥ परागर्थेष्वपोहितेषुतदवधित्वेनप्रत्यगर्थएवावशिष्यतइतिप्रत्यक्तत्त्वबोधार्थमित्युक्तं भवति ॥ बोधेसतिकिंस्यात्तदाह तेनेति ॥ यन्निबंधनोदेहादावा

त्माभिमानःकर्माधिकारहेतुःसाऽविद्यातेनबोधेननिवर्तिताबाधितेत्यर्थः ॥ अतोनिमित्ताभावान्नैमित्तिकाभावइतिन्यायेनात्मतत्त्वज्ञानवतोनकर्मविधिप्रतिपत्तिरितितम्प्रातिफलवद्विज्ञानजनकत्वाभावात्कर्मकाण्डस्यतदानीमप्रामाण्यमिष्टमेव निवृत्ततीव्रक्रोधंप्रत्यभिचारविधिशास्त्रवदितिसर्वमनवद्यं ॥ १७॥

**निवृत्ता सा कथं भूयः प्रसूयेत प्रमाणतः ॥ असत्येवाविशेषेपि प्रत्यगात्मनिकेवले ॥ १८ ॥ ॥छ॥**

ननुनिर्विशेषात्मबोधेनसकृन्निवर्तिताप्यविद्यापुनरुद्भविष्यतिततःकर्म्माधिकारहेतुसंभवात्कर्मविधिःस्याच्छुक्तितत्त्वावगमात्तदज्ञाननिवृत्तावपिपुनस्तत्रसमयांतरेरजतभ्रमोदयोपलम्भादित्याशंक्याह निवृत्तेति ॥ प्रमाणतोनिवृत्ताप्रमाणाग्निनादग्धासाऽविद्याभूयःपुनःकथंप्रसूयेतजायेत नहिमृतादग्धाचभार्यापुनःप्रसवायोद्भवतितद्वदित्यर्थ॥ःअविद्यांतरंजायेतेतिचेत्तत्रवक्तव्यंकिंनिर्निमित्तंजायेतनिमित्ताद्वा नाद्यःअकारणकार्योत्पत्तावतिप्रसंगात्द्वितीयेकिमात्मानिमित्तमनात्मावानाद्यइत्याह असत्येवेति॥अविशेषेकेवलेइत्यनयोर्व्याख्यानव्याख्येयभावः ॥ यद्वाऽविशेषइत्युक्तेमूर्त्यादिकतिपयविशेषाभावेपिविशेषांतरशंकास्यादतउक्तंकेवलइतितावत्युक्तएकाकिनोप्यात्मनः प्रयत्नादिगुणयोगित्वविशेषशंकास्यात्तन्निवृत्तयेऽविशेषइत्युक्तं तथाचाविशेषेकेवलेप्रत्यगात्मनिसर्वांतरेपरमार्थवस्तुनिसाऽविद्याऽसतीएवनसत्तांलभते असहायस्यात्मनःकूटस्थस्यकर्तृत्वानुपप

तेः अविद्यांतरसहायाभ्युपगमेचान्योन्याश्रयोऽनवस्थावाप्रस ज्येतेत्यर्थः॥ अपिशब्देनपक्षांतरंनिरस्यते अनात्मन्यप्यसत्ये वसाऽविद्याकार्यस्यानात्मनोऽविद्याहेतुत्वानुपपत्तेरित्यर्थः॥ शु क्तिकादौतुरजतादिविक्षेपोपादानांशस्यैवाविद्याशक्तिभेदस्यज्ञा नेननिवृत्त्यभ्युपगमात् मूलाज्ञानस्यताहृगनंतशक्तिमतोविद्य मानत्वात्तद्वशात्पुनर्भ्रांत्युदयोपपत्तेर्दृष्टांतोविषमइतिद्रष्टव्यं१८॥

न चेद्भूयः प्रसूयेत कर्त्ता भोक्तेति धीः कथम्॥ सदस्मीति च विज्ञाने तस्माद्विद्याऽसहायिका॥ १९॥

अविद्यायाःपुनरनुद्भवसाधनफलमाह नचेदितिपादत्रयेण॥ सदेवब्रह्मैवाऽहमस्मीतिविज्ञानेविशिष्टज्ञानेऽपरोक्षानुभवेसाति भूयःपश्चान्नचेदविद्याप्रसूयेतेतिकर्त्ताभोक्तेतिधीःकर्माधिकारनि मित्तभूताकथंस्यान्नस्यादेवेत्यर्थः॥चकारःकर्तृत्वादेःपारमार्थिक त्वशंकानिवृत्त्यर्थः कर्तृत्वादेःपारमार्थिकत्वेविद्यानिवर्त्यत्वायो गादनिर्मोक्षप्रसंगइतिभावः॥ज्ञानकर्मसमुच्चयनिराकरणमुपसं हरति तस्मादिति॥यस्माद्विद्यायामुत्पन्नायांकर्मासंभवःसिद्धस्त स्माद सहायाकेवलैवविद्याकैवल्यहेतुरित्यर्थः ॥ १९ ॥

अत्यरेचयदित्युक्तो न्यासः श्रुत्यात एव हि॥कर्मभ्यो मानसांतेभ्य एतावदिति वाजिनां॥२०॥अमृतत्वं श्रुतं यस्मात्त्याज्यं कर्म मुमुक्षुभिः॥

विद्यायाःसहकारिनिरपेक्षत्वेनैवमोक्षहेतुत्वमितियुक्त्योक्तेर्थे श्रौतंलिंगमुपोद्बलयति अत्यरेचयदिति।तैत्तिरीयोपनिषत्सुसत्यं परंपरंसत्यमित्युपक्रम्य सत्यंतपआदिमानसांतानिकर्माणिश्रेयःसाधनत्वेननिर्दिश्य तानिवाएतान्यवराणितपांसीतितेषांफल्गुफलत्वेननिंदामभिधाय न्यासइतिब्रह्मेत्युक्तोन्यासएवात्यरेचयदितितत्त्वज्ञानांतरंगभूतःसंन्यासःस्तूयते तस्मान्निंदितस्याऽनुपादेयत्वात्स्तुतस्यचोपादेयत्वात्कर्मसापेक्षत्वेमोक्षस्यसंन्यासविधानानुपपत्तेःससंन्यासमात्मज्ञानमेवमोक्षसाधनंगम्यतइत्यर्थः॥अतएवहीति।ज्ञानस्यस्वफलेकर्मनिरपेक्षत्वादेवेत्यर्थः। लिंगांतरमाह एतावदिति॥वाजिनाममृतत्वंश्रुतमिति वाजसनेयिनामुपनिषत्सु आत्मनिखल्वरेदृष्टेश्रुतेमतेविज्ञातइदंसर्वंविदितमित्युपक्रम्याद्वयमात्मतत्त्वंदुंदुभ्यादिदृष्टांतप्रबंधेनोपपाद्योक्तानुशासनासिमैत्रेय्येतावदरेखल्वमृतत्वमितिज्ञानस्यैवामृतत्वसाधनत्वावधारणंश्रुतं तस्यकर्माऽनपेक्षायांलिंगमन्यथैतावदित्यवधारणार्थवचनानुपपत्तेरित्यर्थः॥ अमृतत्वस्यतुनाशोस्ति वित्तेनेतिचतत्रोक्तोवित्तसाध्यस्यकर्मणोऽमृतत्वसाधनत्वाभावे लिंगमनुसंधेयं नचाविद्यांचाविद्यांचेतिसमुच्चयविधानविरोधःतस्यदेवतोपासनज्ञानकर्म्मसमुच्चयविषयत्वादन्यथाहिरण्मयेन पात्रेणअग्नेनयसुपथेतिचमार्गयाचनाद्यनुपपत्तेरितिसर्व्वमनवद्यं ॥नकर्मणानप्रजयाधनेनत्यागेनैकेअमृतत्वमानशुः त्यागएवहिसर्वेषांमोक्षसाधनमुत्तमम् त्यजेतैवहितज्ज्ञेयंत्यक्तुःप्रत्यक्परंपदमित्यादिशास्त्राद्यस्मात्त्यागोपलक्षितमात्मज्ञानमेवमुक्तिसाधनंतस्मादितिप्रकृतार्थमुपसंहरति ॥ तस्मात्त्याज्यंकर्ममुमुक्षुभिःसाधनचतुष्टयसंपन्नैरात्मतत्त्वजिज्ञासुभिरित्यर्थः ॥विविदिषोरपिनास्तिकर्मावसरःकुतोविदुषइत्यभिप्रायः ॥ २० ॥

अग्निष्टोमवदित्युक्तंतत्रेदमभिधीयते २१

अत्रार्द्धश्लोकोधिकःप्रागुक्ताधिकार्धेनसंख्येयः॥तदेवंमुमुक्षुणासर्वकर्म्मसंन्यासपूर्वकज्ञाननिष्ठेनभवितव्यमितिन्यायेनोपपाद्येदानींपरोक्तदृष्टांतमनूद्यदूषयाति अग्निष्टोमवदिति अर्द्धश्लोकेन ॥ २१ ॥

नैककारकसाध्यत्वात्फलान्यत्वा
च्च कर्मणः ॥ विद्या तद्विपरीताऽतो
दृष्टांतो विषमो भवेत् ॥ २२ ॥

दूषणमुच्यतइतिप्रतिज्ञायश्लोकेनदूषणमाह नैकेति ॥ कर्मणोऽग्निष्टोमादेरनेककारकसाध्यत्वान्नियतद्रव्यमन्त्रतन्त्रप्रयोगसाध्यत्वादितियावत् तथाफलान्यत्वात्फलभेदवत्त्वाद्यदेवविद्ययाकरोतिश्रद्धयोपनिषदातदेववीर्यवत्तरम्भवतीतिश्रुतेर्विद्याद्वारावीर्यवत्तरफलविशेषसंभवाच्चयुक्तासहकार्यपेक्षेत्यर्थः॥नैवंविद्यायाइत्याह विद्येति॥तद्विपरीता कर्मस्वभावविपरीतस्वभावेतियावत् ॥यथावस्त्वधीनप्रमाणनिबंधनायाःनिरतिशयमोक्षैकफलायाःविद्यायाःनसहकार्यपेक्षायुक्तेत्यर्थः। यतएवंस्वभावभेदःकर्मविद्ययोरतोग्निष्टोमदृष्टांतोविषमोदार्ष्टांतिकाननुरूपोभवेदित्यर्थः ॥ २२ ॥

कृष्यादिवत्फलार्थत्वादन्यकर्मोप
बृंहणम् ॥ अग्निष्टोमस्त्वपेक्षेत वि
द्यान्यत्किमपेक्षते ॥ २३ ॥ छ ॥

वैषम्यमेवोपपादयति. कृष्यादिवदिति॥अग्निष्टोमःसातिशयः साध्यफलार्थत्वादन्यकर्मोपबृंहणमन्यैःकर्मभिःसहकारिभिर्विहितोद्गीथाद्यंगसंश्रितोपासनादिरूपैरुपचयमपेक्षेतेतियोजना तत्रदृष्टांतःकृष्यादिवदिति कृषिवाणिज्यादौफलोपचयार्थंसाधनविशेषोपचयःप्रसिद्धइत्यर्थः ॥ विद्यातुनिरतिशयफलत्वादन्यत्सहकारिभूतंकिंवस्त्वपेक्षतेनकिमपीत्यर्थः ॥ २३ ॥ ॥

**प्रत्यवायस्तु तस्यैव यस्याहंकार इष्यते॥अहंकारफलार्थित्वे विद्येते नात्मवेदिनः ॥ २४ ॥ ॥ छ ॥**

यदुक्तमकुर्वन्विहितंकर्मेतिप्रत्यवायस्मृतेश्चेतितत्राह प्रत्यवायास्त्विति ॥अस्यकर्मणोहंकर्त्ताएतत्कृत्वेदंफलंभोक्ष्यइति यस्याहंकारइष्यते इष्टोभवति स्वाभाविकोवर्ततइतियावत् ॥तस्याधिकृतस्य विहिताकरणेप्रत्यवायोभवेदित्यर्थः॥ आत्मवेदिनआत्मतत्त्वज्ञाननिष्ठस्यतुअहंकारफलार्थित्वेनाविद्येते विषयाभावादतोनिमित्ताभावान्नप्रत्यवायस्तस्येत्यर्थः ॥ २४॥ ॥

**तस्मादज्ञानहानाय संसारविनिवृत्तये ॥ ब्रह्मविद्याविधानाय प्रारब्धोपनिषत्त्वियम् ॥ २५॥ ॥**

विद्यैवाज्ञानहानायनकर्माप्रतिकूलतइत्युपक्रम्येयताग्रंथेन कर्मणःस्वातंत्र्येण वा ज्ञानसहकारितया वा सर्वथानसाक्षान्मोक्षहेतुत्वमस्तीत्युपपाद्य ब्रह्मविद्यामथेदानींवक्तुंवेदःप्रचक्रम इ

तिपरमप्रकृतमुपसंहरति तस्मादिति॥विद्यायाः कर्मनिरपेक्षित्वं तच्छब्दार्थः अज्ञानहानायानाद्यज्ञाननिरासससिद्धयेऽपेक्षितब्रह्म विद्यांविधातुंसंपादयितुमियम्परोपनिषत् वेदान्तभागः प्रारब्धे तियोजना अज्ञानहानस्यविशेषणं संसारविनिवृत्तयइति संसा रस्यविनिवृत्तिःसम्यक्निवृत्तिर्यस्मादितिविग्रहः +अक्लीबत्व मार्षं अत्रोपनिषच्छब्दःलक्षणयावेदांतग्रंथेषुप्रयुक्तः ॥ २५ ॥

**सदेरुपनिपूर्वस्य क्विपि चोपनिष द्भवेत् ॥ मंदीकरणभावाच्च गर्भादेः शातनात्तथा ॥ २६ ॥ ॥ ॥**

तर्हिकोस्यमुख्योर्थइतिवीक्षायांब्रह्मविद्यायांशब्दसामर्थ्यं दर्शयन्नुपनिषच्छब्दव्युत्पादनेनापिस्वतंत्रैवविद्यामोक्षहेतुरिति सूचयति॥सदेरिति षद्लृविशरणगत्यवसादनेष्वितिधातोरुपनी त्युपसर्गद्वयपूर्वकस्यक्विप्प्रत्ययांतस्योपनिषदितिरूपं अस्त्यत्र धात्वर्थत्रयं तथाहि॥येमंदब्रह्मविदस्तेषांगर्भजन्मजरादिकमुप निषादयतिशिथिलीकरोतीत्युपनिषदित्येकोर्थः॥जिज्ञासोश्चोप समीपेनिश्चयेनब्रह्मगमयतीतिद्वितीयः॥ तत्त्वविदांतुगर्भादिना शयत्येवेतितृतीयः॥एवंसम्यग्धात्वर्थयोगाद्विद्यैवोपनिषच्छब्द वाच्या तादर्थ्याद्ग्रंथोप्युपनिषदुच्यते लांगलंजीवनमितिवदि त्यर्थः ॥ २६ ॥ ॥ इत्युपोद्घातप्रकरणं १ प्रथमंविवृतम् ॥ चैतन्यप्रकरणमितिटीकांतरे ॥

**प्रतिषेद्धुमशक्यत्वान्नेतिनेतीति**

---

+ तृतीयादिष्वितिपुंवद्भावइतिपरे

शेषितम् ॥ इदं नाहमिदं नाहमि
त्यद्धा प्रतिपद्यते ॥ १ ॥

तदेवंमुमुक्षोर्मोक्षसाधनब्रह्मात्मविद्याप्रतिपत्तयेवेदांतारंभ उपपद्यतइतिस्थितेपुनराशंक्यते ॥ ननुविद्योदयायवेदांतारंभस्तदोपपद्यतेयदिविद्योदयःसंभाव्येत सइहात्मनिसंसारित्वग्राहकप्रत्यक्षादिविरोधाद्वाक्यशतेनापिनोत्पादयितुंशक्यते॥असंजातविरोधितयाप्रत्यक्षादेर्बलवत्त्वात्तदुपजीविनश्चागमस्यदुर्बलत्वात्कथंचिदुत्पन्नापिविद्यायदिप्रमाणसिद्धंसंसारंबाधेत तर्हि प्रत्यगात्मनोपिब्रह्मरूपत्वंकथंप्रत्यक्षानुभवोनबाधेतेतिअतउत्तरंवदति प्रतिषेद्धुमिति नेतिनेतीतिवीप्सयासकलदृश्यप्रतिषेधेशेषितमुर्वरितंयदात्मतत्त्वन्तत्प्रतिषेधावधित्वेनप्रतिषेद्धुःस्वरूपत्वेनप्रतिषेधसाक्षितयावस्थितंयतोतःप्रतिषेद्धुमशक्यत्वादद्धासाक्षात्प्रतिपद्यते निःसंदिग्धमुपलभ्यतेइतियोजना ॥ उपलंभप्रकारमभिनयति इदमिति ॥ इदंदेहस्वरूपंनाहमात्मा इदमिंद्रियजातंमनोबुद्धिप्राणतदुपादानाचेतनपर्यंतंनाहं किंत्वेषांप्रकाशकमव्यभिचारिस्वयंप्रकाशकूटस्थमक्षरम् यस्मिन् सर्वजगदाश्रयोव्याकृताकाशओतश्चप्रोतश्चतदेवाहंपरममक्षरमितिप्रतिपद्यतइत्यर्थः ॥ अनेनविद्यानोदेतीत्येषाशंकानिराकृता ॥ प्रतिषेद्धुमशक्यत्वादित्यनेनतुयथाव्याख्यातेनबाधायोग्यत्वंदर्शितामितिविवेक्तव्यं ॥ १ ॥

अहंधीरिदमात्मोत्था वाचारंभण

गोचरा ॥ निषिद्धात्मोद्भवत्वात्सा नपुनर्मानतां व्रजेत् ॥२॥ ॥छ॥

नन्वहंब्रह्मेतिज्ञानमुक्तविधयोत्पन्नमपिनप्रतिष्ठांलभतेदेहेंद्रियाद्यभिमानस्यानवरतमनुवृत्तेरित्याशंक्य तस्यप्रमाणमूलत्वाभावाद्बाधितानुवृत्तिमात्रस्याऽभासत्वान्नविद्याप्रतिपक्षत्वमित्यभिप्रेत्यवाक्योत्थज्ञानस्यप्राबल्यमुपपादयति अहंधीरिति॥देहादावनात्मन्यात्मबुद्धिरहंधीरित्युच्यतेसाहंकर्तुरिदमंशात्पूर्वपूर्वाहंकारवासनावासितान्तःकरणरूपादिदमात्मनःसकाशादुत्थिताध्यासात्मिकेत्यर्थः॥स्वरूपतोस्यादौर्बल्यमुक्त्वाविषयभेदादपितदाह वाचारंभणगोचरेति ॥ निरूप्यमाणंस्वतःसत्ताहीनमपियदपरोक्षव्यवहारगोचरतयागम्यतेतद्वाचारंभणमनृतजडानात्मरूपंतदेवगोचरोविषयोयस्याःसा तथा यतएवमतोनेतिनेतीतिशास्त्रेणनिषिद्धोबाधितआत्मास्वरूपमुद्भवः कारणं यस्याःसानिषिद्धात्मोद्भवा तस्याभावोनिषिद्धात्मोद्भवत्वं तस्मादितिविग्रहः सापुनरिदंधीरात्मयाथात्म्यज्ञानानंतरंमानतांप्रमाणत्वंनव्रजेन्नलभेत अवस्तुत्वादवस्तुजत्वादवस्तुविषयत्वाच्च स्वप्नावस्थविशेषज्ञानवदित्यर्थः ॥ अतोवाक्योत्थज्ञानमेवप्रबलंनेतरदितिभावः ॥ २ ॥

पूर्वबुद्धिमबाधित्वा नोत्तरा जायते मतिः ॥ दृशिरेकः स्वयं सिद्धः फलत्वात्स न बाध्यते॥३॥ ॥छ॥

इदानींपौर्वापर्येपूर्वदौर्बल्यंप्रकृतिवदितिन्यायेनप्रथमोत्पन्ना याअपिकर्त्ताभोक्तेत्यादिधियउत्तरेणब्रह्मात्मज्ञानेनबाध्यत्वमुप पादयतिपूर्वबुद्धिमिति॥नशुक्त्यज्ञानजन्यांरजतबुद्धिमबाधित्वा शुक्तिधीरुत्तरोत्पद्यते एवंकर्त्रादिबुद्धिमबाधित्वानात्मतत्त्वज्ञान मुत्तरमुत्पद्यते अतःप्रसक्तनिषेधात्मकत्वाद्बाधस्यपूर्वसमयेउत्त रप्रसत्त्यभावान्नपूर्वेणोत्तरस्यबाधः किंतुपरेणपूर्वस्यप्रसक्तस्य बाधइत्यनवद्यंपदार्थबोधेशब्दस्यमानांतरसापेक्षत्वेपिनवाक्या र्थबोधेतदपेक्षा पदार्थबोधेपिव्यवहारमात्रस्यैवापेक्षत्वात्पूर्वबुद्धे र्व्यवहारांगत्वांशस्योत्तरेणात्मज्ञानेनाबाधनाच्च नोपजीव्यविरो धश्चेतिद्रष्टव्यं ॥किंचौपनिषदात्मज्ञानमेवतत्त्वावेदकमत्यंताबा ध्यार्थत्वादित्याह दृशिरिति॥ब्रह्मात्माकारांतःकरणवृत्तिप्रतिफ लितापरोक्षस्फूर्तिर्दृशिरित्युच्यते सचैकःपराभावेनोपलक्षितोऽ द्वितीयइतियावत्स्वयंसिद्धः परनिरपेक्षसत्तास्फूर्तिकःसनबाध्य ते उक्तैर्विशेषणैर्बाधायोग्यत्वावगमात्फलत्वान्नहिफलंबाध्यतेत स्यसर्वज्ञानसाधारणत्वात्सर्वव्यवहारहेतुप्रकाशत्वाच्चेत्यर्थः ॥ नित्यसिद्धस्याप्यस्यफलत्वंविषयाकारवृत्तिव्यक्तत्वापेक्षयोपच र्यतइतिभावः ॥ ३ ॥ ॥ ॥ ॥ ॥

**इदं वनमतिक्रम्य शोकमोहादिदूषि तम् ॥वनाद्गांधारको यद्वत्स्वात्मानं प्रतिपद्यते ॥ ४ ॥ ॥ ॥ ॥ ॥**

एवंब्रह्मात्मज्ञानस्यवाक्यादनुत्पत्तिशंकामुत्पन्नस्यप्राबल्योप पादनेनपूर्वप्रवृत्तप्रत्यक्षादिभिर्बाध्यार्थत्वशंकांचोन्मथ्येदानींक

थमिदमुत्पद्यतामितिवीक्षायांपदार्थपरिशोधनेनेतिश्रौतदृष्टांते नोपपादयति इदंवनमिति॥इदंशरीरमेववनमिववनंरागद्वेषशोकमोहादिभिर्व्याघ्रतस्करादिस्थानीयैर्दूषितमाक्रांतमतिक्रम्य दिङ्मात्रमाचार्यादवगम्यान्वयव्यतिरेकालोचनयापदार्थशोधनेनदेहादिकमनात्मतयात्यक्त्वास्वमात्मानंसर्वानुस्यूतमनपोह्यं प्रतिपद्यते अहंब्रह्मास्मीत्यौपनिषदंपुरुषमवगच्छतीत्यर्थः ॥ यथागांधारकोगंधारदेशवासीपुरुषोबद्धचक्षुरेवतस्करैरानीयमहावनेनिक्षिप्तःसबंधमोक्षार्थीतत्राक्रोशंकुर्वन्केनचित्कारुणिकेनोपलब्धस्तेनमोचितबंधोदर्शितस्वदेशमार्गोग्रामाद्ग्रामंपृच्छन् पंडितोमेधावीवनात्स्वदेशंप्रतिपद्यते तथायमपिसंसारीअविद्यारागादितस्करैर्मिथ्याज्ञानपटेनाविवेकदृष्टिमाच्छाद्यस्वदेशाद्देहारण्यंप्रवेशितोबंधमोक्षार्थीकदाचित्केनचित्कारुणिकेनाचार्येणब्रह्मविदात्याजितमिथ्यादृष्टिपटःप्रतिबोधितस्वदेशब्रह्ममार्गोन्वयव्यतिरेकाभ्यांस्वयमूहमानःस्वमात्मानमधिगच्छतीत्यर्थः ॥ ४ ॥ ॥ इतिआत्मज्ञानोत्पत्तिविधिप्रकरणं द्वितीयं विवृतम् ॥ २ ॥ प्रतिषेधप्रकरणमित्यन्यत्र ॥

## ईश्वरश्चेदनात्मा स्यान्नासावस्मीति धारयेत् ॥ आत्मा चेदीश्वरोऽस्मीति विद्या सान्यनिवर्तिका ॥ १ ॥

येयंब्रह्मविद्याप्रतिपादितातस्यांप्रकाशमानंब्रह्मकिंप्रत्यगात्मनोभेदेनप्रत्येतव्यंतदभेदेनवेतिद्वासुपर्णासयुजेत्यत्रभेदश्रवणादयमात्माब्रह्मेत्यभेदश्रवणाच्चसंदेहेनिर्णयकारणंश्रौतंदर्शय

न्वाक्यविषयमर्थंस्पष्टयति ईश्वरइत्यादिना ॥ ईश्वरोजगत्का
रणत्वेनोपलक्षितःपरमात्मासत्यज्ञानानंतानंदरूपःसचेदात्म
भिन्नोमेर्वादिवद्विषयभूतःपरोक्षोवास्यात्तदासावीश्वरोहमस्मी
तिमुमुक्षुर्नधारयेदात्मानं तत्त्वतोनप्रतिपद्येत ततस्तत्त्वमस्या
दिवचनविरोधःस्यादात्मेतिरूपंगच्छंतिग्राहयंतिचेतिन्यायविरो
धश्चस्यादित्यर्थः ईश्वरएवात्माहमस्मिनान्यइतिचेद्धारयेद्विजा
नीयात्तदानश्रुतिन्यायविरोधइतियोज्यं साविद्यातिरोहितभे
दाकारप्रत्यक्‌ब्रह्मैक्यावलंबिनीअन्यस्याअविद्यायानिवर्तिका
समूलसंसारनिवर्तिकेत्यर्थः ब्रह्मवेदब्रह्मैवभवतिब्रह्मैवसन्ब्र
ह्माप्येतीत्यादिश्रुतौब्रह्मज्ञानस्यब्रह्मभावफलश्रवणादन्यत्वप
क्षेस्थितस्यनष्टस्यवान्यस्यान्यभावानुपपत्तेरैक्यज्ञानमेवफलव
दितितत्रैवशास्त्रतात्पर्यंनभेदे तज्ज्ञानस्याफलत्वादन्योसावन्यो
ऽहमस्मीतिनसवेदेतिभेददर्शनस्यनिंदितत्वाच्चभेदश्रुतेस्त्वना
द्यविद्याकल्पितभेदानुवादपरत्वान्नस्वार्थेतात्पर्यमितिभावः१॥

आत्मनोऽन्यस्य चेद्धर्मा अस्थूलत्वा
दयो मताः ॥ अज्ञेयत्वेस्य किं तैः स्या
दात्मत्वे त्वन्यधीन्हुतिः ॥ २ ॥

इतश्चाभेदेवेदतात्पर्यमाह ॥ आत्मनइति ॥ अस्थूलत्वाद
योधर्माःप्रत्यगात्मनोऽन्यस्यभिन्नस्येश्वरस्यचेन्मताइष्टाःस्युस्त
दाऽस्येश्वरस्यानात्मभूतत्वादज्ञेयत्वेसति मुमुक्षोरस्थूलत्वादि
भिःश्रौतैर्धर्मैःकिंस्यान्नकिमपि स्थूलोहंकृशोहमित्यादिस्वगत
भ्रांत्यनिवृत्तेरित्यर्थः ॥ यदात्वस्थूलत्वादिधर्मकईश्वरोहमस्मी
तिज्ञायतेतदातस्याप्यात्मत्वेसतिप्रतीचोन्यधीन्हुतिःस्वात्मन्ये

वगृहीतायाःकृशस्थूलत्वादिधियोमोहमूलायाबाधसिद्धिः फलं स्यादित्यर्थः ॥ २ ॥

**मिथ्याध्यासनिषेधार्थं ततोऽस्थूलादि गृह्यताम् ॥ परत्र चेन्निषेधार्थं शून्यतावर्णनं हि तत् ॥ ३ ॥**

कस्मिन्नाकाशओतश्चप्रोतश्चेतिकार्यकारणात्मकजगदाश्रयप्रश्नोत्तरत्वेनाक्षरस्योपक्रमादेतस्यवाअक्षरस्यप्रशासनेगार्गिइतिजगदीश्वरतयामध्येपरामर्शाददृष्टंद्रष्ट्रित्यादिनातत्स्वभावकथनपूर्वकमंतेचैतस्मिन्नुखल्वक्षरेगार्ग्याकाशओतश्चप्रोतश्चेत्युपसंहारादीश्वरपरताब्राह्मणवाक्यस्याशेषस्यावधारितातत्रनान्यदतोऽस्तिद्रष्टृश्रोतृमंतृविज्ञात्रितिद्रष्टृत्वाद्युपलक्षितस्यप्रत्यगात्मनोक्षरब्रह्माभेदश्चावधारितइतीश्वरात्मनोरभेदएवशास्त्रार्थोयतस्तस्मात्प्रत्यगात्मन्यध्यस्तस्थूलत्वादिप्रतिषेधपरमिदंवाक्यमास्थेयमित्यभिप्रेत्याह मिथ्येति ॥ ततस्तस्मान्मिथ्याध्यासाज्ज्ञानमूलस्यनिषेधार्थंनिवृत्त्यर्थं अस्थूलादिप्रत्यगात्मविशेषणत्वेनगृह्यतां ॥ विपक्षेदोषमाह परत्रेति॥अस्थूलादिवाक्यं परत्रप्रत्यगात्मनोन्यत्रस्थूलत्वनिषेधार्थंचेत्स्यात्तदाहिनिश्चितं शून्यतावर्णनमेवतत्स्यादात्मनोन्यस्यजडत्वात्तस्यचस्थौल्यादिधर्मयोगान्निषेधांतःपातित्वेसतीश्वरस्यैश्वरत्वायोगान्निषेधमात्रपरमेववाक्यंस्यादित्यर्थः॥ तस्मादस्थूलादिधर्मकस्यानात्मत्वायोगादीश्वरमभ्युपगच्छतात्मैवसोभ्युपगंतव्यइतिभावः ॥३॥

**बुभुत्सोर्यदिचान्यत्र प्रत्यगात्मन**

इष्यते ॥ अप्राणोह्यमनाः शुभ्र
इति चानर्थकं वचः ॥ ४ ॥

किंच ॥ प्रत्यगात्मनोन्यत्रस्थूलत्वादिप्रतिषेधेचाप्राप्तप्रतिषेधोनिष्फलश्चापद्येतेतिदोषांतरमाह ॥बुभुत्सोरिति यदिप्रत्यगात्मनोबुभुत्सोरात्मतत्त्वंबोद्धुमिच्छोः संसारित्वेनाभिमतादात्मनइतियावत् तदन्यत्रदेहेंद्रियप्राणमनस्तद्धर्मनिषेधइष्यते तदाऽप्राणइत्यादिवचनमनर्थकंनिर्विषयंस्यादन्यत्रप्राणादिप्रसक्त्यभावात्प्रतिषेधस्यचदृष्टार्थत्वादित्यर्थः ॥ ४ ॥

इति ईश्वरात्मप्रकरणंतृतीयंविवृतं ॥ ३ ॥

अहंप्रत्ययबीजं यदहंप्रत्ययवत्स्थितं ॥
नाहंप्रत्ययवन्ह्युष्टं कथं कर्म प्ररोहति ॥ १

ननुयदिदमीश्वराभेदेनात्मनोज्ञानंमोक्षसाधनमुक्तंतन्नोपपद्यतेसंचितानेककर्मसद्भावात्कर्मणांचफलावश्यंभावनियमात्तैः प्रतिबंधसंभवादितितत्राह अहंप्रत्ययेति ॥अहमितिप्रत्ययोहंकारोऽनात्मन्यात्माभिमानलक्षणः सबीजंकारणंयस्यकर्म्मणस्तदहंप्रत्ययबीजं अहमितिप्रतीयतेआत्मायस्मिन्नंतःकरणेसाभासेतदहंप्रत्ययवत्तस्मिन्नहंप्रत्ययवतिस्थितंसंचितंयत्कर्मजातंतन्नाहंकर्त्ताभोक्ता किंतुब्रह्मैवाहमस्मीतियःप्रमाणजनितःप्रत्ययःसएववन्हिस्तेनोष्टंदग्धं कथंपुनःप्ररोहतिफलोन्मुखंजायेतेतियोजना ॥तथाचश्रुतिस्मृती क्षीयंतेचास्यकर्माणितस्मिन्दृष्टेपरावरे ॥ ज्ञानाग्निःसर्वकर्माणिभस्मसात्कुरुतेतथेति ज्ञानोदयेनांतरीयकतयामूलाज्ञानस्यविरोधादेवनिवृत्तिसंभवात्तदा

तत्कार्यांतःकरणस्यापिनिवृत्तेराश्रयाभावे कर्मस्थित्ययोगात्कुतस्तेनमोक्षप्रतिबंधशंकेत्यभिप्रायः ॥ १ ॥

**दृष्टवच्चेत्प्ररोहःस्यान्नान्यकर्मा स इष्यते ॥ तन्निरोधे कथं तत्स्या त्पृच्छामो वस्तदुच्यताम् ॥ २ ॥**

ननुयथाज्ञानवतोपिभिक्षाटनादिकर्मसफलमुपलभ्यते तथातस्यादृष्टफलमपिकर्मसफलंस्यादितिकल्प्यतइतिशंकते दृष्टवच्चेत्प्ररोहःस्यादिति परिहरति नान्यकर्मासइष्यतइति नेतिनिषेधार्थः॥सभिक्षाटनादिर्विदुषोव्यापारोऽन्यकर्मा अन्यत्रप्रवृत्तंफलंकर्मकारणंयस्यसोन्यकर्मासइष्यतेज्ञानाविरोधिप्रारब्धफलकर्मनिबंधनंहिभिक्षाटनादि नैवंविधिलक्षणं तस्यज्ञानाविरोधित्वादित्यर्थः ननुज्ञानादज्ञाननिवृत्त्यातन्मूलाहंकारनिवृत्तिद्वारेणतदाश्रयकर्मनिवृत्तौकथमारब्धमपिकर्मसिध्येद्यन्निमित्ताविदुषोभिक्षाटनादिकर्मप्रवृत्तिरितिपृच्छतिपूर्ववादी ॥ तन्निरोधइति कर्माश्रयःप्रथमतच्छब्दार्थःकर्मद्वितीयतच्छब्दार्थः॥२

**देहाद्यारंभसामर्थ्याज्ज्ञानं सद्विषयं त्वयि॥अभिभूय फलं कुर्यात्कर्मा ते ज्ञानमुद्भवेत् ॥ ३ ॥ ॥ ७ ॥**

उत्तरमाह देहादिति सद्विषयंप्रमाणजनितत्वेनप्रबलमपिब्रह्मात्मविषयंज्ञानंमभिभूय विदेहकैवल्यरूपात्फलात्प्रच्याव्य कर्मप्रारब्धफललक्षणं स्वफलं देहाभासजगदाभासरूपं

त्वयि ज्ञानवत्यापिकुर्यादेव ॥ कुतः देहाद्यारंभंप्रतिसमर्थत्वादं तेप्रारब्धकर्मफलभोगावसानेसति ज्ञानम् प्रतिबंधरहितम् समुद्भवेदुद्भूतंभवति ॥ वर्त्तमानकार्यसंपादकाऽविद्यालेशमप्यपबाध्य विद्वांसंस्वाराज्येस्थापयेदित्यर्थः ॥ ३ ॥

आरब्धस्य फले ह्येते भोगो ज्ञानं
च कर्मणः ॥ अविरोधस्तयोर्युक्तो
वैधर्म्यं चेतरस्य तु ॥ ४ ॥ ॥छ॥

ननुप्रारब्धकर्मवशाज्ज्ञानिनोऽपिभोगःस्यान्नत्वनारब्धकर्मतत्फलयोस्तस्मिन्नवस्थितिरिति कथमुपपद्येताज्ञानकार्यत्वाविशेषात्सर्वस्याऽज्ञाननिवृत्तौचपुनराश्रयाभावेनावस्थानाभावस्यसमत्वादित्याशंक्यविशेषमाह आरब्धस्येति ॥ भोगोज्ञानंचेत्येतेहियस्मादारब्धस्यकर्मणःफलेऽतस्तयोरविरोधोयुक्तइतरस्यत्वनारब्धफलस्यसंचितस्यक्रियमाणस्यवाकर्म्मणोवैधर्म्यंवैपरीत्यं विरोधएवेत्यक्षरार्थः ॥ अयंभावः ॥ ज्ञानंहिस्वकारणाज्जायमानंशरीरादिसापेक्षमेवजायते अशरीरस्यागंतुकज्ञानासंभवात् शरीरादिकंतुनज्ञानकारणादुत्पद्यते अन्यकारणस्यान्यहेतुत्वायोगात् अतःकैश्चित्कर्मविशेषैःशरीरविशेषे ज्ञानोत्पत्तियोग्ये स्वफलदानायारब्धेसति तमाश्रित्यज्ञानहेतुकर्माणिज्ञानमारभंतइत्यभ्युपगंतव्यम् तथाचारब्धेदेहेतद्भोगस्यावश्यंभावित्वाद्भोगप्रदकर्मारब्धशरीरमाश्रित्यस्वहेतुसमासादितंज्ञानं स्वफलमज्ञाननिवृत्तिंकुर्वदपिनसद्योभोगैकनाश्यदेहारंभककर्माक्षिप्ताविद्यालेशांनिवर्तयत्युपजीव्याविरोधित्वाभावा

दितिनारब्धफलकर्मज्ञानयोर्विरोधोऽनारब्धफलानांतुकर्मणा मकर्त्रात्मतत्त्वज्ञानोदयविरोधादेवकर्तृस्वभावनिवृत्तावाश्रया भावादभावोपपत्तेर्नज्ञानसहावस्थानमुपपद्यतइत्यस्तिविशेष इति ॥ ४ ॥

देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबा धकम् ॥ आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ॥ ततः सर्वमिदं सिद्धं प्रयोगोस्माभिरीरितः ॥५॥

ननु ज्ञानिनोऽपिचेद्भोगोदेहारम्भककर्मनिबंधनोऽस्ति तर्हि तस्य कदाचिद्देहात्माभिमानसम्भवात्तदुद्भूतदुरितप्रतिबंधवशा न्मोक्षानुपपत्तिरितिचेन्नेत्याह देहात्मज्ञानवदिति ॥ यथाविवेक विलक्षणस्यलौकिकस्यदेहे मनुष्योऽहमित्यात्मज्ञानं निःसंदि ग्धमुपलब्धम् तथामुख्यात्मन्येवदेहाद्यहंकारपर्यंतसाक्षिण्या त्मन्येवयस्यदेहात्मज्ञानबाधकमहमस्मिपरंब्रह्मेत्येवंरूपंनिःसं दिग्धंज्ञानम् भवेत्सयथोक्तज्ञानबलादनर्थराशेरपनीतत्वान्मु क्तिमनिच्छन्नपिबलान्मुच्यतएवेत्यर्थः॥तथाचाविर्भूतात्मतत्त्व स्यपुनर्देहाभिमानहेत्वभावान्नमोक्षेकोपिप्रतिबंधइतिभावः॥त थाचश्रुतिः भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः क्षीयंतेचास्य कर्माणितस्मिन्दृष्टेपरावरेइत्याद्या तथास्मृतयोपि बीजान्य ग्न्युपदग्धानिनरोहंतियथापुनः ज्ञानदग्धैस्तथाक्लेशैर्नात्मासंब ध्यतेपुनः यथापर्वतमादीप्तंनाश्रयंतिमृगद्विजाः तद्वद्ब्रह्मविदोदो षानाश्रयंतेकदाचन मंत्रौषधबलैर्यद्वज्जीर्यतेभक्षितंविषं तद्वत्स

र्वाणिकर्माणिजीर्यंतेज्ञानिनःक्षणादिति ॥ ५ ॥ ज्ञानिनःकर्मणामतिबंधाभावमुपपादितमुपसंहरति ततइत्यर्धश्लोकेन ॥ सर्वमिदमितिमारब्धकर्माविरोधित्वोक्तिःसिद्धंश्रुत्यादिप्रमाणसिद्धमित्यर्थः प्रयोगउपपत्तिः ॥ इतितत्त्वज्ञानस्वभावप्रकरणंचतुर्थंविवृतं ॥ इत्यहंप्रत्ययप्रकरणमित्यन्यत्र ॥ ४ ॥

मूत्राशंको यथोदंको नाग्रहीदमृतं यथा ॥ कर्मनाशभयाज्जंतोरात्मज्ञानाग्रहस्तथा ॥ १ ॥

यदिप्रागुक्तरीत्याब्रह्मात्मज्ञानममृतत्वंगमयेत्किमितितर्हि सर्वैरहंब्रह्मास्मीत्यात्मरूपंनगृह्यते निसर्गतएवसर्वेषांपरमपुरुषार्थार्थित्वादितितत्राह मूत्राशंकइति ॥अत्रेयमाख्यायिका उदंकोनामकश्चिदृषिर्भगवंतंमहाविष्णुंतपसातोषयित्वा देवरक्षितममृतंप्रार्थितवांस्तदाभगवतादेवेंद्रंप्रत्युक्तममृतमस्मैदीयतामिति इंद्रस्तुविष्णोराज्ञांपालयन्नमृतकलशंनीत्वामातंगवेषमास्थायस्वबस्तिदेशेकलशमुपनिधायोदंकायदातुमारेभे असूयपामाभवत्वस्यामृतपानमितिमन्यमानस्तदुदंकोपिचंडालमूत्रशंकयानजग्राहेति उदंकोमूत्राशंकःसन्यथाभूतमेवप्रत्यक्षोपलब्धमप्यमृतंयथानाग्रहीन्नमदभिलषितममृतमिदमितिनगृहीतवान्जातिनाशभयादितियोजना तथाजंतोर्लोकस्यवर्णाश्रमोपाधिविहितकर्मनाशभयादात्मज्ञानस्ययथोक्तस्याऽग्रहस्तस्मिन्ननादरइत्युत्तरार्द्धयोजना पदार्थस्वरूपापरिज्ञानंविपरीतज्ञानंचश्रुत्युक्तात्मस्वरूपाग्रहणकारणमितिभावः ॥ १ ॥

बुद्धिस्थश्चलतीवात्मा ध्यायती
व च दृश्यते ॥ नौगतस्य यथा वृ
क्षास्तद्वत्संसारविभ्रमः ॥ २ ॥

ननुदृष्टांतेदेवेंद्रस्यवेषान्यत्वममृतकलशस्यचमूत्राशयस्थानिवेशनंचजात्यन्तरमूत्रभ्रमोत्पादनेनामृताऽग्रहणकारणमासीन्नतथात्मनोब्रह्मभूतस्यभ्रमकारणमस्तीत्यतआह बुद्धिस्थ इति॥अनाद्यविद्ययास्वात्मन्यध्यस्तबुद्धौलिंगशरीरेअभिमानित्वेनास्थितआत्मातस्यांबुद्धौचलंत्यांचलतीवदृश्यतेनवस्तुतश्चलत्यविक्रियत्वात्तथातस्यांध्यायंत्यांनिश्चलीभूतायांध्यायतीव निश्चलइवदृश्यतेप्रतिभासतेनवस्तुतोध्यायति चलनाभावेतत्प्रतियोगिकस्यनैश्चल्यस्याप्यभावादित्यर्थः ॥ विकारवद्बुद्ध्यविवेकादादावेवसंसार्य्यहमस्मीतिविपरीतनिश्चयदोषाच्छ्रुत्यादिभिरीर्यमाणमप्यात्मनोब्रह्मत्वंनगृण्हातिलोकइत्यभिप्रायः ॥ अविवेकादन्यथाप्रतिपत्तौदृष्टांतमाह नौगतस्येति ॥तद्वदितिदार्ष्टांतिकोक्तिः ॥ २ ॥

नौस्थस्य प्रातिलोम्येन नगानां ग
मनं यथा ॥ आत्मनः संसृतिस्तद्व
द्ध्यायतीवेति हि श्रुतिः ॥ ३ ॥

उक्तमेवप्रपंचयति नौस्थस्येति ॥ जलस्थायांचलंत्यांनाविस्थितस्यजनस्ययथानौगतिदिग्वैपरीत्येनजलाशयतीरस्थानां

नगानांवृक्षादीनांगमनंविभाव्यते उपाध्यविवेकात् तद्वदसंसा रिणोप्यात्मनःसंसृतिरनुभूयतइत्यर्थः उक्तार्थानुवादिनींश्रुतिंप ठति ध्यायतीवेतिहिश्रुतिरिति ॥ ससमानःसन्नुभौलोकावनुसं चरतिध्यायतीवलेलायतीवेतिश्रूयतइत्यर्थः ॥ ३ ॥

**चैतन्यप्रतिबिंबेन व्याप्तो बोधो हि जायते॥बुद्धेः शब्दादिभिर्भा सस्तेन मोमुह्यते जगत् ॥ ४ ॥**

प्रपंचितदृष्टांतानुगुणयेनदार्ष्टांतिकंप्रपंचयन्नुदाहृतश्रुत्यर्थमा ह चैतन्यप्रतिबिंबेनेति ॥ चैतन्यप्रतिबिंबश्चिदाभासस्तेनव्या प्तोहियस्माद्बुद्धेर्बोधोविषयाकाराबुद्धिर्जायते अतःस्वाभासावि वेकाच्छब्दादिभिर्बुद्धिवृत्तिव्याप्तविषयैरित्थंभावेतृतीया ॥ विष यभूतदेहाद्यात्मनाभासोभासनंस्फुरणमात्मनोभवतीतिशेषः ॥ यादिशब्दादिनिर्भासइतिपाठोलभ्यतेतदाबोधविशेषणम् शब्दा देर्विषयस्यनिर्भासोयस्मिंस्तथेतिसुगमं येनैवमेकस्यांबुद्धिवृत्तौ देहादिविषयचैतन्ययोःसंश्लेषइवभवति तेनाऽन्योन्याविवेकनि मित्तनजगज्जनोतिशयेनमुह्यतीत्यर्थः॥यथानौस्थःपुरुषोनावश्च लनंनानुभवति अचलत्सुचवृक्षेषुचलनमनुभवतीत्युपाधिसा मर्थ्यादेवम्बुद्धिस्थदेहाद्यात्मभावमिवापन्नआत्मातदीयंव्यापारं नपृथगनुभवति तदाभासाविवेकात्तुचिदात्मनिविकारमारोपय न्ननुभवतिसृपैवेत्येतत्ध्यायतीवेत्यादिश्रुत्योच्यते अतउपाधि सामर्थ्यात्संसारित्वविभ्रमइत्यभिप्रायः ॥ ४ ॥

**चैतन्यभास्यताहमस्तादर्थ्यंच तद**

स्य यत् ॥ इदमंशप्रहाणेन प
र: सोऽनुभवो भवेत् ॥ ५ ॥

एवमविवेकाधीनेसंसाराध्यासेविविक्तपदार्थस्यवाक्यादहं ब्रह्माऽस्मीतिबुद्धिवृत्त्युदयेमुक्तिःफलिष्यत्यतः पदार्थविवेकवता भाव्यंमुमुक्षुणेत्यभिप्रेत्याह चैतन्यभास्यतेति ॥ अहमोहंकारस्य चिदचिद्ग्रंथिरूपस्य यच्चैतन्यभास्यताहश्यता यच्चतादर्थ्यं चिदात्मनोविषयोपस्थापकत्वेनतच्छेषत्वमस्ति तदुभयमस्याहंकारस्यसंबंधितस्मिन्निदमंशस्यप्रहाणेविवेकेसतिनभवेन्नस्यादितियोजना ॥ तत्रयोनुभवःसाक्षीपरिशिष्टःसपरःपरमात्मावाक्यार्थभूतोभवेदित्यर्थः ॥ यद्वा अस्याहमोहंकारस्यचैतन्यभास्यताजडतातादर्थ्यंचतच्छेषत्वंचयद्यस्मादस्ति तत्तस्मादयमहंकारोनात्मेतिवेद्यांशप्रहाणेन तस्मिन्नस्मदर्थत्वाभिमानत्यागेन योनुभवःसपरआत्मेतिनिश्चयवान्भवेदितियोजना अथवा स वाक्यार्थविषयःपरःसर्वोत्तरोनुभवोहमोहंकारस्येदमंशप्रहाणेन पृथक्करणेनभवेदितिसंबंधः॥इदमनिदमात्मकस्याहंकारस्यसंबंधीयइदमंशस्तस्यसाक्षिसाक्ष्यान्वयव्यतिरेकागमापायितदवध्यन्वयव्यतिरेकालोचनरूपेणमननेनापबाधेसति अवशिष्टांशोऽनपोह्यआत्मेत्यनुभवोभवेदित्यर्थः ॥ नन्वहमित्यवभासेइदमंशएवनचकास्तियस्यप्रहाणेनपरोनुभवोभवेदित्याशंकायामाह चैतन्यभास्यतेतितादर्थ्यंचेतिच ॥सुषुप्त्यादावात्मनिभासमानेप्यहंकारस्यानवभासादनात्मत्वेनिश्चितेसति जागरितादावागंतुकचैतन्यभास्यतातस्यसिद्धा अतःप्रतिभासते इदमंशाभावेपिचैतन्यभास्यत्वेनलक्षणेनास्तीदमाकारतेत्यर्थः॥तथातादर्थ्य

मप्यस्ति आत्मनिकर्तृत्वभोक्तृत्वादिव्यवहारनिर्वाहकतयाआत्मशेषत्वमस्तियद्यस्मादेवंतत्तस्मादप्यनात्मत्वलक्षणइदमंशो विद्यते अतस्तत्प्रहाणेनब्रह्मात्मानुभवोभवेदितिसर्वंसमंजसं ॥ ५ ॥ इतिबुध्यपराधप्रकरणंपंचमंविवृतं इतिमूत्राशंकप्रकरणमित्यन्यत्र ॥ ॥ ॥ राम ॥ ॥

छित्त्वा त्यक्तेन हस्तेन स्वयं नात्मा विशिष्यते ॥ तथा शिष्टेन सर्वेण येन येन विशेष्यते ॥ १ ॥ ॥

पदार्थविवेकवतोवाक्यादहंब्रह्मेतिज्ञानंभवतीत्युक्तम् तत्राहमित्यत्रेदमंशप्रहाणेन साक्षितत्त्वस्यशोधनप्रकारः सूक्ष्मोपायोनिर्दिष्टः ॥ तत्रासमर्थंप्रतिस्थूलोपायेनपदार्थशोधनप्रकारमुपदेष्टुंप्रकरणमारभते ॥ तत्रयत्स्वरूपप्रहाणमंतरेणज्ञातुंनशक्यते यथाग्नेरौष्ण्यंतस्यस्वरूपत्वादेवनविशेषणतायद्यपितथापि तथाविधस्य क्वचिद्विशेषणत्वव्यवहारःकल्पितभेदमाश्रित्येतिस्थिते आत्मनिसातिसत्ताचैतन्यानन्दानामनपायान्नतेषांविशेषणत्वंकिंतुस्वरूपत्वमेव कृशःस्थूलोकृष्णोगौरोहंमनुष्यःश्रोताद्रष्टावक्ताकामीक्रोधीज्ञानीकर्त्ताभोक्तासुखीदुःखीत्येवंविधानिविशेषणानिनात्मनः सत्तादिवत्स्वरूपभूतानिसत्यप्यात्मनिसुषुप्त्यादौतेषामभावादित्येवमात्मनःपृथगुकृत्य तस्यकूटस्थताऽवधेयेत्यभिप्रेत्य पृथक्भूतस्याविशेषणत्वाभावेदृष्टांतमाह ॥ छित्त्वात्यक्तेनेति यथाऽयंदृष्टांतस्तथायेनयेनमनुष्यत्वादिनाविशेष्यतेतेनसर्वेणाशिष्टेनत्यक्तहस्तातिरिक्तेनपादादिनावा स्वयमात्मानविशेष्यते यथाहस्तछेदानंतरंहस्तवानहमितिनवि

शिष्टप्रत्ययःक्रियते एवमेवपादादिमान्मनुष्योहमित्यादिविशिष्टप्रत्ययोनकार्यइत्यर्थः ॥ १ ॥

तस्मात्त्यक्तेन हस्तेन तुल्यं सर्वं विशेषणं ॥ अनात्मत्वेन तस्माज्ज्ञो मुक्तः सर्वैर्विशेषणैः ॥ २ ॥ ॥

देहद्वयसमवायिधर्माणामात्मनिव्यभिचारात्तैरात्माविशिष्य नप्रत्येतव्यइत्युक्तमनूद्यफलितमाह तस्मादिति ॥ अनात्मत्वेनत्यक्तेनहस्तेनेतिसंबंधः॥ विमतानिविशेषणानिनात्मस्वभावभूतानिविशेषणत्वात् छित्वात्यक्तहस्तवदित्यर्थः॥यस्मादेवंतस्मात् ज्ञोज्ञानवान्विवेकज्ञानवान्सर्वविशेषणैर्मुक्तश्चित्सदानंदमात्रात्मकएवावशिष्यतइत्यर्थः ॥ २ ॥

विशेषणमिदं सर्वं साध्वलंकरणं यथा ॥ अविद्याध्यासतः सर्वं ज्ञात आत्मन्यसद्भवेत् ॥ ३ ॥ ॥

उक्तन्यायेनविशेषणानामनात्मत्वेऽपिनात्मनस्तद्वियोगोस्ति आगमापायाभ्यांसंबंधनैरंतर्यादित्याशंक्याह विशेषणमिदंसर्वमिति ॥इदंसर्वंविशेषणंयथालंकरणमलंकार्यसंबंधेपिनतत्तादात्म्यतद्धर्मत्वबुद्धिविषयस्तथासाधुशोभनंयुक्तमितियावत् ॥ इतरथा आगमापायानुपपत्तेरित्यर्थः ॥ तर्हिकुतोमनुष्योहमित्यादौतादात्म्याऽवभासस्तत्राह अविद्याध्यासतइति ॥ मो

ह्यादेवतथावभासइत्यर्थः॥यस्मादविद्ययाध्यस्तमेवात्मनीदंसर्वं विशेषणमतोज्ञाते आत्मन्यविद्यानिवृत्तावसत्बाधितंकालत्रये प्यविद्यमानंभवेत्तथानिश्चितंभवेदितियोजना ॥ ३ ॥

ज्ञातैवात्मा सदाऽग्राह्यो ज्ञेयमु
त्सृज्य केवलः॥अहमित्यपि य
द्ग्राह्यं व्यपेतांगसमं हि तत्॥४

ज्ञातआत्मनीत्युक्तेज्ञेयत्वमात्मनउक्तमितिशंकास्यात् ज्ञेयत्वेचविशेषणादिवदनात्मत्वप्रसंगइत्याशंक्याह ज्ञातैवेति ॥ ज्ञेयमुत्सृज्य दृश्यांशापोहंकृत्वा योज्ञातासदासर्वस्यसएवात्मा नग्राह्यांशइतिग्राह्योऽध्यवसेयः ॥ किंलक्षणः केवलोज्ञातृत्वविशेषणेनापिरहितइत्यर्थः ॥ ज्ञातृत्वाद्युपलक्षितं चिन्मात्रमलुप्तप्रकाशस्वभावतयासर्वानुस्यूतंवस्त्वात्मेतिविवेकवतोनिश्चितप्रत्ययोभवेदितिभावः ॥ अहमित्यनुभूयमानत्वात्कथंज्ञातैवात्मेत्युच्यतइत्यतआह अहमित्यपीति ॥ यदपिइदमहमितिग्राह्यमात्मरूपंमन्यसे तद्व्यपेतांगसमंछिन्नहस्ततुल्यंहिएवतत्सुषुप्त्यादावात्मन्यवभासमानेऽप्यहमित्यनवभासनादहमोऽव्यभिचारित्वेसत्यात्मदृश्यतयात्मत्वायोगादित्यर्थः ॥ ४ ॥

यावान्स्यादिदमंशो यः स स्वतो
न्यो विशेषणं॥ विशेषप्रक्षयो यत्र
सिद्धो ज्ञश्चित्रगुर्यथा ॥ ५ ॥

आत्मनोऽहंप्रत्ययग्राह्यत्वाभावेचक्षुरादेरप्याविषयस्यकुतः

सिद्धिरितिमुग्धशंकांदृष्टांतेनापाकुर्वन्नात्मनोऽन्यनिरपेक्षांस्वतः सिद्धिंसाधयति यावानिति ॥ अहमित्यत्रयावांश्चिदवभास्यत्व लक्षणेनेदमंशोयोहंकारादिर्यत्रविशेषणंस्याद्यस्मिन्स्वानुगतप्र तिभासेप्रत्यगात्मनिविशेषव्यवहारहेतुःस्यात्सप्रत्यगात्माऽन्यो विशेषणत्वेनाभिमतात्तदहंकारादेःपरोविशेषप्रक्षयश्चसर्वेषांवि शेषाणांप्रक्षयोऽव्यावृत्तिर्यस्मिन्निति व्युत्पत्तेर्निर्विशेषश्च एवंरूपः स्वतःसिद्धोन्यनिरपेक्षएवसिद्धःस्फुरन्वर्ततइतिपदयोजना ॥ यथा देवदत्तोविशेषणभूतायाश्चित्रगोरन्यस्तत्संबंधात्प्रागेवसिद्धो नचित्रगोःसंबंधंस्वसिद्धिंप्रत्यपेक्षतेतथात्माप्यहंकारादिसंबंधा त्प्रागेवस्वमहिम्नासिद्धोनाहंकारादिकंस्वसिद्धावपेक्षत इतिदृष्टां तदार्ष्टांतिकसंगतोर्थः ॥ ५ ॥

**इदमंशोहमित्यत्र त्याज्यो नात्मेति पंडितैः ॥ अहंब्रह्मेति शिष्टांशो भूत पूर्वगतेर्भवेत् ॥ ६ ॥**



नन्वहमोऽनात्मत्वेकथमहम्ब्रह्मेतितादात्म्यश्रुतिरुपपद्येते त्याशंक्याऽध्यस्ताहंकारस्यमूलनिवृत्त्यर्थाश्रुतिर्नाहंकारस्यात्म त्वप्रतिपत्त्यर्थेतिपरिहरति इदमंशोहमिति ॥ अहमित्यत्रा हंकारावभासेयइदमंशःसनात्मा दृश्यत्वादितिनिश्चित्य पंडितै स्त्याज्यस्तस्मिन्नात्माभिमानोनकार्यइत्यर्थः ॥ तर्हिकथंश्रुति निर्देशस्तत्राह अहमिति ॥ अहंब्रह्मेतिवाक्यार्थनिष्ठायांयोऽहं कारांशउल्लिख्यते सभूतपूर्वगतेर्हेतोर्भवेत् ॥ भूतासंजातापू र्वंगतिःप्राप्तिस्तस्याइतिविग्रहः अहंकारलक्ष्यंवस्तुतत्साक्षिरू

पमहमितिश्रुत्योल्लिख्यतइत्यर्थः ॥ ६ ॥ इतिविशेषापोहप्रकरणंपष्ठंविवृतं ॥ ६ ॥ इतिछित्वाप्रकरणमितिवा ॥

बुद्ध्यारूढं सदा सर्वं दृश्यते यत्रतत्र वा ॥ मया तस्मात्परं ब्रह्म सर्वज्ञश्चास्मि सर्वगः ॥ १ ॥ ॥

एवंकृतान्वयव्यतिरेकस्यपरिशोधितपदार्थतत्त्वस्यवाक्यादेववाक्यार्थज्ञानमुपपद्यते इत्युपपत्त्या निर्द्धारितमथम् स्वानुभवावष्टम्भेनस्पष्टीकर्तुम्प्रकरणान्तरमारभते बुद्ध्यारूढमित्यादिना ॥ यस्मान्मयासर्वमध्यात्ममधिभूतमधिदैवमित्यादिलक्षणंयत्रतत्रवाजाग्रत्स्वप्नयोरिहलोकपरलोकयोर्वास्थितम्प्रत्यक्षादितःशास्त्रतोवायदुपलभ्यमस्तितत्सर्वम्बुद्ध्यारूढंबुद्धिवृत्तिक्रोडीकृतंसदादृश्यतेप्रकाश्यतेतस्मादहंसर्वदृश्यविलक्षणत्वात्परंप्रपंचातीतंब्रह्मास्मिसर्वज्ञःसर्वार्थप्रकाशकः सर्वगोऽपरिच्छिन्नश्चास्मीत्यर्थः ॥ १ ॥

यथात्मबुद्धिचाराणां साक्षी तद्वत्परेष्वपि ॥ नैवापोढुं न वा दातुं शक्यस्तस्मात्परो ह्यहं ॥ २ ॥

ननुकथमेतावतासर्वज्ञत्वंपुरुषांतरबुद्ध्यारूढेर्थेपुरुषांतरस्यानुभवस्मरणयोरसंभवादेकस्यात्मनःसर्वार्थप्रकाशकत्वासिद्धेरित्यतआह यथात्मेति आत्मनिसर्वव्यवहारप्रवर्त्तकतयाआत्मसंबंधिनीबुद्धिरात्मबुद्धिस्तस्याश्चारःप्रचारोये श्रुते आत्मबुद्धिचारा

आध्यात्माधिदैवस्थूलसूक्ष्मदेहात्मकास्तेषांसाक्षीस्फोरकोऽहंय था तद्वत्तथापरेषुपरकीयबुद्धिचारेष्वप्यहंसाक्षी साक्षिभेदेप्रमा णाभावात् मय्येवसकलंजातंमयिसर्वंप्रतिष्ठितं मयिसर्वंल यंयातितद्ब्रह्माद्वयमस्म्यहमित्यादिश्रुतेर्मय्येवैकस्मिंश्चिदेकरसे आत्मनिसर्वप्रमातृतद्बुद्धितत्प्रचारगोचरस्यप्रपंचस्यकल्पितत्वा वगमाच्चयुक्तंममसर्वज्ञत्वादीत्यर्थः यस्मादेवमहंसर्वसाक्षित्वेन सर्वाधिष्ठानत्वेनचसर्वज्ञःसर्वगतश्च तस्मादपोढुमयमस्यद्रष्टान भवत्यत्रसनास्तीतिवानिराकर्तुंनैवशक्यःकेनचिन्नचैवादातुंज्ञाने नक्रिययावाप्रकाशयितुमुत्पादयितुमाक्रष्टुंवाशक्योहियस्मादहं ग्राह्यग्राहकादिप्रपंचविलक्षणस्तस्मात्परःपरमात्मैवेत्युपसंहा रः ॥ २ ॥

विकारित्वमशुद्धत्वं भौतिकत्वं
न चात्मनः॥ अशेषबुद्धिसाक्षि
त्वाद्बुद्धिवच्चाल्पवेदना ॥ ३ ॥

ननुबुद्ध्यारूढंचेत्सर्वंप्रकाश्यतेक्षेत्रज्ञेनतदादर्शनक्रियायां क र्तृत्वाद्विकारित्वादिदोषप्राप्तेस्तस्यानात्मत्वप्रसंग इतिशंकांनिर स्यति॥विकारित्वमिति आत्मनोनविकारित्वं बुद्धिवत्सावयव त्वाभावात्सर्वविकारसाक्षित्वाच्च ततएवनात्मनोऽशुद्धत्वंक्रिया गुणयोगित्वमस्ति सकलगुणक्रियावद्वस्तुसाक्षित्वाच्च नापिभौ तिकत्वमात्मनोरूपादिहीनत्वात् किंचनात्मनोबुद्धिवदल्पवेद ना यथाबुद्धेर्बुद्धितत्संसर्गादिविषयावेदनास्ति नैवमात्मनोऽशेष बुद्धिसाक्षित्वात्सर्वबुद्धिस्वरूपतद्विकारादिसाक्षित्वादित्यर्थः ३

मणौ प्रकाश्यते यद्वद्रक्ताद्याकारता

**तपे ॥ मयि संदृश्यते सर्वमातपेनेव तन्मया ॥ ४ ॥ ॥ छ ॥**

यदिनिर्विकारएवमात्मा कथन्तर्हिससर्वार्थप्रकाशकइत्युच्यते इत्याशंक्य लोकप्रसिद्धदृष्टान्तेननिर्विकारस्यैवप्रकाशकत्वमुपपादयति मणाविति ॥ मणौस्फटिकादिलक्षणेजपाकुसुमादिरूपारक्ताद्याकारताआतपेसूर्यालोकेसत्येवप्रकाश्यतेगृह्यतेयद्वत्तथा मयिक्षेत्रज्ञे आदित्यस्थानीये विद्यमानएवस्फटिकादिस्थानीयायाम्बुद्धौजपाकुसुमादिरक्तादिस्थानीयंसर्वंविषयजातंसंदृश्यते तत्तस्मादातपेनेवनिःप्रकंपेनमयासर्वंप्रकाश्यते नत्बुद्धिवद्विकारवत्ता नापिबुद्धिरेवद्रष्ट्री नचैवंसतिबुद्धेरनुपयोग एव चैतन्यस्यविषयविशेषाकारत्वापादनायतदुपयोगादिति ४॥

**बुद्धौ दृश्यं भवेद्बुद्धौ सत्यां नास्ति विपर्यये ॥ द्रष्टा यस्मात्सदा द्रष्टा तस्माद्द्वैतं न विद्यते ॥ ५ ॥ ॥छ॥ ॥छ॥**

इदानींप्रत्यगात्मनोद्वितीयत्वमुपपादयंस्तस्यचशुद्धत्वं स्पष्टयति बुद्धाविति ॥ जाग्रदादौबुद्धौसत्यांस्वाविद्ययाध्यस्तायां बुद्धौसमारूढंसदृश्यंद्वैतंभवेदुद्भवेत् नास्तिविपर्यये बुद्धावसत्यांस्वापादौदृश्यंनास्तिजडस्याज्ञातसत्वेप्रमाणाभावादित्यर्थः द्रष्टातुसाक्षीसदासर्वास्वप्यवस्थासुद्रष्टैव नदृश्यवत्स्वसत्तांव्यभिचरति यस्मादेवंसतःप्रकाशमानत्वाव्यभिचारस्तद्व्यभिचारिणश्चसत्वानुपपत्तिःतस्माद्द्वैतंनविद्यतइतिनित्यशुद्धएवप्रत्यगात्मेत्यर्थः ॥ ५ ॥

अविवेकात्पराभावं यथा बुद्धिरवै त्तथा ॥ विवेकात्तु परादन्यः स्वयं चापि न विद्यते ॥ ६ ॥ ॥छ॥

यद्यपिद्वैतसंसर्गकृतमशुद्धत्वमात्मनोनास्ति द्वैतस्याभावात्तथापिविद्याविद्याभ्यांसंबंधादशुद्धिर्भविष्यतीत्याशंक्यबुद्धेरेवविद्याविद्येनात्मनस्तत्संसर्गइतिशुद्धएवात्मेत्याह अविवेकादिति॥ नविद्यतेविवेकोभेदोभासमानतयायस्मिन्सोऽविवेकोदेहादावात्मबुद्धिर्विपर्ययज्ञानमितियावत्तस्मादविवेकात्परस्यासंसारिणः सर्वसाक्षितयाविविक्तस्याभावमविद्यमानतांयथाबुद्धिरवैद्विदितवती ॥ अत्रबुद्ध्यध्यासादेवचिदात्मनोऽपिभ्रांतियोगात्साभासाबुद्धिरेवाऽज्ञानविपर्यासाश्रयइत्यंगीकृत्य यथाबुद्धिरवैदित्युक्तमितिद्रष्टव्यं तथाविवेकात्तुअनात्मापवादेनात्मनःस्वभावनिर्द्धारणंविवेकस्तस्माद्विवेकादूर्ध्वं परादसंसारिणःपरमात्मनोन्योजीवःसंसारीनविद्यतेस्वयंचापिस्वाभासबुद्धिरपिसानिदानामविद्यते तदाप्रत्यग्ब्रह्मभूतत्वात्सर्वस्येत्यर्थः ॥तथाचभ्रांतिसम्यग्ज्ञानयोर्विद्याविद्यारूपयोरपिबुद्धितंत्रत्वान्नात्मनोऽशुद्धिगंधोपीतिभावः॥६ ॥ ॥ इतिबुध्यारूढप्रकरणंसप्तमंविवृतं॥७॥

चितिस्वरूपे स्वतएव मे मते रसादियोगस्तव मोहकारितः ॥ अतो न किंचित्तव चेष्टितेन मे फलं भवेत्सर्वविशेषहानतः ॥ १ ॥ ॥ ॥ ॥ ॥

ननुविद्याविद्ययोर्यदिबुद्धिगतत्वंतर्हिसांख्यसिद्धांतप्रसंगस्ते हिबुद्धिरेवपुरुषस्यापवर्गार्थंभोगार्थंचज्ञानाज्ञानरूपतामाचरती तिवदन्तीत्याशंकामपनुदन्पूर्वस्वाऽनुभवानुरोधेनसाधितमेवब्र ह्मात्मज्ञानमात्मनःसंवादात्मकेनप्रकरणांतरेणद्रढयति चिति स्वरूपइति ॥ रसादियोगोरागादिनिबंधनो भोक्तृत्वादिसंबंधः मोहोऽविवेकः ॥ फलितमाह अतोनेति ॥ १ ॥

विमुच्य मायामयकार्यतामिह प्र
शांतिमायाह्यसदीहितात्सदा ॥ अ
हं परंब्रह्म सदा विमुक्तवत्तथाजमे
कं द्वयवर्जितं यतः ॥२॥ ॥७॥

यस्मात्सर्वविशेषराहित्यात्तवचेष्टितेनमेममानाधेयातिशय स्यकिमपिफलंनास्ति तस्मात्तवोपशमएवयुक्तइत्याह विमु च्येति ॥ मायामयकार्यतांमिथ्याचेष्टितंविमुच्यासदीहितान्नि रर्थकप्रयासात्प्रशांतिंप्रशममिहमयिप्रत्यगात्मन्यायाहि प्राप्नुहि ॥ अत्रमायामयचेष्टितासदीहितशब्दाभ्यामविद्यानिबंधनत्व स्यसूचितत्वात्सांख्यमतशंकानिरवकाशीकृतावेदितव्या ॥ न नु किमितिप्रत्यगात्मनिमनसोलयउच्यते सत्यज्ञानादिलक्ष णेब्रह्मण्येवकस्मान्नोच्यतइत्याशंक्याह सदाअहंपरंब्रह्मेति॥य तःसदैवाहंब्रह्मैव तथासाति सदाविमुक्तवन्मुक्तइवास्मि नतुमेमु क्तिर्बंधाभावादितियोजना ॥ अजत्वविशेषणंजन्मादिसमस्त विकारप्रतिषेधार्थं ॥ अतएकं सदैकरूपमित्यर्थः सजातीयभेद रहितमितिवा॥द्वयवर्जितं विजातीयभेदहीनमित्यर्थः॥ अतोय

न्मय्येकीभूतम्ब्रह्मण्येवतदेकीभूतमितिस्थितेन परेऽव्ययेसर्वए कीभवंतीतिश्रुतिविरोधइतिभावः ॥ अपरायोजना हेमतेअसत्सुस्त्वतःस्वरूपशून्येषु देहेंद्रियविषयेषुयदीहितमभिलषितं दृष्टमदृष्टंवाफलंतस्मादसदीहितात्सदाजाग्रद्दशायामपिप्रशांतिंप्रशममायाहितदर्थंव्यापारंपरित्यजेत्यर्थः॥उपशांतापित्वंनैवात्मानं धारयेत्याह विमुच्येति ॥ कार्यतांबुद्धिरूपकार्यात्मतांविमुच्य विहायमायांकारणरूपमायामपगच्छ तदात्मिकाभव ॥ तर्हितद्रूपेणस्थित्वापुनरुद्भविष्यामीतिचेत्तत्राह इहेति ॥ इहमत्स्वरूपएवांतरयप्रविश कार्यकारणरूपतांविहायतप्रायःपीतोदकबिंदुवन्मद्रूपग्रस्ताभवेत्यर्थः ॥ कथमहंमुखांतःकवलीकृतब्रह्मांडकोटिर्मयेतस्ततश्चाल्यमानेनत्वयाग्रस्तास्यामितिचेत् नाहंकदापिचालयितुंत्वयाशक्यस्त्वद्भ्रांतिमात्रमेतदित्यभिप्रेत्याह अहंपरंब्रह्मेति ॥ यतोऽहंसदापरंब्रह्म अयमात्माब्रह्मेतिश्रुतिरितियोज्यं विमुक्तवदितिब्रह्मविशेषणं स्वार्थेतद्धितः विमुक्तंनित्यमुक्तमेवेत्यर्थः ॥ तथा यथाश्रुत्युक्तंतथेत्यर्थः व्याख्यातमन्यत् ॥ २ ॥

सदा च भूतेषु समोस्मि केवलो यथा च खं सर्वगमक्षरं शिवम् ॥ निरंतरं निष्कलमक्रियं परं ततो न मेस्तीह फलं तवेहितैः ॥ ३ ॥ ॥

नन्वजत्वादिप्रतिपादकशास्त्राद्ब्रह्मणोनिर्विशेषतयानित्यमुक्तत्वेऽपिकथमात्मनोदेहादिष्वन्वितस्यनिर्विशेषतयाब्रह्मरूपता

संभवइत्यतआह सदाचभूतेष्विति ॥ चशब्दोवधारणार्थः अहंकेवलोऽविद्यातत्कार्यरूपविशेषणरहितः सर्वेषुभूतेषुसमएवास्मि उपाधिपरामर्शमंतरेणमयिविशेषोल्लेखाभावादित्यर्थः ॥ सर्वानुस्यूतस्याप्यसंगस्वभावतयानिर्विशेषत्वेदृष्टांतमाह यथा चखमिति ॥ आकाशस्यासंगत्वादेःप्रसिद्धत्वान्नतस्मिन्नुशंकाकार्येतिचशब्दार्थः ॥ सर्वगमित्यादीनिविशेषणानिब्रह्माकाशयोःसमानि यतः आकाशवत्केवलोऽहंसर्वभूतेषुसमोऽतआकाशस्वभावोपमितंसर्वगमित्यादिविशेषणम्परंब्रह्मैवास्मीतियोज्यं ॥ उपपादितेब्रह्मात्मैक्येफलितमाह ततइति ॥ ३ ॥

**अहं ममैको न तदन्यदिष्यते तथा न कस्याप्यहमस्म्यसंगतः ॥ असंगरूपोहमतो न मे त्वया कृतेन कार्यं तव चाद्वयत्वतः ॥ ४ ॥ ॥ ॥ ॥ ॥**

ब्रह्मभूतस्यतवमदीहितैःफलाभावेऽपिकथंचिन्मच्चेष्टयात्वत्सम्बंधिनस्त्वांप्रतिगुणभूतस्यप्रधानभूतस्यवाकस्यचिदर्थस्य क्वचिदुपयोगोभविष्यतीत्याशंक्य सोऽपिमयिदुःसंपादइत्याह अहमिति ॥ एकएवाहंचित्स्वरूपस्यममपरमार्थतःसजातीयविजातीयस्वगतभेदेमानाभावात्ततोनममगुणभूतंकिंचिन्मत्तोऽन्यदिष्यते मृग्यते तथा कस्याऽपिप्रधानभूतस्याऽहंगुणभूतोनास्मि कुतः असंगतः अनिष्पादितातिशयत्वात् अनाधेयातिशयत्वादित्यर्थः ॥ यतोहमसंगरूपोऽतोनमेत्वयाकृतेनकिमपिप्रयोजनमस्ति किंच त्वमेवनासि कुतस्तवेहितंतत्फलंवेत्या

शयेनाह तवचेति ॥ मत्स्वरूपज्ञानकल्पितायास्तवाधिष्ठानभूत मत्स्वरूपव्यतिरेकाभावादभेदेचोपकार्योपकारकत्वाऽसंभवाद लंविकल्पनया प्रशांतैवभवेत्यर्थः ॥ ४ ॥

फले च हेतौ च जनो विषक्तवानि
ति प्रचिंत्याहमतो विमोक्षणे ॥ जन
स्य संवादमिमं प्रक्लृप्तवान्स्वरूपत
त्त्वार्थविबोधकारणं ॥५॥ ॥

इदानींकृतार्थस्याचार्यस्यस्वानुभवसिद्धार्थाविष्कारकप्रकर णानिर्माणप्रवृत्तौनिमित्तंदुःखिजनदर्शनसंजातकरुणैव नरुया त्यादीत्यभिप्रेत्याह फलेचेति ॥ अयंजनोहेतुफलात्मकेसंसा रेविशेषेणासक्तवानितिप्रचिंत्यविमृश्य तादृग्जनस्य-लोकस्या तःसंसाराद्विमोक्षणेमोक्षार्थमहमिममृमत्यात्मसंवादरूपंग्रंथंप्र युक्तवान्प्रणीतवानास्मि किमनेनसंवादग्रंथेनजनस्यभवेदिति तदर्थंतंविशिनष्टि स्वरूपेति ॥ स्वस्यात्मनो रूपं नित्यचै तन्यस्वभावस्तस्य तत्त्वार्थोब्रह्मत्वं तस्यविस्पष्टबोधकारण मित्यर्थः ॥ ५ ॥

संवादमेतं यदि चिंतयन्नरो विमुच्य
ते ज्ञानमहाभयागमात् ॥ विमुक्त
कामश्च तथा जनः सदा चरत्यशो
कः सम आत्मवित्सुखी ॥ ६ ॥ ॥

यतएवंविधोयंसंवादस्तस्मात्साध्यसाधनविपर्यावर्तलक्षणात्संसारान्मुमुक्षुभिरयमनुचिंतनीयइत्याभिप्रेत्याह संवादमेतामिति ॥ अज्ञानकृतान्महाभयागमात्संसारादित्यर्थः ॥ यद्वा महाभयस्यागमोयस्मात्तन्महाभयागममज्ञानं तस्मादितिविग्रहः ॥ भयहेत्वज्ञानाद्विमुच्यतइत्यर्थः ॥ कारणनिवृत्त्याकार्यनिवृत्तिमाह विमुक्तकामश्चेत्यादि चरतिजीवन्नेवबंधप्रतिभासरहितःसन्ब्रह्मण्येवविचरतिकृतकृत्योभवतीत्यर्थः सुगममन्यत् ॥ ६ ॥ मतिविलापनप्रकरणमष्टमंविवृतं ॥ ८ ॥ इतिचितिस्वरूपप्रकरणमितित्यन्यत्र ॥

**सूक्ष्मताव्यापिते ज्ञेये गंधादेरुत्तरोत्तरं ॥**
**प्रत्यगात्मावसानेषु पूर्वपूर्वप्रहाणतः॥१॥**

यस्यप्रत्यक्ब्रह्मणोवाक्योत्थज्ञानेनाज्ञाननिवृत्त्यामुक्तिरुक्तातस्य सर्वान्तरत्वेन निरतिशयसूक्ष्मत्वंव्यापित्वंच यथाचखमित्यत्रसूचितमुपपादयितुंप्रकरणांतरमारभते सूक्ष्मतेत्यादिना ॥ गंधशब्दःपृथिवीशब्दार्थः पृथिव्यंब्वादिलक्षणात्कार्यात्पूर्वस्मात्पूर्वस्मादुत्तरोत्तरंकारणतयास्थितेषुप्रत्यगात्मावसानेषु सर्वांतरात्मपर्यंतेषु पदार्थेषु यथाक्रमं पूर्वपूर्वप्रहाणतः कार्याकारापोहेन सूक्ष्मताव्यापिताच विज्ञातव्या कार्यकारणान्वयव्यतिरेकालोचनयासंभावनीयेत्यर्थः ॥ कार्येषुविद्यमानमपिकारणस्वरूपंतत्कार्याकारतिरोहिततया नस्वरूपेणावभासतइतिसूक्ष्ममुच्यते नपुनःकार्यपरिमाणान्न्यूनपरिमाणयोगात्तथा सकलविकारानुगतस्यैवोपादानकारणत्वात्कार्याऽपेक्षयाधिकदेशवृत्तित्वेनव्यापित्वंचकारणस्य तथाहि चतुर्विधभूतग्रामोपादान

रूपापृथिवीतावन्नभूतग्रामेषुगृह्यमाणेषुगृह्यतेतत्रतच्छब्दप्रत्य
यव्यवहारादर्शनाल्लोकस्य अतस्तदपेक्षयासूक्ष्मातदव्याप्तदेश
वर्तित्वाद्व्यापिकाच ॥ नचतत्तत्कार्योपादानभूताःपृथिव्यंशाभि
न्नाइतिनोपादानस्यव्यापकतेतिवाच्यम् ॥ कार्याकारेणभेद
व्यतिरेकेणमृत्स्वरूपभेदेप्रमाणानिरूपणादन्यथातटाकांतःस्थ
मृन्निर्मितकुसूलस्य गृहांगणदेशे मृदात्मना विलयाभाव
प्रसंगादुपादानादन्यत्रकार्यलयानुपपत्तेस्तस्मात्स्वकार्यापेक्ष-
यापृथ्वीतावत्सूक्ष्माव्यापिकाचसिद्धा तथाद्भिर्व्याप्तापृथिवी
तद्यदपांशरआसीत्तत्समहन्यतसापृथिव्यभवदितिश्रुतौजलप
रिणामविशेषस्यशरशब्दवाच्यस्यदधिमंडाकारस्य पृथिव्या
त्मत्वश्रवणात्स्वेदप्रस्रवणादेः पर्वताग्रशिलायामंतर्भूमौचस
र्वत्रोपलंभाद्रसस्यचसलिलासाधारणगुणस्य पृथिव्यामस
र्वत्रोपलम्भात्तस्यैकत्वेपिकटुतीक्ष्णत्वादिभेदः परिणामविशे
षोपाधिनिबंधनइति तस्माज्जलव्याप्तापृथिवीसपरिणामेति
जलंपृथिव्याव्यापकंसूक्ष्मंचप्रागुक्तयुक्त्यासिद्धं ॥ तथासपृ
थिवीजलंतेजसास्वकारणेनव्याप्तम् सर्वत्रोष्मोपलंभात्तप्ता
योगोलकादौ सूर्यकिरणेषुचोदकस्यलयदर्शनाच्च तथाचैवतेज
सोजलाद्व्यापकत्वंसूक्ष्मत्वंचप्रसिद्धं ॥ तदपिवायुनाग्रस्तं यत
श्चोदेतिसूर्योऽस्तंयत्रगच्छतीति प्राणाद्वाएषउदेतिप्राणेस्तमेति
इतिश्रुतेः प्राणशब्दवाच्येवायौलयश्रवणाज्ज्वालारूपस्यचव
न्हेर्वाय्वधीनप्रवृत्तिनिवृत्तिदर्शनाच्च ॥वायुश्चाकाशेनग्रस्तइतिप्र
सिद्धमेवैतत् ॥ सूक्ष्मत्वंतुव्याख्यातमेवसर्वत्र एतत्सर्वंसत्ता
स्फूर्तिभ्यांव्याप्तमेवानुभूयतइतिसच्चिन्मात्रंसर्वस्योपादानं त
स्यचार्थान्तरेणानुगमादर्शनान्निरुपादानकत्वेसिद्धेनिरपेक्षव्या

पकत्वं प्रागुक्तपरिपाठ्यानिरतिशयसूक्ष्मत्वंच सिद्ध्यति तदनेनसच्चिन्मात्रेणसर्वस्यदृश्यराशेर्ग्रस्तत्वान्नततःपृथक्किमपिवस्तुविद्यतइतितस्य परमसूक्ष्मताव्यापिते निश्चित्यसोहमसंगकूटस्थाद्वयात्मेतिसदाभावयेदितितात्पर्यार्थः ॥ १ ॥

शारीरा पृथिवी तावद्यावद्बाह्या प्रमाणतः ॥ अब्वादीनि च तत्त्वानि तावज्ज्ञेयानि कृत्स्नशः ॥ २ ॥ ॥छ॥

ननुनैतावतात्मनउक्तरूपत्वज्ञानसिद्धिरध्यात्माधिदैवतयोः पृथिव्यादेर्भेदेनप्रथमानत्वादित्यतआह शारीरेति यावद्बाह्यापृथिवी प्रमाणतःपरिमाणतोभवति तावत्तावत्प्रमाणा शारीरापृथिवीज्ञेयेतिसंबंधः तथांब्वादीनिचत्वारिभूतानिकृत्स्नशोनिरवशेषतयातावत्तावत्प्रमाणानिज्ञेयानि यावच्छरीराबाह्याचपृथिवीतियोजना ॥ एतदुक्तंभवति अध्यात्माधिभूताधिदैवात्मनाविभक्तानांपृथिव्यादीनामेकाज्ञानविजृंभितत्वादेकप्रयत्नेनप्रविलापनोपपत्तेः सर्वत्रप्रत्यक्त्वानुगमात्प्रत्यगात्मावसानमेवाध्यात्मादिरूपंतेनव्याप्तंनततःपृथगस्तीतिप्रत्यक्त्वेऽवधार्यमाणेबाह्याध्यात्मिकादिभेदस्फूर्तेरनवकाशात्प्रत्यगात्मब्रह्मतावन्मात्रमेवसर्वमवशिष्यतइति भवेदेवमागुक्तात्मतत्त्वज्ञानसिद्धिरिति ॥ २ ॥

वाय्वादीनां यथोत्पत्तेः पूर्वं खं सर्वगं तथा ॥ अहमेकः सदा सर्वश्चिन्मात्रः सर्वगोऽद्वयः ॥ ३ ॥

नन्वेवं परागर्थस्यासत्वेकथमात्मनःप्रत्यक्त्वं सर्वगतत्व मित्याद्युपपद्यते तस्यपराचीनविकारापेक्षत्वादतः कथंपराचां प्रत्यगात्मावसानत्वमित्याशंक्य चिन्मात्रस्वरूपस्यैवापूर्वादिल क्षणस्य प्रत्यगादिशब्दैर्लक्ष्यत्वाल्लक्ष्यमाणदशायामारोपितपरा गर्थापेक्षायामपिस्वरूपस्यान्यानपेक्षत्वाद्युक्तंसर्वस्यप्रत्यगा त्मावसानत्वावधारणमितिदृष्टांतेनोपपादयति वाय्वादीनामि ति स्पष्टार्थः ॥ ३ ॥

ब्रह्माद्याः स्थावरांता ये प्राणिनो
मम पूः स्मृताः ॥ कामक्रोधादयो
दोषा जायेरन्मे कुतो न्यतः ॥४॥

ननुकथमाकाशवदेकएवात्मासर्वात्माभवेत् ब्रह्मादिभेदेना त्मनामनेकत्वस्यविभाव्यमानत्वात्तथाचैतन्यमात्रत्वंचानुपप न्नं रागादिदोषसंसर्गोपलब्धेरित्याशंक्याह ॥ ब्रह्माद्याइ ति ॥ ममैवचिदात्मनः सर्वे प्राणिनः पूः पुरं शरीरभूताःस्मृ ता निर्णीताइत्यर्थः ॥ तथाकामक्रोधादयोदोषाआत्मनाभेन स्वाभाविका व्यभिचारित्वात्परतोपितेनसंभवंतीत्याह जायेर न्मेकुतोन्यतइति अन्यस्याभावादित्यर्थः ॥ ४ ॥

भूतदोषैः सदास्पृष्टं सर्वभूतस्थमी
श्वरं ॥ नीलं व्योम यथा बालो
दुष्टं मां वीक्षते जनः ॥५॥ ॥७॥

प्रत्यगात्मनोनिर्दोषत्वमसिद्धं संसारदोषस्यप्रत्यक्षत्वादि त्याशंक्याकाशकार्ष्ण्यप्रत्यक्षवदात्मनिदोषदृष्टेर्भ्रमत्वान्मैवमि

त्याह भूतदोषैरिति ॥ अस्पृष्टमितिछेदः सर्वभूतेषुस्थितस्या पितद्दोषैरस्पृष्टत्वमीश्वरत्वादितिहेत्वर्थंविशेषणमीश्वरमिति ॥ सर्वस्येशितारंकारणामितियावत् नहिकारणंकार्यधर्मैःसंस्पृश तइत्यर्थः ॥ स्पष्टमन्यत् ॥ ५ ॥

**मच्चैतन्यावभास्यत्वात्सर्वप्राणिधियां सदा ॥ पूर्मम प्राणिनः सर्वे सर्वज्ञस्य विपाप्मनः ॥६॥ ॥छ॥**

यदुक्तं ब्रह्माद्याःस्थावरांताःप्राणिनएकस्यात्मनःशरीरभूताइतितत्कथमित्यतआह मच्चैतन्येति ॥ सर्वज्ञस्यसर्वावभासकस्यातएवविपाप्मनोद्दश्यदोषसंसर्गरहितस्यममात्मनः सर्वे प्राणिनःपूःशरीरं कुतः सर्वप्राणिधियांसदामच्चैतन्याऽवभास्य त्वादितियोजना ॥ योऽयंविज्ञानमयःप्राणेषुहृद्यंतर्ज्योतिःपुरुषइतिश्रुतेः बुद्ध्यंतःसाक्षितयाप्रकाशमानस्यचैतन्यज्योतिषए वसर्वप्राणिष्वात्मत्वावगमात् तस्यचबुद्धितत्स्थाभासभेदमंतरे णस्वरूपतोभेदानिरूपणात्सवितुरिवोदकपात्रतत्स्थाभासव्य तिरेकेणेतिसिद्धमेकस्यात्मनः सर्वाणिभूतानिशरीरमितिभावः ॥ तथाचश्रुतिः यस्यसर्वाणिभूतानिशरीरंयःसर्वाणिभूतान्यं तरोयमयत्येषतआत्मांतर्याम्यमृतइति ॥ ६ ॥

**जनिमज्ज्ञानविज्ञेयं स्वप्नज्ञानवदिष्यते॥नित्यं निर्विषयं ज्ञानं तस्माद्वैतं न विद्यते॥ ७ ॥ ॥ ॥ ॥ ॥**

तर्हिभास्यमाणितद्बुद्धीनांसत्त्वाद्वैतक्षतिरितितत्राह जनि

मदिति ॥ यज्ज्ञानमिद्यच्चज्ञानविज्ञेयंयत्कार्यंजडंच तन्मिथ्येष्य तेयथास्वप्नज्ञानं तथाजाग्रदपिकार्यंदृश्यंचेतिमिथ्येतिततद्वैतं नविद्यतेयस्मात्तस्माज्ज्ञेयस्यासत्त्वात् ज्ञानंनित्यंसदानिर्वि षयंविषयानिरूप्यंनभवति ॥ यद्वानित्यमविनाशीसर्वविना शसाक्षित्वादितियोजना ॥ नह्यध्यारोपितेनद्वैतेनपरमार्थमद्वै तंविहन्यते नखल्वारोपितेनतोयादिनातदाधारभूम्यादिसार्द्रतां यंदृष्टमितिभावः ॥ ७ ॥

**ज्ञातुर्ज्ञातिर्हि नित्योक्ता सुषुप्ते त्व न्यशून्यतः॥जाग्रज्ज्ञातिस्त्वविद्या तस्तद्ग्राह्यं चासदिष्यताम् ॥८॥**

स्वरूपज्ञानस्यनिर्विषयत्वंनित्यत्वंचोक्तंश्रुत्योपपादयति ज्ञा तुर्ज्ञातिरिति ॥ सुषुप्तेत्वन्यस्यज्ञेयस्यासत्त्वप्रदर्शनपूर्वकंज्ञा तुरात्मनोज्ञातिःस्वरूपभूताज्ञप्तिर्नित्येतिश्रुत्योच्यतेहीत्यर्थः ॥ तथाचश्रुतिः ॥ यद्वैतंनपश्यतिपश्यन्वैतन्नपश्यतिनाहिद्रष्टुर्दृष्टे र्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्तिततोऽन्यद्वि भक्तंयत्पश्येदित्यादिका ॥ यद्यपिसुषुप्तेनिर्विषयंज्ञानंविषया भावात्स्वरूपतोनाशशीलत्वाभावाच्चनित्यंश्रुतिसिद्धम्तथाप्य वस्थांतरेसविषयमुपलभ्यतइतिज्ञातुर्ज्ञातिरनित्यास्यादित्यत- आह जाग्रदिति ॥ यतःश्रुतिसिद्धंनित्यंनिर्विषयंज्ञानम् अ तःकारणात् जाग्रज्ज्ञातिर्विषयदर्शनात्मिकाऽविद्याभ्रांतिरेवात्म नोनिर्विकारतयाज्ञानकर्तृत्वायोगादंतः करणस्यचजडत्वादेव ज्ञानाश्रयत्वानुपपत्तेरध्यस्तमेवसविषयंज्ञानम्तद्ग्राह्यंचविषय जातमसदपरमार्थमिष्यताम् स्वीक्रियतामित्यर्थः ॥ जागरि

तादौविषयाकारबुद्धिवृत्तीनाम्स्फुरणावगुण्ठितत्वात्सर्ववृत्त्यु त्पत्तिस्थितिविनाशसाक्षितयास्फुरणस्यैकस्यनित्यस्यान्यस्या वश्यमाश्रयणीयत्वाज्जाग्रत्यप्यात्मचैतन्यंनित्यमेव तथाविष याणांवृत्तिसमकालमेवस्फुरणाद्विषयव्यभिचारेपिस्फुरणाव्य-भिचारात्तस्यविषयानिरूप्यत्वान्निर्विषयत्वंचसिद्धमितिभावः ८

रूपवत्त्वाद्यसत्वान्न दृष्ट्यादेः कर्मता यथा ॥ एवं विज्ञानकर्मत्वं भूम्नो नास्तीति गम्यते ॥ ९ ॥ ॥ छ ॥ ॥

नन्वात्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यइ तिश्रुत्यैवात्मनोदर्शनादिकर्मत्वोक्तेर्दृश्यत्वाद्दशनाभुजंगादिवद सत्त्वप्राप्तिरित्याशंक्य अशब्दमस्पर्शमरूपमव्ययन्तथारसंनि त्यमगंधवच्चयत् ॥ नचक्षुषागृह्यतेनापिवाचानान्यैर्देवैस्तपसा कर्म्मणावेत्यादिश्रुतिविरोधाद्रूपादिहीनस्यदर्शनाद्यविषयत्वाद् द्रष्टव्यइत्यादिश्रुतिरर्हार्थेनतव्येनयोगाद्दर्शनाद्यर्हत्वोपदेशमुखे नानात्मप्रवणतात्पाजनार्थेत्याह रूपवत्वादिति ॥ यथाद्रष्ट व्यइत्यादिवशान्नज्ञानकर्मत्वमेवंयत्रनान्यत्पश्यतिनान्यच्छृणो तिनान्यद्विजानातिसभूमेत्यत्रापिप्रागुपन्यस्तश्रुतिविरोधाद्यत्रा न्यन्नपश्यत्यात्मानमेवपश्यतीतिस्वात्मदर्शनविधिपरत्वकल्प नायोगाद्भूम्नोब्रह्मणोविज्ञानकर्मत्वंनास्तीतिगम्यते निश्चीयतेइ त्यर्थः ॥९॥ इति सूक्ष्मताव्यापिताप्रकरणंनवमंविवृतम् ॥९॥

दृशिस्वरूपं गगनोपमं परं सकृद्वि भातं त्वजमेकमक्षरं ॥ अलेपकं स

वंगतं यदद्वयं तदेव चाहं सततं वि
मुक्त ॐ ॥१॥ ॥ ॥ ॥ ॥

इदानींपूर्वप्रकरणेयुक्त्याऽव्यवस्थापितमात्मनोनिर्विषयज्ञानस्वभावत्वं स्वानुभवाभिनयेनप्रकटयन्नविषयत्वेनैवात्मज्ञानं भवतीतिदृढयितुंप्रकरणांतरमारभते दृशिस्वरूपमिति ॥ सकृद्विभातमेकदैवविस्फुरितंसदैवस्पष्टम् भासमानमितियावत् यदेवंविधमक्षरंब्रह्मतदेवाहंसततंभवामि अतोविमुक्तः ॐइत्यभ्यनुज्ञार्थं ॐकारउक्तस्वरूपमोंकारद्वारामुमुक्षुबुद्ध्यभिव्यक्तंभवतीतिसूचयितुं ॐकारनिर्देशः ॥ १ ॥

दृशिस्तु शुद्धोहमविक्रियात्मको न
मेस्ति कश्चिद्विषयः स्वभावतः ॥
पुरस्तिरश्चोर्ध्वमधश्च सर्वतः संपू
र्णभूमा त्वज आत्मनिस्थितः॥२॥

ननुनाकाशवदलेपकत्वंदृशेःसंगच्छते दृश्यसंबंधादशुद्धिविक्रियादिदोषसंभवादित्याशंक्यदृशेरात्मस्वरूपत्वात्तस्यचनित्यशुद्धत्वादेःश्रुत्यैवनिर्धारणान्नैवमित्यभिप्रेत्यश्रुतिसिद्धमर्थं प्रकटयति दृशिस्तुशुद्धइति अहंतुदृशिःज्ञानस्वरूपइत्यन्वयः अतःपरमार्थतः शुद्धोऽशुद्ध्यादेर्ज्ञाननिबन्धनत्वात्तस्यचाभासत्वादितिभावः शुद्धमपापविद्धमितिमंत्रवर्णात् यतश्चाविक्रियात्मकःविक्रियात्मकात्प्राणादेरन्योऽप्राणोह्यमनाःशुभ्रोह्यस्थूलमनण्वन्ह्रस्वमदीर्घमित्यादिश्रुतेरतोपिशुद्धइत्यर्थः ॥ नतदश्नातिकिंचननतदश्नातिकश्चनेतिश्रुतेर्नात्मनोविषयसंसर्गइत्याह

नमेस्तीति ॥ स्वभावतःपरमार्थतः अनेनाविक्रियाहेतुविषया भावादप्यविक्रियइत्युक्तंभवति ॥ विषयाभावेनाद्वयात्मत्वेभूम वाक्यशेषमर्थतःपठति पुरस्तिरश्चेति ॥ सभगवःकस्मिन्प्रति ष्ठितइतिस्वेमहिम्निियदिवानमहिम्नीतिस्वरूपावस्थानमनन्या धीनमुपन्यस्यतदुपपादनायेदंकारास्पदंसर्वंपूर्वादिविभागेनाध रोत्तरादिविभेदेनचोपलभ्यमानम्भूमैवेतिप्रतिपाद्याहंकारास्पद स्यदेहादिबुद्धिपर्यंतस्यतर्हिभूम्नोभेदइतिशंकायामहम्बुद्धिग्राह्य मपिभूमैवेतिमध्येनिर्दिश्येदमनिदमात्मकस्यसर्वस्यभूम्नोन्य त्वाभावेभेदकाभावात्प्रत्यगात्मैवभूमेत्यात्मैवेदंसर्वमित्यंतेनसं पूर्णभूमाछांदोग्येदर्शितइत्यर्थः ॥ अजोह माविर्भाववर्जितोय तआत्मनिस्वेमहिम्निस्थितोनान्याधीनइत्यर्थः ॥ २ ॥ ॥

अजोमरश्चैव तथाजरो मृतः स्वयंप्र भः सर्वगतोहमद्वयम्॥न कारणं कार्य मतीव निर्मलः सदैकतृप्तश्च ततोवि मुक्त ॐ ॥ ३ ॥ ॥छ॥ ॥ छ ॥

आत्मनोजन्मजरादिविक्रियाभावेनकूटस्थाद्वयस्वाभाव्यप्र तिपादनपराःश्रुतीःस्वरूपतोऽर्थतश्चपठति अजोमरइति ॥ त थाचश्रुतयः अजोनित्यःशाश्वतोयंपुराणःसवाएपमहानजआ त्माऽजरोऽमरोऽमृतोऽभयोब्रह्मेति ॥ अत्रायंपुरुषःस्वयंज्योतिः तच्छुभ्रंज्योतिषांज्योतिः नित्यंविभुंसर्वगतंसुसूक्ष्मं ॥ एकोदेवः एकमेवाद्वितीयमिति तदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यमित्या दिश्रुत्यर्थमाह ॥ नकारणंकार्यमिति ॥ निर्मलोनिरंजनः नि

रंजनःपरमंसाम्यमुपैतीतिश्रुतेः एकतृप्तः एकेननिजानंदेनैवतृ
प्तइत्यर्थः ॥ आनंदंब्रह्मणोविद्वान्नबिभेतिकुतश्चन ॥ आनंदरू
पममृतंयद्विभातिइत्यादिश्रुतिभ्यः विमुक्तश्चविमुच्यतइतिश्रु
तिमाश्रित्याह ततोविमुक्तइति ॥ यतएवंलक्षणस्ततोविमु
क्तएव ॥ सदेतिपदंसर्वत्रानुषंजनीयम् यदाचार्येणोक्तंममस्वरू
पंतत्तथैवेतिशिष्योनुमन्यते ओमितिपदेनेत्यर्थः ॥ ३ ॥

सुषुप्तजाग्रत्स्वपतश्च दर्शनं न मे
स्ति किंचित्स्वमिवेह मोहनम् ॥
स्वतश्च तेषां परतोप्यसत्वतस्तुरी
य एवास्मि सदादृगद्वयः ॥ ४ ॥

ननु स्थानत्रयेन्यथाऽन्यथाप्रथमानस्यकथमविक्रियात्मक
त्वमित्यतआह सुषुप्तेति ॥ सुषुप्तश्चासौजाग्रच्चसचासौस्वपं
श्चसुषुप्तजाग्रत्स्वपन्तस्यसुषुप्तजाग्रत्स्वपतोमेममस्वमिवात्मी
यमिवेहव्यवहारेकिंचिद्दर्शनंनास्ति स्वमिवस्वरूपभूतमिवेति
वा किंतु मोहनमविवेकाविद्याध्यारोपितंजाग्रदादिदर्शनमिति
योजना ॥ तत्रहेतुमाह स्वतश्चेति ॥ तेषांजाग्रत्स्वप्नसुषुप्तिद
र्शनानांजाग्रदाद्यवस्थारूपाणांवास्वतश्चपरतोप्यसत्त्वतोसत्त्वा
दित्यक्षरयोजना ॥ नहितेषांस्वतोन्यनिरपेक्षंसत्त्वंसंभाव्यते
चकारात्स्फुरणंच आगमापायित्वेनरज्जुसर्पवदारोपितत्व
निश्चयात्तथापरतोऽपिनसत्त्वंस्फुरणंचसंभाव्यते परंचैतन्यं
स्यान्नहितेनात्मनासत्त्वादिकमेषांसंभवति प्रत्यक्परागभावेन
विरुद्धस्वभावयोस्तादात्म्यानुपपत्तेस्तत्कल्पनायाश्चभ्रांतिमात्र

त्वादित्यर्थः ॥ प्राज्ञस्तैजसोविश्वइत्येतेतत्तदवस्थावत्त्वेनभास मानाःनममस्वरूपमितिभावः ॥ तर्हिकिंस्वरूपआत्मेतितदाह तुरीयएवास्मीति ॥ विश्वादित्रयापेक्षयापरतोगम्यमानत्वाच्चतुर्थइत्यर्थः ॥ तस्यलक्षणं सदादृगितिसर्वावस्थाद्रष्टेत्यर्थः॥ विश्वादीनांस्वस्वावस्थामात्रद्रष्टृत्वादयंततोऽव्यतिरिक्तः ॥ स्थूलसूक्ष्मक्रमेणविविच्यान्वेषणदशायांविश्वादिस्थानत्रयापोहेनावसीयमानत्वात्तुरीयइत्युच्यते नपुनर्वस्तुतस्तुरीयत्वमस्तीतिद्योतयत्यद्वयइतिनिर्विशेषएवसदाहमस्मीत्यर्थः ॥ ४ ॥

शरीरबुद्धींद्रियदुःखसंततेर्न मे न
चाहं मम निर्विकारतः ॥ असत्त्व
हेतोश्च तथैव संततेरसत्त्वमस्याः
स्वपतो हि दृश्यवत् ॥ ५ ॥

कथमात्मनोनिर्विशेषत्वंशरीरादिसंबंधस्यप्रत्यक्षत्वादित्यतआह शरीरेति ॥ शरीरादिसंततेर्नमदात्मत्वंमदीयत्वं वापरमार्थतोऽस्तीत्यर्थः ॥ तत्रहेतुर्ममनिर्विकारतइति न ह्यविक्रियंवस्त्वागमापायिशरीराद्यात्मनापरिणमतेसंसृज्यते वा येनतत्स्वरूपतातद्धर्मतावाभवेदित्यर्थः ॥ हेत्वंतरमाह असत्त्वहेतोश्चतथैवसंततेरिति॥कुतोऽसत्त्वमित्यतआह असत्त्वमस्याइति ॥स्वपतःस्वप्नावस्थायांयथादृश्यंमिथ्यातथास्याः संततेर्दृश्यत्वादेवासत्त्वमित्यर्थः ॥ हिशब्दःस्वप्नदृश्यस्यमिथ्यात्वप्रसिद्धिद्योतनार्थः ॥ ५ ॥

इदं तु सत्यं मम नास्ति विक्रिया

विकारहेतुर्न हि मेऽद्वयत्वतः ॥ न पुण्यपापे न च मोक्षबंधने न चास्ति वर्णाश्रमताऽशरीरतः ॥ ६ ॥

शरीरादिसंततेर्दृश्यत्वेनचेन्मिथ्यात्वंतर्हिशुद्धत्वाविक्रियत्वादेरपिदृश्यत्वान्मिथ्यात्वंकिंनस्यादित्यतआह इदंत्विति ॥मम विक्रियानास्तिनमेविकारहेतुरप्यस्तिततः पूर्वनिरुपितादद्वयात्वद्वयाभावाद्धेतोःस्वतःपरतोवाममात्मनोविक्रियानास्तीतियदिदंतत्सत्यमित्यर्थः ॥ तुशब्दःशंकाव्यावृत्त्यर्थः ॥ अविक्रियत्वादिनाविक्रियाभावाद्युपलक्षितस्वरूपस्याभिप्रेतत्वात्तस्मिंश्च हेत्वसिद्धेर्नशंकावकाशइत्यर्थः ॥ कर्मवातत्फलंवातद्ध्वंसोवाकर्मादिसाधनंवाविक्रियाहेतुर्भविष्यतीतिकुतोद्वयत्वमित्याशंक्याह नपुण्येति ॥ पुण्यादिनेतिप्रतिज्ञायांहेतुरशरीरतइति अशरीरत्वंतुपूर्वश्लोकेप्रतिपादितमेवेत्यर्थः ॥ ६ ॥

अनादितो निर्गुणतो न कर्म मे फलं च तस्मात्परमोहमद्वयः ॥ यथा नभः सर्वगतं न लिप्यते तथा त्वहं देहगतोपि सूक्ष्मतः ॥ ७ ॥

ननु यद्यपिशरीरोपादनत्वेनतद्धर्मकत्वेनचात्मनःशरीरवत्स्वाभावस्तथापिशरीरेणास्तिसंबंधउपलभ्योपलंभकभावलक्षणइतिकथमशरीरतेत्याशंक्य नैतावतासशरीरत्वेनकर्मादियो

गितित्यभिप्रेत्यपुण्यापुण्यादिसंबंधवैधुर्यमुक्तमुपपादयति अ
नादितइति॥ यत्कर्मसमवायितदादिमद्दृष्टं यथारथशरीरादि न
चपरमाणुमनसोरनेकांतोमनसउत्पत्तिश्रवणात्परपरिकल्पित
परमाण्वनंगीकाराच्च॥यथा यत्कर्मसमवायितत्सगुणंदृष्टं यथो
क्तमेवोदाहरणं तथाचसगुणत्वंसादित्वंचाव्यापकंप्रत्यगात्मनो
व्यावर्तमानं॥तस्यक्रियावत्त्वंस्वव्याप्यमादायनिवर्ततइति॥क्रि
यावत्त्वाभावात्तत्साध्यपुण्याद्यसंभवइतिभावः॥ कर्मपुण्यादि
लक्षणंफलंतत्साध्यंसुखदुःखादिरूपंफलंचनमेस्तीत्यन्वयः॥त
स्मादहंपरमउत्तमः संसारिभ्योविलक्षणः अद्वयो निर्विशेषः
क्रियावत्वाभावात्तत्साध्यपुण्याद्यसंभवइतिविलक्षणत्वमुपपाद
यति यथेति ॥ देहगतोदेहमाप्तः तत्रोपलभ्यमानोपीत्यर्थः ॥
सूक्ष्मतोऽमूर्तत्वादित्यर्थः॥तथाचाहभगवान् अनादित्वान्निर्गुण
त्वात्परमात्मायमव्ययः॥शरीरस्थोपिकौंतेयनकरोतिनलिप्यते
॥ यथासर्वगतंसौक्ष्म्यादाकाशंनोपलिप्यते॥सर्वत्रावस्थितोदेहे
तथात्मानोपलिप्यतेइति ॥ ७ ॥

सदा च भूतेषु समोहमीश्वरः क्षराक्ष
राभ्यां परमोह्यथोत्तमः ॥ परात्म
तत्त्वश्च तथाद्वयोपि सन् विपर्ययेणा
भिमतस्त्वविद्यया ॥ ८ ॥ छ ॥

ननूपलभ्यधिष्ठानानांदेहादीनांवैषम्यदर्शनात्तत्रोपलभ्य
मानस्यात्मनोपितत्कृतवैषम्यसंभवात्कुतःपरमात्मत्वंपरिपूर्ण
ताचेत्याशंक्य अयंतारतम्यप्रतिभासोऽविद्याविलसितोनपर

मार्थतइत्याह ॥ सदाचेति ॥ ईश्वरइत्यनेनोपाधिवश्यत्वा भावंसूचयति ॥ अतोनमेदेहादिकृतंवैषम्यमित्यर्थः ॥ ईश्वर इत्युक्तेतस्येशितव्यापेक्षत्वात्सद्वयत्वशंकास्यात्ततआह ॥ क्ष राक्षराभ्यामिति ॥ अथवेश्वरत्वमेवसाधयति ॥ क्षराक्ष राभ्यामिति ॥ हियस्मात्क्षराक्षराभ्यांपरमोथतस्मादहमुत्तमइ त्यन्वयः ॥ क्षरतिनश्यतीतिक्षरःकार्यवर्गःनक्षरतीत्यक्षरंका रणंमायाशबलितंचिद्वस्तुताभ्यांपरमोऽव्यतिरिक्तःकार्यकारणा दिभेदकल्पनांधिष्ठानभूतइत्यतउत्तमः पुरुषोत्तमइत्यर्थःयतउ त्तमोऽतःपरेषामात्मनांतत्त्वंस्वरूपमस्मिन्निनितिपरमात्मतत्त्वश्च अहमेवसर्वात्माचेत्यर्थः ॥ एवंविधश्चेदात्माकथंतर्हितत्रविपरी तस्वरूपप्रतिभासइत्यतआह ॥ तथाद्वयोपिसन्निति उक्तोत्तर मेतदविद्याविलसितएवविपर्ययइत्यर्थः ॥ तथाचभगवतोक्तं ॥ द्वाविमौपुरुषौलोकेक्षरश्चाक्षरएवच ॥ क्षरःसर्वाणिभूतानिकूट स्थोक्षरउच्यते ॥ उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतः ॥ यो लोकत्रयमाविश्यबिभर्त्यव्ययईश्वरः ॥ यस्मात्क्षरमतीतोह मक्षरादपिचोत्तमः ॥ अतोस्मिलोकेवेदेचप्रथितःपुरुषोत्तम इति ॥ ८ ॥

**अविद्यया भावनया च कर्मभिर्वि विक्त आत्माऽव्यवधिः सुनिर्म लः ॥ दृगादिशक्तिप्रचितोहमद्वयः स्थितः स्वरूपे गगनं यथाचलं ॥ ९ ॥**

तर्हिकिमविद्यासंबंधोवर्ततेनेत्याह अविद्ययेति ॥ अविद्या

मूलाज्ञानं भावनातत्कृतोदेहाद्यभिमानः कर्माणितत्पूर्वका णि पुण्यपापलक्षणानि तैर्विविक्तस्तत्संस्पर्शशून्यः कुतोयस्मा दव्यवधिर्व्यवधानंवस्त्वंतरकृतोवछेदस्तद्रहितोऽव्यवधिः ॥ अयमाशयः ॥ चित्प्रकाशस्तावदात्मेतिश्रुतिस्मृतीतिहासपुरा णन्यायसिद्धं ॥ अविद्याचजडाऽप्रकाशात्मिका अतस्तयोर्वि रुद्धस्वभावयोः परमार्थतःसंबंधोदुर्घटएवेतिस्थितेऽनवछिन्नचै तन्यमात्रंतावन्नाविद्याश्रयउपपद्यते ॥ तथासत्यणुमात्रस्या पिप्रकाशानुपपत्तिप्रसंगात् ॥ नापिकेनचिदवछिन्नभागाविशे षमविद्याव्यतिरिक्तस्य तस्यकल्पनायाअनिबंधनत्वात्तस्मादवि द्यातिरिक्तव्यवधानाभावादव्यवधित्वेसतिदिवांधपरिकल्पितां धकारवदात्मन्यविद्यादिकल्पनमिति ॥ अतएवसुनिर्मलःसर्वा शंकितदोषरहितइत्यर्थः ॥ एवंविधआत्मनिकथंद्रष्टाश्रोतामं ताबोद्धेत्यादिव्यवहारइत्याशंक्याऽविद्याध्यस्तांतःकरणपरिणा मरूपदृगादिशक्तिसंबंधादेवद्रष्टृत्वाद्युपचयप्रातिभासोनपरमार्थ तइत्याह ॥ दृगादिति स्पष्टमन्यत् ॥ ९ ॥

अहं परं ब्रह्म विनिश्चयात्मदृग् न
जायते भूय इति श्रुतेर्वचः॥न चै
व बीजे त्वसति प्रजायते फलं न
जन्मास्ति ततो ह्यमोहता ॥१०॥

एवंविधात्मतत्त्वपरिज्ञानेसतिकैवल्यंफलतीत्याह ॥ अ हंपरंब्रह्मेति अहंपरंब्रह्मेतिनिश्चयेनात्मनिदृक्ज्ञानंयस्यसत थोक्तःसभूयः पुनर्नजायते शरीरवान्नभवतिइतिश्रुतेर्वचोवि

द्यतइतिशेषः तथाचश्रुतिः सतुतत्पदमाप्नोतियस्माद्भूयोनजायतेपुरुषान्नपरंकिंचित्साकाष्ठासापरागतिः ॥ अथसोभयंगतो भवति ॥ ब्रह्मवेदब्रह्मैवभवतीतिचश्रुतिसिद्धेर्थेयुक्तिमप्याह न चैवेति उक्तंसामान्यन्यायंप्रकृतेयोजयति ॥ नजन्मास्तीति ॥ हियस्मादमोहता प्रागुक्तवर्त्मनामोहराहित्यंततोहेतोर्नजन्मास्तीतियोजना ॥ मोहपदवाच्याऽविद्यामूलत्वाज्जन्मादिविकारस्यतदभावेऽभावएवेत्यर्थः ॥ १० ॥

**ममेदमित्थं च तथेदमीदृशं तथाहमेवं न परो न वान्यथा ॥ विमूढतैवं न जनस्य कल्पना सदा समे ब्रह्मणि चाद्वये शिवे ॥ ११ ॥**

मोहकार्यत्वात्संसारस्यमोहनिवृत्त्यानिवृत्तिरेवेत्युक्तं ॥ तत्र किमात्मकंमोहकार्यमित्यपेक्षायांतदाह ॥ ममेदमिति ॥ प्रथमंदेहद्वयेऽहंकारः ततस्तद्बाह्यार्थकल्पनमिदमिति ॥ तत्रशोभनाद्यध्यासइत्थमिति ततोममेदंतच्चेदृशंतथानममेदमित्यादिकल्पनातथापरोप्येवंनैवमन्यथावानास्तिवाअस्तिवाइतिविमूढता ममपरस्यवासुज्ञताच तथाचइत्येवंजनस्यजन्मादियोगिनोऽनाद्यज्ञानतिरोहितात्मस्वभावस्ययाएवंविधाकल्पनासासदासमेब्रह्मण्यद्वयेशिवेपरमानंदरूपेणचनास्त्येवेत्यर्थः॥ ११ ॥

**यदद्वयं ज्ञानमतीव निर्मलं महात्मनां तत्र न शोकमोहता ॥ तयोरभा**

वे न हि कर्म जन्म वा भवेदयं वेद विदां विनिश्चयः ॥ १२ ॥

एवंविचित्रस्यसंसारस्यात्मतत्त्वज्ञानेनतदज्ञाननिवृत्त्यानि वृत्तिमुक्तांस्फुटयति ॥ यदद्वयमिति अद्वयमद्वयात्माकारम तीवनिर्मलमसंभावनाविपरीतभावनादिप्रतिबंधरहितंयज्ज्ञानं तत्रतस्मिन्सतिमहात्मनांब्रह्मभूतानांशोकमोहतासंसारित्वंना स्त्येवेत्यर्थः तथाचमंत्रः तत्रकोमोहःकःशोकएकत्वमनुपश्य तइति ॥ तयोःशोकमोहयोरभावेतदुपलक्षितस्यतत्कारण स्याज्ञानस्यनिवृत्तौबीजाभावेफलाभावन्यायेनजन्मादिपुनर्न हिभवेदितिवेदार्थविदांविनिश्चयइत्यर्थः तथाचश्रुतिः ॥ भि द्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः क्षीयंतेचास्यकर्माणितस्मि न्दृष्टेपरावरे ॥ १२ ॥ ॥ छ ॥ ॥ छ ॥

सुषुप्तवज्जाग्रति यो न पश्यति द्वयं तु पश्यन्नपि चाद्वयत्वतः ॥ तथा च कु र्वन्नपि निष्क्रियश्च यः स आत्मवि न्नान्य इतीह निश्चयः ॥ १३ ॥

एवमुक्तस्यात्मविदःस्वरूपमाह ॥ सुषुप्तवदिति जाग्रतिवि श्वावस्थायां द्वयं द्वैतप्रपंचं प्राग्वासनावशात्पश्यन्नप्युल्लिख न्नपिविशेषतोनपश्यति ॥ किंतुसुषुप्तवत्प्रविलीनप्रपंचप्रत्यगा त्मस्वरूपेणैवपश्यतीतियोजना ॥ तत्रहेतुरद्वयत्वतइति द्वैत स्यबाधितत्वादित्यर्थः तथाच यथापूर्वंस्नानशौचभिक्षाटनादि

कुर्वन्नपि निष्क्रियोनिर्विकारोऽकर्त्रात्मस्वभावाविर्भावाद्यएवंवि
धःसआत्मविद्विक्षेपदशायामप्यप्रच्युतात्मयाथात्म्यदर्शनत्वा
त् ब्रह्मविदामुत्तमोयमेव नान्यःशास्त्रार्थज्ञोपियोऽव्यवहारकाले
ज्ञातृत्वकर्तृत्वाद्यभिमानवानित्यर्थः इतिइत्थमिहवेदांतशास्त्रे
विनिश्चयः ॥ १३ ॥ ॥ छ ॥ ॥ छ ॥

**इतीदमुक्तं परमार्थदर्शनं मया हि वेदांतविनिश्चितं परं ॥ विमुच्यतेस्मिन्यदि निश्चितो भवेन्नलिप्यते व्योम इवेह कर्मभिः ॥ १४ ॥**

शास्त्रन्यायानुसारेणस्वानुभवंप्रदर्श्येदानीमस्मिन्दर्शनेपरि
निष्ठितस्यकृतकृत्यताभवतीतिदर्शयन्परानुग्रहायप्रकरणनिर्मा
णेप्रवृत्तिरितिसूचयति ॥ इतीदमुक्तमिति वेदांतविनिश्चितमि
त्युक्तदर्शनस्यपरमार्थविषयत्वेप्रमाणमुक्तं ॥ व्योमइवेतिवि
संधिर्वृत्तपूरणार्थः ॥ १४ ॥ इतिदृशिस्वरूपपरमार्थद
र्शनप्रकरणंदशमंविवृतं ॥ १० ॥

**ईक्षितृत्वं स्वतः सिद्धं जंतूनां च ततोऽन्यता ॥ अज्ञानादित्यतोन्यत्वं सदसीति निवर्त्यते ॥ १ ॥**

ब्रह्मात्मैक्यज्ञानमात्रनिष्ठोमुच्यतइत्युक्तंतन्नोपपद्यते कर्म
साध्यत्वान्मुक्तेः कर्मसहितज्ञानसाध्यत्वाद्वा तथा ज्ञानस्यवेदां
तविनिश्चयत्वमुक्तं तदपिसंदिग्धमनुमानादिनाप्युपपत्तेरिती

मांशंकांपरिहर्तुंप्रकरणांतरमारभते ॥ ईक्षितृत्वमित्यादिना ॥ तत्रादौज्ञानादेवमुक्तिर्ज्ञानंचवेदांतमहावाक्यादेवनानुमानादिने त्येतत्साधयति अन्यत्वंसदसीतितिनिवर्त्यतइति त्वं तत्स च्छब्दलक्षितंब्रह्मैवासि नसंसारीति वाक्योपदेशेनैवसच्छब्दा र्थात्ब्रह्मणोन्यत्वंजीवस्यनिवर्त्यतइत्यर्थः॥ संसारिणोजीवस्या शुद्धस्य कथं तद्विपरीतब्रह्मत्वंसंभाव्यतइत्यतआह॥ ईक्षितृत्व मितिसर्वेषामेवजंतूनां प्राणिनां चिद्रूपत्वमेवेक्षितृत्वंतत्स्वतः सिद्धं स्वाभाविकंरूपं चकारःशंकानिवृत्त्यर्थः ॥ कर्तृत्वभो क्तृत्वादरपिस्वाभाविकत्वशंकानकार्या स्वरूपव्यभिचारादित्य र्थः ॥ कुतोज्ञानादेवान्यत्वनिवृत्तिरूपामुक्तिरित्यतआह ॥ अज्ञानादित्यतइति ॥ इति यतोन्यताऽन्यत्वमज्ञाननिबंधनं नपरमार्थोतइत्यर्थः ॥ अज्ञानकल्पितत्वाद्ब्रह्मविपरीतरूपत्व स्यस्वतश्चिन्मात्रस्वभावत्वादज्ञाननिवृत्तिलक्षणत्वाच्चमोक्षस्य तस्यचतत्त्वज्ञानमात्रापेक्षणात् ॥ ज्ञानस्यच यथोक्तवाक्या देवोत्पत्तेर्नमानांतरंसाधनांतरंचात्रमृग्यतइतिभावः ॥ १ ॥

**एतावद्ध्यमृतत्वं न किंचिदन्यत्स हायकं ॥ ज्ञानस्येति ब्रुवच्छास्त्रं स लिंगं कर्म बाधते ॥२॥ ॥छ॥**

कर्मणोमोक्षहेतुत्वकल्पनंज्ञानसहायत्वेननोपपद्यते श्रु तियुक्तिविरोधादित्याह ॥ एतावद्धीति ॥ एतावदेवखल्वमृ तत्वमित्येतदमृतत्वसाधनमात्मज्ञानमेवेत्येतावच्छब्देनावधा रयंतीश्रुतिःशास्त्रमुच्यते ॥ तज्ज्ञानस्य किंचिदन्यन्नसहायभू

तमस्तीतिब्रुवतसलिंगं ससाधनं कर्मबाधतइतियोजना ॥ अद्वैतात्मज्ञानादूर्ध्वं कर्महेतुजात्याद्यभिमानाभावे कुतःकर्मयत् ज्ञानस्यमोक्षफले सहायभूतं भवेदितिभावः ॥२॥

**सर्वेषां मनसो वृत्तमविशेषेण पश्यतः ॥ तस्य मे निर्विकारस्य विशेषः स्यात्कथंचन ॥ ३ ॥**

इदानीमीक्षितृत्वमित्यत्रोक्तं स्वाभाविकंचिद्रूपत्वं प्रपंचयन्नूज्ञानिनःकर्मनघटतइत्येतदुपपादयति ॥ सर्वेषामिति ॥ विशेषः कर्तृत्वादिलक्षणोविहितकर्मसाधनजात्याद्यभिमानलक्षणश्चेत्यर्थः कथंचनेत्याक्षेपार्थोनकथंचनमेविकारःस्यादित्यर्थः ॥ कुतइत्यतआह ॥ अविशेषेणोति ॥ अभिमानशून्यतयाकेवलंसाक्षिमात्रेणपश्यतइत्यर्थः ॥ ३ ॥

**मनोवृत्तं मनश्चैव स्वप्नवज्जाग्रतीक्षितुः ॥ संप्रसादे द्वयासत्वाच्चिन्मात्रः सर्वगोऽव्ययः ॥४॥**

कथंमनोवृत्तंपश्यत्यविशेषेणात्मेत्यपेक्षायां दृष्टांतपूर्वकंतदुपपादयंश्चिदेकरसत्वमात्मनोनिगमयति ॥ मनोवृत्तमिति स्वप्नदशायांसवृत्तिकंमनएवपश्यत्यात्मायथाबाह्यविषयाभावात्तथाजाग्रतिजागरणदशायांमनोवृत्तंमनःप्रचारंमनश्चतदाश्रयंपश्यतःकथंविशेषःस्यादितिपूर्वश्लोकेनान्वयः ॥ जाग्रद्दशायामपिविषयाकारवृत्तिमन्मनोऽव्यतिरेकेणनात्मनाकिमप्युपलभ्य

तइतिभावः ॥ तर्ह्येवंविधमनोदर्शनमेवस्वाभाविकोविशेषइत्य
तआहसंप्रसादइतिसंप्रसादेसुषुप्तिदशायांद्वयरूपसद्वृत्तिकस्य
मनसोसत्वान्नतद्दर्शनमपिस्वाभाविकं ॥ नतुतद्वितीयमस्तिततो
न्यद्विभक्तंयत्पश्येदितिश्रुतेः ॥ तथाचात्माचिन्मात्रःसर्वगोऽप
रिछिनोऽव्ययोनित्यइतिसिद्धमित्यर्थः ॥ ४ ॥

**स्वप्नः सत्यो यथा बोधाद्देहात्मत्वं तथैव च ॥ प्रत्यक्षादेः प्रमाणत्वं जाग्रत्स्यादात्मवेदनात् ॥ ५ ॥**

ननुयद्येवंतदाबाह्याभ्यंतरद्वैतस्याभावएवेतियुक्तंस्यात्तन्नोप
पद्यतेप्रत्यक्षादिप्रमाणविरोधाल्लौकिकवैदिकव्यवहारविलोपप्र
प्रसंगाच्चेतिचेन्नेत्याह ॥ स्वप्नइति ॥ यथाआबोधात्प्रबोधपर्यं
तंस्वप्नःसत्योलौकिकवैदिकव्यवहारास्पदतयावभासते ॥ त
थैवजाग्रज्जाग्रदवस्थायामपिदेहात्मत्वंप्रत्यक्षादेःप्रमाणत्वंच
सर्वव्यवहारांगंस्यात् ॥ कियत्पर्यंतमित्यतआह ॥ आत्मवेदना
दिति॥ आआत्मवेदनादितिपदछेदःआत्मतत्त्वसाक्षात्कारात्प्रा
गेवसर्वोव्यवहारस्तस्मिन्सतिव्यवहाराभावइष्टएवेतिभावः५॥

**व्योमवत्सर्वभूतस्थो भूतदोषैर्विवर्जितः ॥ साक्षी चेतागुणः शुद्धो ब्रह्मैवास्मीति केवलः ॥ ६ ॥**

अव्यवहार्यस्वरूपमाविष्करोति व्योमवदितिद्वाभ्यां ॥ चे
ताचिद्रूपःसाक्षीतिभूतदोषराहित्येहेतुः व्योमवत् सर्वभूतस्थ

इत्यसंगत्वमुक्तं सर्वभूतेष्वहमाकारवृत्तावभिव्यक्त्यपेक्षयासर्वभूतस्थइत्युच्यते ॥ एतच्चाहंमनुरभवंसूर्यश्चेतितत्सर्वात्मत्वाभिनयाभिप्रायइतिद्रष्टव्यं शुद्धोऽज्ञानरहितःकेवलोवस्थात्रयरहितःब्रह्मैवपूर्णएवास्मीत्यर्थः ॥ ६

**नामरूपक्रियाभ्योन्योनित्यमुक्तस्वरूपवान् ॥ अहमात्मा परं ब्रह्म चिन्मात्रोहं सदाद्वयः ॥ ७ ॥**

केवलत्वंव्यनक्ति ॥ नामरूपेति ॥ वाच्यवाचकतद्व्यापारात्मकप्रपंचविहीनइत्यर्थः ॥ सुगममन्यत् ॥ ७ ॥

**अहं ब्रह्मास्मि कर्त्ता च भोक्ता चास्मीति ये विदुः ॥ ते नष्टा ज्ञानकर्मभ्यां नास्तिकाः स्युर्नसंशयः ॥८॥**

कथमद्वयत्वमात्मनःसंगच्छते ॥ अहंब्रह्मास्मीतिवदहंकर्तास्मीतिचानुभवस्यप्रमाणमूलत्वादितिज्ञानकर्मसमुच्चयवादिनोभेदाभेदमतानुसारिणस्तान्कुत्सयन्नद्वैतात्ममतंद्रढयतिअहंब्रह्मास्मीति ॥ विरुद्धार्थप्रतिपादकत्वायोगाच्छास्त्रस्यविरुद्धंतत्त्वमवगच्छतांकर्मकांडाज्ज्ञानकांडाच्चबहिर्मुखत्वान्नास्तिकत्वमेवतेषांफलिष्यतीत्यर्थः ॥ ८ ॥

**धर्माधर्मफलैर्योग इष्टो दृष्टोयथात्मनः ॥ शास्त्राद्ब्रह्मत्वमप्य**

**स्य मोक्षो ज्ञानात्तथेष्यतां॥ ९॥**

ननुनिंदामात्रेणकथमद्वैतैकमतसिद्धिस्तत्रप्रमाणस्यासंभवादित्यतआह ॥ धर्माधर्मेति ॥ आत्मनोधर्माधर्मफलैःसुखदुःखादिरूपैर्योगःसंबंधःप्रमाणांतरैरदृष्टोपियथाशास्त्रादेव पुण्योवैपुण्येनकर्मणाभवतिपापःपापेनेत्यादेरिष्टोंगीकृतः शास्त्रार्थविद्भिरितिशेषः ॥ तथास्यात्मनोब्रह्मत्वंज्ञानादेवमोक्षश्चेति ब्रह्मवेदब्रह्मैवभवति तमेवविदित्वातिमृत्युमेति नान्यःपंथाविद्यतेयनायेत्यादिशास्त्रादिष्यतां ॥ तथाचभेदकर्मणोर्निंदितयोः शास्त्रतात्पर्यविषयत्वायोगाच्छास्त्रानुसारिभिर्यथाशास्त्रमर्थःप्रतिपत्तव्यइतिभावः ॥ ९ ॥ ॥ ॥ ॥

**यामहारजनाद्यास्तावासनाः स्वप्न दर्शिभिः ॥ अनुभूयंतएवेह ततो न्यः केवलोद्दशिः ॥ १० ॥**

नन्वात्मनोधर्माधर्मफलयोगःशास्त्रोक्तोमानांतरविरोधाभावात्तथैवेतियुज्यते ॥ नतथात्मनोब्रह्मत्वं ॥ प्रत्यक्षदृष्टकर्तृत्वादिविरोधादतः श्रुत्यनुभवयोरविरोधायभेदाभेदावादरणीयाविति चेन्नैवं कर्तृत्वादिप्रतिभासस्यासत्वाच्छ्रुत्युक्ताद्वैतप्रतिपक्षत्वानुपपत्तेरितिसदृष्टांतमाह ॥ यामहारजनाद्याइति ॥ तस्यहैतस्यपुरुषस्यरूपंयथामहारजनंवासइत्यारभ्ययथासकृद्विद्युतमित्यंतेनश्रुत्युक्तायावासनास्ताःस्वप्नदर्शिभिरनुभूयंतएवयथेत्यक्षरयोजना ॥ महारजनंहरिद्रातयारंजितंवस्त्रादिमहारजनंस्वप्नदशायांजाग्रद्वासनावासितस्यमनसोवातपित्तश्ले

प्मदूषितरसपूर्णनाडीष्वनुगतस्यादृष्टादिसमुद्बोधितानेकवास नातयाजाग्रद्दृष्टार्थाकारेणपरिणममानस्यहरिद्रारंजितपटादि रूपसदृशतयाभासमानस्यद्रष्टृदृश्यदर्शनतत्करणादिभावेन नित्यंस्वप्नद्रष्ट्रोपलभ्यमानत्वात्स्वप्नदृश्याभ्योमहारजनादिसदृ शवासनाभ्योलिंगात्मसहिताभ्योद्रष्टात्मादृशिस्वभावोविलक्ष णोलक्ष्यते ॥ तथाकर्तृत्वादीनांदृश्यत्वादनात्मधर्मत्वमेवेति निश्चितमेवेहजाग्रदवस्थायामपि ॥ ततःकर्तृत्वादिधर्मकाल्लिं गादन्यःकेवलःशुद्धोदृशिरात्मेत्यर्थः ॥ १० ॥

**कोशादिव विनिष्कृष्टः कार्यकार ण वर्जितः ॥ यथासिर्दृश्यते स्वप्ने तद्वद्बोद्धा स्वयंप्रभः॥ ११ ॥**

आत्मनः स्वप्नावस्थायांदृश्यविलक्षणत्वेनप्रतीतिमेवदृष्टांते नस्पष्टयति कोशादिवेति ॥ इवशब्दोयथाशब्दार्थेअसिरिवेति संबंधः ॥ यथाशब्दोयथावदित्यर्थेयथासिःखड्गःकोशात्पृथक् कृतःस्वरूपेणदृश्यतेतद्वदेवंबोद्धाआत्माकार्यकारणविवर्जितः कार्यकारणाकारमनसोलिंगात्पृथग्भूतःस्वप्नेयथावद्दृश्यतेदृश्य तइत्युक्ते विषयवद्दृश्यत्वात् मिथ्यात्वमित्याशंक्यविशिनष्टि ॥ स्वयंप्रभइति ॥ स्वमहिम्नैवप्रथते नविषयतयेत्यर्थः ॥ यद्वाक थमवगम्यतेस्वप्नेकार्यकारणविवर्जितइतिवीक्षायांयत्रायंपुरु षःस्वयंज्योतिरितिश्रुतिसामर्थ्यादित्याह ॥ स्वयंप्रभइति ॥ स्व यंप्रकाशइतिश्रुत्यानिर्णीतइत्यर्थः उपाधेःपृथक्स्वरूपेणावभा समात्रेऽसिदृष्टांतइतिनवैषम्यशंकावकाशइतिद्रष्टव्यं ॥११॥

आपेषात्प्रतिबुद्धस्य ज्ञस्य स्वाभा
विकं पदं ॥ उक्तं नेत्यादिवाक्येन
कल्पितस्यापनेतृणा ॥ १२ ॥

आत्मनःकर्तृत्वादिप्रतिभासस्यस्वप्नप्रतिभासवन्मिथ्यात्वा
त्शुद्धएवात्माब्रह्मैवेतिशास्त्रादविरोधेनैवप्रत्येतुंशक्यत्वान्नभेदा
भेदकल्पनयामनःखेदनीयमितिसिद्धेर्थे सोपक्रमंवाक्यंप्रमाण
माह ॥ आपेषादिति ॥ तंपाणिनापेषंबोधयांचकारसहोत्त
स्थावितिश्रुतौसुप्तपुरुषोबृहत्पांडुरवासःसोमराजन्नित्यादिप्राण
नामभिरामंत्रितोनोत्थितःपाणिनात्वापिष्यमाणउत्थितइतिनि
र्धारितस्तेनप्राणेंद्रियादिस्वरूपलिंगसंघातविलक्षणःस्थूलसंघा
ताद्प्यन्यएवात्मेतिप्रतिपन्नमतएवजडविलक्षणत्वात्ज्ञानस्व
भावःतस्यापेषत्वात्प्रतिबुद्धस्यज्ञस्यत्वंपदार्थस्यस्वाभाविकंपदं
परब्रह्मलक्षणमुक्तं ॥ केन नेत्यादिवाक्येन यथातआदेशोने
तिनेत्यारभ्यसत्यस्यसत्यमितिप्राणावैसत्यंतेषामेषसत्यमित्यं
तेनवाक्येनेत्यर्थः ॥ किंविषयेणवाक्येनकल्पितस्याध्यस्त
स्यमूर्त्तामूर्त्ततद्वासनाश्रयरूपस्यापनेतृणाप्रतिषेधकेननेतिनेती
तिवीप्सयासमस्तकारणकार्यात्मकोपाधिप्रतिषेधद्वाराऽखण्डे
ब्रह्मणिपर्यवसितेतेनेत्यर्थः ॥१२॥

महाराजादयो लोका मयि यद्वत्प्र
कल्पिताः॥ स्वप्ने तद्वद्द्वयं विद्याद्रूपं
वासनया सह ॥१३॥ ॥ ॥

नेतिनेत्यादिशास्त्रेणनिषिध्यमानस्यकल्पितत्वंश्रुत्यैवोपपा

दितमित्याह ॥ महाराजादयइति॥स्वप्नेस्वप्नावस्थायांमहाराजादयोलोकायद्वन्मयिद्दगात्मानिप्रकल्पितास्तद्वदेववासनयालिंगाश्रितयासहद्वयंरूपंमूर्तंचैवामूर्तंचमयिकल्पितंविद्यात्॥ तथाचश्रुतिःयत्रैषएतत्सुप्तोभूद्यएषविज्ञानमयःपुरुषइत्युपक्रम्यसयत्रैतत्स्वप्नमाचरतितेहास्यलोकास्तदुतेवमहाराजोभवत्युतेवमहाब्राह्मणउतेवोच्चावचंनिगच्छतीतिइवशब्देनमहाराजत्वादेःस्वप्नदृश्यस्याभासतांमध्येनिर्दिश्यैवमेवैषएतत्प्राणान्गृहीत्वास्वेशरीरेयथाकामंपरिवर्ततेइत्युपसंहरंतीशरीरमध्यएवप्राणशब्दवाच्यलिंगोपाधिम्महाराजाद्यात्मतयागृहीत्वास्वप्नदृग्व्यवहरतीतिदर्शयति ॥अतोनस्वप्नोपलब्धंपरमार्थमित्यर्थः तथाचवासनाश्रयलिंगशरीरसहितस्यमूर्तामूर्तरूपस्थूलस्यापिदृगात्मनिकल्पितत्वंतद्दृश्यत्वादुपपन्नमेवेतियुक्तमितितात्पर्यार्थः ॥ १३ ॥

## देहलिंगात्मना कार्या वासनारूपिणा क्रियाः ॥ नेतिनेत्यात्मरूपत्वान्न मे कार्या क्रिया क्वचित् ॥१४॥

स्वप्नप्रपंचवज्जाग्रत्प्रपंचस्यापिप्रत्यगात्मनिकल्पितत्वेसिद्धेप्रत्यक्तत्त्वाभिज्ञस्यकर्मासंभवःसिद्धइत्याह देहलिंगेति॥ क्रियाःकर्म्माणिदेहलिंगात्मनास्थूलसूक्ष्मदेहरूपेणतदभिमानेनतदात्मतामापन्नेनात्मनाकार्याअनुष्ठेयाः नपुनस्तन्निरपेक्षेणतदभिमानहीनेनअसंभवादित्यर्थः॥ किंलक्षणेन वासनारूपिणावासनाःरूपयितुंसंचेतुंशीलमस्यास्तीतिवासनारूपीतेनपुनःपुनःकर्मप्रवृत्तिनिमित्तेनाविच्छिन्नेनेत्यर्थः॥ इदानींमेममनेतिनेत्यादिनोक्तात्मस्वरूपत्वाद्देहद्वयाभिमानाभावात्क्वचित्स्वप्नेवाजागरेवा

नक्रियाकार्याकर्तव्या स्वभावतोविधितोवेत्यर्थः ॥ १४ ॥ ॥

न ततोमृततताशास्ति कर्मणोऽज्ञान
हेतुतः ॥ मोक्षस्य ज्ञानहेतुत्वान्न त
दन्यदपेक्षते ॥ १५ ॥ ॥छ॥

अज्ञानविलसितदेहाभिमानादेवकर्मेतितस्याज्ञानमूलत्वेसि
द्धेनतेनमोक्षाशाकर्तव्येत्याह ॥ नततइति ॥ ततस्तस्मात्कर्म
णोहेतोरमृततायामोक्षभावस्याशाआशंसनंनास्तिकुतोज्ञानहे
तुतोऽज्ञानहेतुकत्वादविवेकपूर्वकत्वात्कर्मणइत्यर्थः ॥ जडयोर
ज्ञानकर्मणोरित्यर्थः ॥ जडयोरज्ञानकर्मणोर्विरोधाभावान्नाज्ञा
ननिवृत्तिरूपेमोक्षेकर्म्माशाकार्या ब्रह्मात्मनावस्थानरूपस्यच
परमानंदाविर्भावलक्षणस्यमोक्षस्यचतुर्विधक्रियाफलविलक्ष
णत्वान्नतत्रापिकर्मापेक्षेतिभावः ॥ कर्मणःस्वतोमोक्षहेतुत्वाभा
वेपिमोक्षहेतुज्ञानसहायतयातद्धेतुर्भविष्यतीत्याशंक्याज्ञाननि
वृत्तौज्ञानमात्रस्यसमर्थत्वान्नतत्रकर्मसहायतापेक्षोतिनाऽपीतर
त्रतस्यस्वतःसिद्धत्वादित्यभिप्रेत्याह ॥ मोक्षस्येति ॥ १५ ॥

अमृतं चाभयं नार्त्तं नेतीत्यात्मा
प्रियो मम ॥ विपरीतमतोन्यद्यत्त्य
जेत्तत्सक्रियं ततः ॥ १६ ॥ ॥छ॥

यदिकर्मसाध्यममृतत्वंस्यात्तर्हिस्वर्गादिवत्कृष्यादिफलवच्चा
नित्यंसभयंचस्यात्तच्चाऽनिष्टमभयंप्रतिष्ठांविंदतइत्यभयरूपत्व
श्रुतिविरोधादतोन्यदार्त्तमितिमोक्षस्वरूपादन्यस्यार्तत्वोक्त्यात

स्यानार्तत्वपर्यवसानवचनविरोधाच्चेत्यभिप्रेत्याह॥अमृतंचेति॥ चशब्दस्त्वर्थः ॥ अमृतंत्वभयंनार्त्तमित्यर्थः ॥ यद्यपिब्रह्मस्वरूपममृतत्वमुक्तलक्षणमकर्मसाध्यं तथापिजीवोन्यस्तत्कर्मणैव लभेतेत्याशंक्यजीवस्यब्रह्मणोन्यत्राभावान्मैवमित्याह॥ नेतीति ॥ यःप्रियोजायादिःप्रीत्यास्पदतयाविभाव्यते समममात्मा स्वरूपभूतोनेनजीवेनात्मनानुप्रविश्येत्यादिश्रुतेः ॥ सचनेतीत्यपोढाशेषविशेषइतिमद्रूपत्वान्नतस्यकर्म्मप्राप्यममृतत्वमित्यर्थः अतउक्तादात्मस्वभावाद्यदन्यद्भेदबुद्ध्यागृह्यमाणंविपरीतं दृश्यमनात्मभूतंतत्क्रियासहितंत्यजेत्तदभिमानंपरित्यजेत्तुतत्तस्मात्कारणादित्युपसंहारार्थः ॥ नचायमात्मज्ञस्यविधिस्तस्याविनियोज्यत्वात्तम्प्रत्यनुवादमात्रंसाधकस्यपुनरुपयुज्यते नियोगइतिइहविधिप्रत्ययनिर्देशइतिद्रष्टव्यं ॥ १६ ॥ ॥ इतिईक्षितृत्वप्रकरणमेकादशंविवृतं ॥ ११ ॥

## प्रकाशस्थं यथा देहं सालोकमभिमन्यते ॥ द्रष्टाभासं तथा चित्तं द्रष्टाहमिति मन्यते ॥ १ ॥

ननुयदिभोक्ताप्रियशब्दोक्तेर्निर्विशेषब्रह्मस्वरूपएवतर्हिसर्वोलोकोऽहमहमित्यात्मानमनुभवन्नपिब्रह्माऽहमितिकथंनानुभवतीत्याशंकायांपदार्थतत्त्वपरिशोधनाभावापराधादेवेतित्वंपदार्थशोधनप्रधानंप्रकरणमारभमाणःसाभासान्तःकरणाविवेकाद्यथात्म्येनस्वात्मानंनप्रत्येतिसर्वोलोकइतिप्रथमंसदृष्टांतमाह प्रकाशस्थमिति॥यथायंजनःस्फीतालोकमध्यगतंस्थूलंदेहंततोविलक्षणमपि तेनालोकेनव्याप्तत्वात्सालोकमालोकविशिष्टमभिभ

न्यते तथाद्रष्ट्राभासंचित्तंसाक्षिचैतन्यव्याप्तमंतःकरणंसचेतनं मन्यमानोहंद्रष्टेतिसाभासंचित्तमेवात्मानंमन्यते नतद्याथात्म्यं जानातीत्यर्थः ॥अयंभावःयथाऽविशेषेणसर्वत्रप्रसृतमालोकंदेहसंपर्कात्तदाकाराकारितमिवदृश्यमानंदेहाभेदेनपश्यतिलोकस्तथासदास्वरूपेणानवच्छिन्नप्रकाशस्वभावोप्यात्मांतःकरणसंपर्कात्तदाकाराकारितइवभासतइत्यहंकर्ताद्रष्टाभोक्तेत्येवमंतःकरणस्वभावविशिष्टमेवात्मानमनुभवतिलोकोनशुद्धमिति॥

यदेव दृश्यते लोके तेनाभिन्नत्वमात्मनः ॥ प्रपद्यते ततो मूढस्तेनात्मानं न विंदति ॥ २ ॥ ॥ छ ॥

एवमात्मनःसाभासांतःकरणाविवेकमुक्त्वातद्द्वारेणदेहपर्यंतमविवेकंदर्शयन्नात्माप्रतिपत्तिमेवलोकस्यद्रढयाति यदेवेति ॥ यदेवसाभासचित्ताविविक्ततयाहंकारास्पदंप्राणेंद्रियस्थूलदेहपर्यंतंदृश्यतेनुभूयतेलोकेव्यवहारभूमावितियावत् ॥ तेनप्राणादिदेहांतेनात्मनोभिन्नत्वंतादात्म्यंप्रपद्यते ॥ चित्तादिदेहपर्यंतांचिदाभासप्रतीतेस्तदविवेकात्संघातमेवात्मानंमन्यतइत्यर्थः ॥ यतएवंततस्तस्मान्मूढोदेहादेरात्मनश्चान्योन्यमध्यासकर्त्तासंस्तेनमौढयेनहेतुनात्मानंब्रह्मत्वेननविंदतिनप्रत्येतीत्यर्थः ॥ २ ॥

दशमस्य नवात्मत्वप्रतिपत्तिवदात्मनः ॥ दृश्येषु तद्वदेवायं मूढो लोको न चान्यथा ॥३॥ ॥ ॥

उक्तमर्थंदृष्टांतेनसाधयतिदशमस्येति ॥ दशहिमाणवकाः क्वचिन्नदींतीर्त्वापारंगताःसंतोगणयामासुःकतिवयंस्मइतितत्र गणयिता स्वात्मानंविहायनवैवगणयतिस्मेतिप्रसिद्धिःतत्रयद्व द्यथादशमस्यात्मनोमाणवकस्यगणयितुरविवेकान्नवात्मत्वप्र तिपत्तिः ॥ नवभ्योन्यमात्मानंनविंदति नवैववयंदशमोनास्ती तिभ्रांतिरुपलभ्यतइत्यर्थः ॥ तद्वत्तथैवायंलोकोबुद्ध्यादिषुदृ श्येष्वेवात्मतादात्म्यप्रतिपत्त्यामूढःशास्त्राचार्योपदेशेनहीनःस्वा त्मानमन्यथाप्रतिपद्यतेनचान्यथावैपरीत्येनबुद्ध्याद्यपोहेनब्र ह्मास्मीतिस्वरूपयाथात्म्यंनवेत्तीत्यर्थः ॥ ३ ॥

त्वं कुरु त्वं तदेवेति प्रत्ययावेकका लिकौ ॥ एकनीडौ कथं स्यातां वि रुद्धौ न्यायतो वद॥४॥ ॥ ॥

ननुप्रत्यक्षानुभवस्यश्रुतेश्चाविरोधायप्रत्यगात्मनएवकर्तृ त्वादिधर्मवत्वंब्रह्मरूपत्वंचास्तुकिमाविवेककल्पनयामूढत्वमा स्थीयतइत्यतआह ॥ त्वंकुर्विति ॥ यद्वाशास्त्राचार्योपदेशही नोबुद्ध्यादिवैपरीत्येनात्मयाथात्म्यंनजानातीतितस्यपदार्थविवे काभावान्मोक्षोनोपपद्यतइतिसूचितं तत्रकिंपदार्थविवेकेनकृ त्यंशास्त्रात्ब्रह्मत्वेप्रतिपन्नेसतिब्रह्माहमस्मीतिप्रसंख्यानादेवा त्मयाथात्म्यापरोक्ष्यान्मोक्षउपपद्यतइतिप्रसंख्यानविध्यवसर माशंक्यपरिहरति ॥ त्वंकुर्विंतित्वंतदेवेतिएकनीडौएकस्मिन्वि षयेविरुद्धौप्रत्ययौएककालिकावेकावस्थाभाजौकथंस्यातामि तिन्यायतोयुक्तितोवदेत्यन्वयः तथाचैकस्मिन्नात्मनिकुरुतदेव त्वामितिकर्तृत्वाकर्तृत्वप्रकारकाविरुद्धबुद्ध्योःसमासमयोर्मध्ये

तादृशशीतोष्णबुद्धिवद्वश्यमन्यतरबुद्ध्या अन्यतरबाधएवयु
क्तोनोभयोःप्रामाण्यमित्यभिप्रायः ॥ ४ ॥

देहाभिमानिनोदुःखं नादेहस्य स्व
भावतः॥ स्वापवत्तत्प्रहाणायतत्त्व
मित्युच्यते दृशेः॥५॥ ॥ ॥

तर्हिदुःखित्वादिभानेनप्रत्यक्षानुभवेनशाब्दस्यज्ञानस्यबा
ध्यत्वोपपत्तेस्तदीयस्थैर्यायप्रसंख्यानविधिःस्यादतआह ॥ देहे
ति ॥ यदिदुःखित्वादिकमात्मनःस्वाभाविकंस्यात्तदातन्नज्ञाना
भ्यासशतेनापिनिवर्त्तयितुंशक्यतेज्ञानस्याज्ञानमात्रविरोधित्वा
त्तथाचतद्विधिप्रकारोऽनर्थकः ॥ यदात्वविद्याप्रयुक्तदेहाद्यभिमा
ननिबंधनंदुःखित्वादितदाविद्यानिवृत्त्यैवतन्निवृत्तेरविद्यानिवृत्ते
श्चज्ञानमात्रायत्तत्वान्नकर्मविध्यवकाशइतिश्लोकतात्पर्यार्थः ॥
नादेहस्यदेहाभिमानरहितस्येत्यर्थः ॥ तत्रहेतुःस्वभावतइति ॥
अदेहत्वमात्मनःस्वाभाविकंरूपमित्यत्रनियामकमाह ॥ स्वाप
वदिति ॥ यद्वानादेहस्येत्यनेनदेहाभिमानव्यतिरेकेणनदुःखम
स्तीत्युक्तंव्यतिरेकमाह ॥ स्वापवदिति ॥ सुषुप्ताविवेत्यर्थः ॥ दृ
शेरात्मनस्तत्प्रहाणायसमूलाभिमाननिवृत्तयेतत्त्वमितिश्रुत्यो
च्यते ॥ ऐक्यमात्रंबोध्यतेनकर्मेत्यक्षरार्थः ॥ ५ ॥

दृशेश्छाया यदारूढा मुखछायेव
दर्शने ॥ पश्यंस्तं प्रत्ययं योगी दृष्ट
आत्मेति मन्यते ॥ ६ ॥ ॥ ७ ॥

तत्त्वमस्यादिवाक्याद्देहादिव्यतिरिक्तमात्मानमवगच्छतोपि दुःख्यहमितिप्रतीतेरनुवृत्तेर्नाभिमानानिबंधनंदुःखमित्याशंक्य तद्विशिष्टात्मदर्शनस्याभासत्वान्नैवमित्याह ॥ दृशोरिति ॥ दर्शयतीतिदर्शनम् दर्पणादि तस्मिन्मुखच्छायामुखाभासोमुखप्रतिबिम्बरूपायथा आरूढाभवतितद्वद्दृशः प्रत्यगात्मनःछाया आभासोयदारूढायस्मिन्संक्रांन्तैवभवतितम्प्रत्ययम्प्रत्याययतीतिप्रत्ययोहंकारस्तंसाभासमंतःकरणंपश्यन्नहमित्युपलभ्यमानोयोगीअग्रहणाविद्यादियोगवान्पुमानात्माहष्टइतिमन्यते॥ यथा कश्चिद्दर्पणमुखस्वभावाविवेकाद्यथादृष्टंदर्पणदोषमालिन्याल्पत्वादिविशिष्टमेवस्वमुखम्मन्यते तथायंमहाजनउपाधिदोषैरास्कंदितमिवतदविवेकादात्मानंपश्यन्नहंकर्त्तादुःखीत्यभिमन्यतइत्यर्थः ॥ तथाचाहमितिदर्शनस्यकल्पितात्मविषयत्वादुक्तंदुःखित्वस्याविवेकाभिमाननिबन्धनत्वमितिनसम्यगात्मानंवाक्यादवगच्छतोदुःखित्वाद्यनुवृत्तिरुपपद्यतेकदाचित्प्रतिभासस्यबाधितानुवृत्तिमात्रत्वादितिभावः ॥ ६ ॥

**तं च मूढं च यद्यन्यं प्रत्ययं वेत्ति नो दृशेः ॥ स एव योगिनां श्रेष्ठो नेतरः स्यान्न संशयः ॥७॥ ॥छ॥**

यदिसाभासाहंकारमात्मानंपश्यन्नसम्यग्दर्शी कस्तर्हिसम्यग्दर्शीत्यपेक्षायामाह ॥ तंचेति ॥ तमुपाधिभूतम् प्रत्ययमहंकारं मूढंचमोहात्मकमविवेकमन्यंचोपाधिगतमाभासं दुःखादिकंवा यदिवेत्तिसाक्ष्यमेवेदंसर्वमितिसाक्ष्यत्वेनैवजानाति नदृशेरात्मनःसाक्षिणःसंबंधीत्येवंनवेत्ति यएवंविवेकमातिः सएव

योगिनांयुज्यतेऽनेनेतियोगस्तत्त्वज्ञानंतद्विद्यतेयेषांतेयोगिनस्ते षांप्रेष्ठः प्रियतमःसम्यग्दर्शीत्यर्थः ॥ नेतरःपूर्वोक्तसाहंकारा त्मदर्शीनसंशयःसंशयोत्रनकर्तव्यः अज्ञश्चाश्रद्दधानश्चसंशया त्माविनश्यतीतिभगवद्वचनादित्यर्थः ॥ ७ ॥

**विज्ञातेर्यस्तु विज्ञाता सत्वमित्यु च्यते यतः ॥ स स्यादनुभवस्तस्य ततोऽन्योऽनुभवो मृषा ॥८॥ ॥**

सर्वस्यलोकस्यात्मत्वेनभासमानोऽप्यहंकारश्चेदनात्मत्वेन त्यज्यते तदातदन्यस्यत्वंपदार्थस्याऽदर्शनात्तत्त्वमस्यादिवाक्य स्यनिरालम्बनत्वापत्तिरित्याशंक्याऽहंकारादिविविक्तस्यत्वमर्थ स्यश्रुत्यैवोपपादितत्वान्मैवमित्याह ॥ विज्ञातेरिति ॥ नहिवि ज्ञातुर्विज्ञातेर्विपरिलोपोविद्यतेविज्ञातेर्नविज्ञातारंविजानीया इ तिश्रुतौषष्ठ्यंतशब्दनिर्दिष्टायाबुद्धिवृत्तिरूपायाविज्ञातेरनित्या याविज्ञातारंनित्यविज्ञप्तिरूपेणज्ञातारंत्वंनाविजानीयाइति ॥ यस्तु विज्ञातेर्विज्ञातरूपोविषयभूतःसर्वसाक्षीप्रतिपन्नःससर्वा वभासकएवत्वमितित्वंशब्देनतत्त्वमसिवाक्येउच्यते ॥ ना हंकारात्मतया यतोयस्मात्ततस्तमवलंब्यतत्त्वमस्यादिवाक्यप्र वृत्तेर्ननिरालंबनत्वशंकावकाशइतिशेषः ॥ तस्यत्वंपदार्थस्यस एवश्रुत्युक्तमकारोनुभवःसम्यगनुभवः स्यात्ततोन्योबुद्धितत्स्था भासविशिष्टरूपतयानुभवोमृषा मिथ्याध्यासइत्यर्थः ॥८॥ ॥

**दृशिरूपे सदानित्ये दर्शनादर्शने मयि॥क थं स्यातां ततो नान्य इष्यतेनुभवस्ततः ९**

नन्वविषयश्चेदात्माश्रुत्यानिवेद्यते ॥ कथंतर्हितस्यानुभवो नुभवरूपत्वात्तस्यनानुभवापेक्षेतिचेन्न अन्यत्रानुभाव्यानुभवयोर्भेददर्शनादित्याशंक्य जडाजडत्वाभ्यांविशेषोपपत्तेर्मैवमित्याह ॥ दृशिरूपेति ॥ यस्यस्वसत्तायांप्रकाशव्यभिचारस्तस्यागंतुकज्ञानसापेक्षत्वात्स्वान्यज्ञानागमापायनिबंधनेदर्शनादर्शनेस्यातांसदादृशिरूपेज्ञानस्वरूपेमयिसत्येनित्येन्यनिरपेक्षसत्ताकेस्वरूपतोज्ञानतश्चनित्येइतियावत्दर्शनादर्शनेकथंस्यातांनकथमपीत्यर्थः ॥ ततस्तस्मात्कारणात्ततःस्वरूपादन्योनुभवोनेष्यतइतियोजना ॥ ९ ॥

**यत्स्थस्तापो रवेर्देहे दृशेः स विषयो यथा॥ सत्त्वस्थस्तद्वदेवेह दृशेः स विषयस्तथा ॥ १० ॥**

उक्तमेवनित्यदृग्रूपत्वमात्मनःस्फुटयति यत्स्थस्तापइति॥ यद्वा सुखदुःखादियुक्तत्वेनात्मनोभानान्ननित्यदृशिमात्रत्वमित्याशंक्याह ॥ यत्स्थस्तापइति ॥ रवेस्तापोदेहेभवन्यत्स्थो यत्प्रदेशस्थितोभवतिसतापोयथास्वाश्रयप्रदेशविशिष्टएवदृशेरात्मनोविषयस्तद्वदेवेहव्यवहारकालेसत्त्वस्थोंतःकरणस्थएव भवतिसुखदुःखादिरूपस्तापस्तथास्वाश्रयांतःकरणसहितएव दृशेर्विषयोनदृगात्मसमवेतइत्यर्थः ॥ अतस्तापस्यान्यधर्मत्वेनैवानुभवादात्मानित्यःचैतन्यमात्रस्वभावएवेतिभावः ॥ अथ वादेहेभवन्रवेस्तापोयत्स्थोयस्मिन्देहदेशेस्थितःसदेहएवतापविशिष्टस्तप्तोहमितिमन्यमानस्यदृशेर्लौकिकस्यात्मनोविषयोयथातद्वदेवविषयसंपर्कजनितःसुखदुःखादितापःसत्त्वस्थोंतःक

रणस्थइतिसोंतःकरणाख्यःसुखादितापविशिष्टस्तथैवद्दशेःसा
क्षिणोविषयइत्यर्थः ॥ तथाच सुख्यहमित्याद्यभिमानस्यदेह
तापेनतदध्यासात्तप्तोहमित्यभिमानवत्स्वदृश्यांतःकरणाध्यास
निर्बंधनत्वाद्विवेकिनोदुःखादिमत्तयात्माकदापिनभासतइति
भावः ॥ १० ॥

प्रतिषिद्धे द्दगंशोज्ञः खमिवैकरसो
द्वयः ॥ नित्यमुक्तः सदाशुद्धःसोहं
ब्रह्मास्मि केवलः ॥ ११ ॥

आत्मनःसुखादियुक्तांतःकरणसंबंधाभावंस्फुटयन्विविक्त
स्वरूपमनुसंधत्ते प्रतिषिद्धेतिस्पष्टार्थः ॥ ११ ॥

विज्ञातुर्नैव विज्ञाता परोन्यः संभ
वत्यतः॥ विज्ञाताहं परो मुक्तः सर्व
भूतेषु सर्वदा ॥१२॥ ॥छ॥

यस्मादेवंविचार्यमाणेऽहंब्रह्मैवतस्मान्नसाक्षिरूपस्यममकु
त्रापिस्वरूपभेदोस्तीत्यद्वयात्मतत्त्वमाविष्करोति विज्ञातुरिति॥
सर्वविज्ञातृरूपादात्मनोन्योयतःपरोव्यापकोविज्ञातानैवसंभव
ति ॥ अतोहमेवपरोविज्ञातासर्वभूतेषुस्थावरजंगमेषुसदास
र्वदाएवंसर्वविज्ञेयतद्धर्मरहिततयान्मुक्तश्चेत्यर्थः ॥ १२ ॥

यो वेदालुप्तदृष्टित्वमात्मनोकर्तृतां
तथा ॥ ब्रह्मवित्त्वं तथा मुक्त्का स
आत्मज्ञो न चेतरः॥१३॥ ॥छ॥

एवंश्रुत्युपदेशात्सर्वत्रसर्वदाऽद्वयमात्मानमनुसंदधानस्यापिब्रह्मविदहमस्मीत्यभिमानात्स्यात्सविशेषत्वमित्यतआहयोवेदेति ॥ ब्रह्मवित्त्वंमुत्काब्रह्मविदहमस्मीत्यभिमानंत्यक्त्वायथाश्रुत्युक्तंतथात्मनोऽलुप्तचिन्मात्रतयाद्रष्टृत्वंतथाऽकर्तृतांचवेदसआत्मज्ञःआत्मतत्त्वब्रह्मविन्नचेतरोयोभिमानलेशमपिभजतेइत्यर्थः ॥ १३ ॥

ज्ञातैवाहमविज्ञेयः शुद्धो मुक्तः सदेत्यपि ॥ विवेकी प्रत्ययो बुद्धेर्दृश्यत्वान्नाशवान्यतः ॥ १४ ॥

ननुब्रह्मात्मज्ञानस्यात्मनिविद्यमानत्वात्कथंब्रह्मवित्त्वाभिमानत्यागोतोनात्यंतंनिर्विशेषआत्मेत्यतआह ॥ ज्ञातैवेति ॥ ज्ञातैवाहमित्यादिरूपोयोविवेकीविवेकवान्विविक्तात्मनिष्ठइतियावत्प्रत्ययोबुद्धेर्बोधेद्धोयोवृत्तिरूपःसदृश्यत्वात्साक्षिसाक्ष्यत्वान्नश्यत्येव ॥ यतोयस्मात्तस्मान्नास्तिब्रह्मविदोभिमानलेशस्याप्यवकाशइत्यर्थः ॥यथाकतकबीजंरजःकलुषितेजलेप्रक्षिप्तंजलगतसकलरजोविलापयत्स्वयमपिविलीयमानंसलिलमनाविलंकरोति तथा यथोक्तविवेकबुद्धिवृत्तिरपिपरेप्रत्यगात्मनिसंसिद्धातद्गतसकलविशेषमुन्मूलयंतीस्वयमप्युन्मूलिताप्रत्यगात्मानंनिरस्तसमस्तविशेषमनाविलमापादयतीतिभावः॥१४

अलुप्ता त्वात्मनो दृष्टिर्नोत्पाद्या कारकैर्यतः॥दृश्यया चान्यया दृष्ट्या जन्यतास्याः प्रकल्पिता ॥ १५ ॥

नन्वात्मचैतन्यप्रतिभासोपिनाशवानात्मप्रकाशत्वात्मकृतबुद्धिप्रत्ययवदितिचेन्मैवं कारकाधीनात्मलाभत्वस्योपाधित्वादित्याह ॥ अलुप्तेति ॥ उपाधेःसाधनव्यापकत्वमाशंक्यप्रत्याहदृश्ययाचेति ॥ अस्याआत्मस्वरूपायादृष्टेर्जन्यतातुदृश्ययान्ययाबुद्धिवृत्तिरूपयास्वरूपदृष्टेर्विशेषाकाराभिव्यक्त्युपाधिभूतयाप्रकल्पिताआरोपिता घटजन्मनाघटाकाशजन्मवदितिनास्त्यतःसाधनव्यापकत्वमित्यर्थः ॥१५॥

**देहात्मबुद्ध्यपेक्षत्वादात्मनः कर्तृता मृषा ॥ नैव किंचित्करोमीति सत्या बुद्धिः प्रमाणजा ॥ १६ ॥**

तदेवमात्मन्यव्यभिचाराच्चित्प्रकाशस्यनित्यत्वाद्योवेदालुप्तदृष्टित्वमित्यत्रोक्तंनित्यदृष्टिरूपत्वमुपपाद्याकर्तृतांतथेत्युक्तंनिर्विकारत्वमुपपादयतिद्वाभ्यां ॥ देहात्मबुद्धीति ॥ देहात्मबुद्धिर्मिथ्याबुद्धिस्तत्पूर्वकत्वात्कर्तृत्वादिरात्मनोमृषानैवकिंचित्करोमीत्यकर्त्रात्मबुद्धिर्निष्कलंनिष्क्रियंशांतमित्यादिप्रमाणजाऽतःसत्यादेहात्मबुद्धेरप्रमाणजायाबाधिकेत्यर्थः ॥ १ ॥

**कर्तृत्वं कारकापेक्षमकर्तृत्वं स्वभावतः ॥ कर्ता भोक्तेति विज्ञानं मृषैवेति सुनिश्चितं ॥ १७ ॥ ॥**

इतोपिकर्तृत्वमात्मनोपरमार्थमित्याह ॥ कर्तृत्वंकारकापेक्षमिति ॥ असंगेनिरवयवेआत्मनिकारकसंसर्गस्यपरमार्थतोऽनुप

पत्तेरकर्तृत्वस्यस्वाभाविकत्वात्कर्ताभोक्तात्मेतिविज्ञानंमृषैवन परमार्थइतिसुनिश्चितंनित्यनिर्मलएवात्मेत्यर्थः ॥ १७ ॥

एवं शास्त्रानुमानाभ्यां स्वरूपेवग
ते सति ॥ नियोज्योहमिति ह्येषा
सत्या बुद्धिः कथं भवेत् ॥ १८ ॥

तदेवंपरिशोधितपदार्थतत्त्वस्यवाक्यादेवाहंब्रह्मास्मीतिनिरपवादेविज्ञानेजातेसतिनियोज्योहमितिबुद्धेरुन्मूलितत्वान्नप्रसंख्यानविध्यवकाशइत्याह ॥ एवंशास्त्रानुमानाभ्यामिति ॥ शास्त्रंविज्ञातेर्यस्तुविज्ञातासत्वमित्युच्यतेयतइत्यत्रदर्शितं यत्स्थस्तापारेवेदहइत्यत्रोक्तमनुमानं ताभ्यामित्यर्थः ॥ १८ ॥

यथा सर्वांतरं व्योम व्योम्नोप्यभ्यं
तरो ह्यहं ॥ निर्विकारोचलः शुद्धो
ऽजरो मुक्तः सदाद्वयः ॥ १९ ॥

ब्रह्मविदोनियोज्यत्वादिबुद्धिर्नैवभवतीत्यत्रनिर्विकारत्वादिकंहेतुंवदन्प्रकरणार्थमुपसंहरति यथासर्वांतरमितिस्पष्टं ॥ १९ ॥

॥ इतिप्रकाशप्रकरणंद्वादशंविवृतं ॥ १२ ॥

अचक्षुष्ट्वान्न दृष्टिर्मे तथाश्रोत्रस्य का
श्रुतिः ॥ अवाक्त्वान्न तु वक्तिःस्या
दमनस्त्वान्मतिः कुतः ॥ १ ॥

तदेवंपदार्थतत्त्वपरिचयाभावादेववाक्यार्थाप्रतिपत्तिर्जनस्ये तितत्परिचयमात्रादेववाक्यात्वाक्यार्थयाथात्म्यावभाससंभवे प्रसंख्यानादिविधिरनर्थकोनुपपन्नश्चेत्युक्तमिदानींपूर्वप्रकरणां तेनिर्विकारोचलः शुद्धइतियदुक्तमात्मनःशुद्धत्वमचलत्वंच तत्स्फुटीकर्तुंप्रकरणांतरंप्रस्तौति ॥ अचक्षुष्ट्वादिति ॥ दृष्टिश ब्देनचक्षुरिंद्रियद्वारकबुद्धिवृत्तिर्बहिःप्रसृतारूपादिविषयोपरंजि ताजानामिक्रियात्मिकोच्यते सादृष्टिर्नमेस्तिमद्विकारतयामद्धर्म भूतासानभवतीत्यर्थः ॥ तत्रहेतुरचक्षुष्ट्वादिति चक्षुर्हिदेहदेशा श्रितंभौतिकंकरणंनमदाश्रितमित्यन्वयव्यतिरेकाभ्यांनिश्चित मितिनहेत्वसिद्धिशंका एवंकाश्रुतिरित्यादिषुयोज्यं तथाचत त्तदिंद्रियद्वारकबुद्धिवृत्तिरूपदृष्ट्यादिक्रियाहीनत्वात्सिद्धमात्मनो चलत्वंचेतिभावः ॥ १ ॥

अप्राणस्य न कर्मास्ति बुद्धयभा
वे न वेदिता ॥ विद्याविद्ये ततो न
स्तश्चिन्मात्रज्योतिषो मम ॥ २ ॥

तथाकर्तृत्वज्ञातृत्वविकारहेतुप्राणबुद्ध्योरभावादपिशुद्धइत्या ह ॥ अप्राणस्येति ॥ चिन्मात्रज्योतिषःसदाप्रकाशमानचिदेकर सस्यविद्याविद्येज्ञानतदभावौज्ञानक्रियेवानस्तस्तयोरपिबुद्ध्य वस्थाविशेषत्वादात्मनश्चबुद्ध्यभावादितिसिद्धाशुद्धतेत्यर्थः ॥२

नित्यमुक्तस्य शुद्धस्य कूटस्थ
स्याविचालिनः ॥ अमृतस्याक्षर

स्यैवमशरीरस्य सर्वदा ॥ ३ ॥ ॥

उक्तधर्मजातस्यात्मन्यभावेनशुद्ध्यादिसिद्धावशरीरत्वमेवहे तुरित्यभिप्रेत्यचिन्मात्रज्योतिःस्वरूपंविशेषणैर्विशदयति ॥ नि त्यमुक्तस्येति ॥ विद्याविद्येनस्तइतिपूर्वेणान्वयः ॥ शुद्धत्वा न्नित्यमुक्तत्वमविचालित्वात्कूटस्थत्वमक्षरत्वादमृतत्वमिति विशेषणानांयोजना ॥ त्रिष्वपिहेतुरशरीरस्येति नहिशरीरसं बंधमंतरेणात्मनोशुद्धिचलनक्षरणानिनिरूपणपथमवतरंति ॥ अतःसर्वदैवाशरीरत्वात्सर्वदाशुद्धइत्यादियोज्यं ॥ ३ ॥

जिघत्सा वा पिपासा वा शोकमो हौ जरामृती ॥ न विद्यंतेऽशरीरत्वा द्व्योमवद्व्यापिनो मम ॥४॥ ॥ ॥

आत्मनः षडूर्मिसंबंधाभावादपिसिद्धाशुद्धतेत्याह ॥ जिघ त्सेति ॥ खादितुमिछाजिघत्सा पातुमिछापिपासा अन्यत्प्रासि द्धमशरीरत्वादित्युपलक्षणमप्राणत्वादमनस्त्वाच्चेत्यर्थः ॥ त थाचोक्तं ॥ प्राणस्यक्षुत्पिपासेद्वेमनसःशोकमोहकौ ॥ जराम त्यूशरीरस्यषडूर्मिरहितः शिवइति ॥ ४ ॥ ॥ ॥

अस्पर्शत्वान्न मे स्पृष्टिर्नाजिव्हत्वा द्रसज्ञता ॥ नित्यविज्ञानरूपस्य ज्ञा नाज्ञाने न मे सदा ॥ ५ ॥ ॥ ॥

इदानीमनुक्तसकलेंद्रियवृत्तिप्रतिषेधोपलक्षणतयास्पर्शरस नसंबंधंप्रतिषिध्याविर्भावतिरोभावहीनतयाविशुद्धचिद्रूपत्वमु

क्तमुपसंहरति ॥ अस्पर्शत्वादिति ॥ स्पर्शनेंद्रियरहितत्वादि त्यर्थः ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥

या तु स्यान्मानसी वृत्तिश्चाक्षुष्का रूपरंजना॥ नित्यमेवात्मनोदृष्ट्या नित्ययादृश्यते हि सा ॥६॥ ॥ ॥

आत्मनोदृष्ट्यादयोनसंतीत्युक्तेर्थेउपपत्तिमाह ॥ यातुस्यादि ति ॥ चाक्षुष्का चक्षुर्द्वारजनिता रूपरंजना रूपाकाराकारिता यातुमानसीवृत्तिःस्यात्स्याछब्दोभवतीत्यर्थे एवंविधावृत्तिरस्ति सातमरूपयानित्ययादृष्ट्याचैतन्यप्रकाशलक्षणयानित्यमेवदृश्य तेप्रकाश्यते ॥ हिप्रसिद्धमनुभवसिद्धमेवैतदित्यर्थः ॥ ६ ॥

तथान्येंद्रिययुक्ता या वृत्तयोविष यांजनाः ॥ स्मृतीरागादिरूपा च केवलांतर्मनस्यपि ॥ ७ ॥ ॥

तथाचदृष्ट्यादयश्चिदात्मीयास्तदृश्यत्वाद्योयेनदृश्यतेनसत दीयोयथारूपादिरिति सिद्धमात्मनोदृष्ट्यादिराहित्येनशुद्धत्वादी त्यभिप्रेत्यचक्षुर्द्वारकवृत्तावुक्तन्यायंवृत्त्यंतरेष्वतिदिशति ॥तथे ति॥विषयांजनाविषयोपाधिकाःविषयाकाराइतियावत्॥याचके वलाचक्षुरादिद्वारानिरपेक्षाअंतर्मनसिशरीरांतर्वर्तिनिचित्तेस्मृ तिःरागादिरूपा सापिपूर्वोक्तयात्मदृष्ट्यादृश्यतइत्यन्वयः ॥ ७॥

मानस्यस्तद्वदन्यस्य दृश्यंते स्वप्नवृत्तयः ॥ द्रष्टुर्दृष्टिस्ततो

नित्या शुद्धानंता च केवला ॥ ८ ॥

किंच स्वप्नावस्थायांविद्यमानामनःपरिणामरूपाविषयाकारावृत्तयस्ततोऽव्यतिरिक्तस्यैवद्रष्टुर्दृश्यायथासंप्रतिपन्नास्तथाजाग्रद्वृत्तयाअपिदृश्यत्वात्स्वव्यतिरिक्तस्यैवद्रष्टुर्दृश्याइत्याह मानस्यइति ॥ मानस्यःस्वप्नवृत्तयोन्यस्यसाक्षिणोदृश्यंते दृश्यत्वेन विपरिवर्तंतइत्यर्थः ॥ तद्वज्जाग्रद्वृत्तयइतिशेषः सर्वदृष्टीनांकूटस्थदृष्टिभास्यत्वेसिद्धेफलितमाह ॥ द्रष्टुरिति ॥ ८ ॥

अनित्या साऽविशुद्धेति गृह्यतेऽत्राविवेकतः ॥ सुखी दुःखी तथा चाहं दृश्ययोपाधिभूतया ॥ ९ ॥

कूटस्थाचेदात्मदृष्टिरिष्टाकथंतत्रान्यथाप्रथेत्याशंक्यवृत्तिमदंतःकरणाविवेकादेवेत्याह अनित्येति ॥ अविशुद्धेतिछेदः उपाधिभूतयादृश्ययादृष्ट्यासहाविवेकतोविवेकाग्रहादत्रव्यवहारभूमौ सानित्याशुद्धाचात्मदृष्टिरनित्याऽविशुद्धेतिचगृह्यतइतियोजना। तथाहंसुखीदुःखीतिचमन्यतइत्युत्तरश्लोकगतेनान्वयः॥९॥

मूढया मूढ इत्येवं शुद्धया शुद्ध इत्यपि ॥ मन्यते सर्वलोकोयं येन संसारमृच्छति ॥ १० ॥ ॥

अविवेकनिबंधनामिथ्याभिमानादेवसंसारप्राप्तिरित्युक्तमेव स्फुटयतिमूढयेति ॥ स्पष्टम् ॥ १० ॥

अचक्षुष्कादिशास्त्रोक्तंसबाह्याभ्यं
तरं त्वजं ॥ नित्यमुक्तमिहात्मानं
मुमुक्षुश्चेत्सदा स्मरेत् ॥११॥ ॥

कथंतर्हिसंसारनिवृत्तिरित्यपेक्षायां तदुपायमब्रुवन्मुमुक्षुंशिक्षयति अचक्षुष्कादीति ॥ इहप्राणिनांमध्येकश्चिन्मुमुक्षुश्चेत्स्यात्सतर्हिस्वात्मानमुक्तरूपंसदास्मरे श्रुत्याचार्योपदिष्टमनवरतमनुसंदधीतेतियोजना ॥ ११ ॥

अचक्षुष्कादिशास्त्राच्च नेंद्रियाणि
सदा मम ॥ अप्राणो ह्यमनाः शुभ्र
इति चाथर्वणेर्वचः ॥ १२ ॥ ॥

यदात्मनश्चक्षुरादिराहित्यंप्राक्सिद्धवदुक्तंतत्रप्रमाणमाह अचक्षुष्कादिशास्त्राच्चेति ॥ अचक्षुष्कमश्रोत्रमवागमनइत्यादिना बृहदारण्यकेयथात्मरूपमुक्तंतथामुंडकेप्युक्तमित्याह ॥ अप्राणइति ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥

शब्दादीनामभावश्च श्रूयते ममका
ठके ॥ अप्राणो ह्यमना यस्मादवि
कारी सदा ह्यहं ॥ १३ ॥ ॥

आत्मनोनिर्विशेषत्वेश्रुत्यंतरमुदाहरति शब्दादीनामिति ॥ अशब्दमस्पर्शमरूपमव्ययंतथारसंनित्यमगंधवच्चयत् ॥ अनाद्यनंतंमहतःपरंध्रुवंनिचाय्यतंमृत्युमुखात्प्रमुच्यत ॥ इतिका

ठकेश्रूयतइत्यर्थः ॥ उक्तंप्रमाणमनूद्यफलितमाह अप्राणइति ॥ एतदचक्षुष्कादेरप्युपलक्षणं ॥ १३ ॥

**विक्षेपो नास्ति तस्मान्मे न समाधिस्ततो मम ॥ विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः ॥ १४ ॥**

अविकारित्वनिश्चयफलमाह विक्षेपइति ॥ तस्मादविकारित्वादित्यर्थः ॥ ततोविक्षेपाभावादित्यर्थः विक्षेपनिवृत्तिरूपत्वात्समाधेस्तदभावेतदभावः ॥ कस्यतर्हिसमाधिविक्षेपावित्यपेक्षायां विकारवतएवेतिवदन् अविकारिणस्तदभावंद्रढयति विक्षेपोवेति ॥ १४ ॥

**अमनस्कस्य शुद्धस्य कथं तत्स्याद्द्वयं मम ॥ अमनस्त्वाविकारित्वे विदेहव्यापिनो मम ॥ १५ ॥ ॥**

मनोवद्विकारित्वाद्वाविकारिमनस्तादात्म्याद्वाविक्षेपसमाधी आत्मनिसम्भाव्येताम् तदुभयाभावात्तौनस्तइत्याह अमनस्कस्येति ॥ शुद्धस्याविकारिणइत्यर्थः ॥ कथममनस्कत्वमविकारित्वंचेत्यतआह अमनस्त्वाविकारित्वेइति ॥ विदेहश्चासौ व्यापीचेतिविदेहव्यापीतस्येतिविग्रहः ॥ विदेहत्वादमनस्कत्वं व्यापित्वादविकारित्वंचेत्यर्थः ॥ १५ ॥

**इत्येतद्यावदज्ञानं तावत्कार्यं ममा**

भवत् ॥ नित्यमुक्तस्य शुद्धस्य बु
द्धस्य च सदा मम ॥ १६ ॥ ॥

कथंताहजिज्ञासावस्थायांसमाध्यादिकंकर्तव्यमितितेबुद्धि
रासीदितितत्राऽऽह इत्येतदिति ॥ सदानित्यमुक्तबुद्धस्या
पिममयावत्पर्यन्तमेतन्नित्यशुद्धत्वादिविषयमज्ञानमासीत्तावत्
ममकार्यंसमाधानादिकर्तव्यमभवत् नेदानींतज्जानतःकृत्यम
स्तीत्यर्थः ॥ १६ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

समाधिर्वाऽसमाधिर्वा कार्यं चा
न्यत्कुतो भवेत् ॥ मां हि ध्यात्वा च
बुध्वा च मन्यंते कृतकृत्यतां ॥ १७

इदानींकस्मात्समाधानादिनकर्तव्यमित्यपेक्षायांतद्धेत्वभा
वादित्याह समाधिर्वेति ॥ कुतोभवेन्ममेतिशेषः कुतोन
भवेदित्यत्रहेतुमाह मांहीति ॥ यस्मान्मांप्रत्यगेकरसंब्रह्म
ध्यात्वाविचार्यबुध्वासाक्षात्कृत्यकृतकृत्यतांमन्यंतेमुमुक्षवइति
शेषः ॥ तथाचश्रुतिः ॥ एषनित्योमहिमाब्राह्मणस्यनकर्मणाव
र्द्धतेनोकनीयानिति ॥ यस्त्वात्मरतिरेवस्यादात्मतृप्तश्चमानवः ॥
आत्मन्येवचसंतुष्टस्तस्यकार्यंनविद्यतेइतिस्मृतेश्च तस्मादज्ञा
नाभावान्नास्तीदानींकिमपिकर्तव्यमित्यर्थः ॥ १७ ॥

अहं ब्रह्मास्मि सर्वोस्मि शुद्धो बुद्धो
स्म्यतः सदा ॥ अजः सर्वत एवा

हमजरश्चाक्षयोमृतः ॥ १८ ॥छ॥

ननुयद्यपियथोक्तात्मविदःसमाध्यादिकर्तव्यंनास्ति तथाप्या त्मनोब्रह्मत्वंसंपाद्यंप्रपंचस्यविलयःकर्तव्योवशिष्यतइत्याशंक्य ब्रह्मरूपत्वस्यानित्यसिद्धत्वात्प्रपंचस्यचाऽज्ञानमात्रविलसितस्य तन्निवृत्तिसमयएवचाधिष्ठानात्मनाविलीनत्वान्नतदनुष्ठेयमवशि ष्यतइत्यभिप्रेत्याह अहंब्रह्मास्मीति ॥ सदेतिब्रह्मास्मीत्या दिषुसर्वेषुविशेषणेषुयोज्यं अतस्ततोबंधहीनःसर्वतइतिचपदम जोक्षयइत्युभयत्रयोज्यं ॥ जन्मक्षयहेतुरहितइत्यर्थः ॥ १८ ॥

मदन्यः सर्वभूतेषु बोद्धा कश्चिन्न विद्यते ॥ कर्माध्यक्षश्च साक्षी च चेता नित्योऽगुणोऽद्वयः ॥ १९ ॥

ननुप्रतिदेहंचेतनभेदेभासमानेकथंब्रह्मास्मीतिप्रतीचःपूर्ण तानुभवइत्यतआह मदन्यइति ॥ उक्तेर्थेप्रमाणमाह कर्मा ध्यक्षइति ॥ एकोदेवःसर्वभूतेषुगूढःसर्वव्यापीसर्वभूतांतरात्मा ॥ कर्माध्यक्षःसर्वभूताधिवासःसाक्षीचेताकेवलोनिर्गुणश्चेतिश्रु तावेकस्यैवसर्वभूतांतरात्मत्वोपपादनाद्भेदप्रतिभानस्याकाशभे दभानवदुपाधिनिबंधनत्वान्नात्मांतराशंकेतियुक्तंपूर्णब्रह्मात्मानु भवनमित्यर्थः ॥ १९ ॥

न सच्चाहं न चासच्च नोभयं केवलः शिवः ॥ न मे संध्या न रात्रिर्वा नाहर्वा सर्वदा दृशेः ॥ २० ॥

अहंब्रह्मास्मीत्यत्रोक्तमात्मनोब्रह्मत्वमुपपादितं सर्वोस्मीत्युक्तंतुबाधायांसामानाधिकरण्याभिप्रायमित्युपपादयति नसच्चाहमिति ॥ सत्प्रत्यक्षयोग्यंपृथिव्यप्तेजोरूपंभूतत्रयं ॥ असत्प्रत्यक्षायोग्यंत्यच्छब्दनिर्दिष्टंवाय्वाकाशात्मकंभूतद्वयं॥ उभयंपंचभूतपरिणामात्मकंशरीरसंस्थानंतत्सर्वंनाहमित्युक्ते नेतिनेतीतिमय्येवारोप्यनिषिद्धत्वान्मदन्यत्रमयिचासत्त्वादहमेवेदंसर्वमितियुक्तमेवोक्तमित्यर्थः ॥ केवलःसर्वविशेषशून्यः शिवोनिस्त्रैगुण्यः ॥ संध्यादिकालविशेषयोगात्कथंकेवलत्वमित्यत आह ॥ नमेसंध्येति ॥ तत्रहेतुः सर्वदाहशोरिति ॥ अलुप्तप्रकाशात्मत्वादित्यर्थः ॥ यद्वा संध्यादिशब्दैःक्रमेणस्वप्नसुषुप्तिजागरणान्युच्यंते सदैवैकरूपेणप्रकाशमानस्यस्वरूपावरणविक्षेपरूपावस्थाःकुतस्त्याइत्यर्थः ॥ २० ॥

**सर्वमूर्तिवियुक्तं यद्यथा खं सूक्ष्ममद्वयम् ॥ तेनाप्यस्मि विनाभूतं ब्रह्मैवाहं तथाद्वयम् ॥ २१ ॥ ॥**

तस्माच्चिदेकतानस्यात्मनोनिर्विषयस्ययुक्तंब्रह्मरूपेणपूर्णत्वमितिसदृष्टांतमाह सर्वमूर्तीति ॥ यथाकाशंसर्वस्मात्परिच्छिन्नाकाराद्विलक्षणमितिसूक्ष्ममालक्ष्यतेतथेदंब्रह्मपरिपूर्णमत्यंतसूक्ष्मंद्वैताभावोपलक्षितमिष्यते तस्माद्ब्रह्मणोऽद्वितीयत्वादात्मनश्चतदनन्यत्वाद्ब्रह्मैवास्मीत्यर्थः ॥ तर्हिब्रह्माकाशयोरुपमानोपमेयभावेनभेदात्कथंब्रह्माद्वितीयमित्यतआह तेनापीति ॥ तेनाकाशेनापिविनाभूतंसिद्धंब्रह्मास्मि व्यवहारदृष्ट्योपमानादि

भेदेपिपरमार्थतस्तदभावान्नाद्वैतक्षतिरित्यर्थः ॥ एकमद्वयपदमाकाशेनसंबध्यते द्वितीयंब्रह्मणेत्यपौनरुक्त्यम् ॥ २१ ॥

**ममात्मा स्वत आत्मेति भेदो व्योम्नो यथा भवेत् ॥ एकस्य सुषिभेदेन तथा मम विकल्पितः ॥२२॥**

पूर्वमाकाशदृष्टांतेनपूर्णत्वनिरूपणात्परमार्थतःपरिच्छेदाशंका निराकृता इदानींतेनैवदृष्टांतेनभेदपरिच्छेदप्रतीतेर्गतिमाह ममात्मेति॥ममज्ञातुरात्मास्वरूपंब्रह्मेतिस्वतःस्वस्यात्मेतिचयोयमात्मात्मीयभावेनभेदप्रतिभासः सएकस्यममांतःकरणाद्युपाधिकृतभेदपरिच्छेदापेक्षयाविकल्पितःआरोपितोभवेद्यथैकस्य व्योम्नःसुषिभेदेनछिद्रभेदेनांशांशिभावरूपोभेदोविकल्पितोभवतितद्वदित्यर्थः ॥ २२॥

**भेदोभेदस्तथा चैको नाना चेति विकल्पितः ॥ ज्ञेयं ज्ञाता गतिर्गन्ता मय्येकस्मिन् कुतो भवेत्॥२३**

तस्मादविद्यादशायांभेदव्यवहारेपीदानीमवगतात्मतत्त्वस्य सोपिनास्तीतिसिद्धमित्याह भेदोभेदइति ॥ मय्येवैकस्मिन्पूर्वं भेदोभेदश्चविकल्पितोव्यवहृतः ॥ तथाएकोनानाचेतिचाहमेव विकल्पितोज्ञेयंज्ञातागतिःफलंगंताफलप्राप्तिकर्त्ताभोक्तेतिचाहं विकल्पितइतियोजना एतत्सर्वंकुतोभवेद्विचार्यमाणेनभवेदेवेत्यर्थः ॥ २३ ॥

न मे हेयं नचादेयमविकारी यतो त्यहं ॥ सदामुक्तस्तथा शुद्धः सदा बुद्धोऽगुणोऽद्वयः ॥ २४ ॥

ननुतथापिसंसारित्वंहेयंब्रह्मत्वंचोपादेयमितिननिर्विशेषत्व मात्मनइतिचेत्तत्राह ॥ नमेहेयमिति ॥ तत्रहेतुमाह ॥ अवि कारीति ॥ यतोयस्मादहमविकारी कुतोऽविकारीत्यपेक्षायां तत्रप्रमाणम् हिशब्देनसूच्यते॥ अविकार्योयमुच्यतइतिस्मृते रित्यर्थः ॥ फलितमाह ॥ सदामुक्तइति ॥ सदैवबंधसंसर्गशू न्यइत्यर्थः ॥ तथाशुद्धस्तद्धेत्वविद्यासंबंधरहितोयतःसदाबुद्धः तर्हिकिंबोधगुणोनेत्याह ॥ अगुणोबोधरूपएवेत्यर्थः ॥ तर्हि बोध्यंकिंचिदन्यदस्ति नेत्याह अद्वयइति ॥ २४ ॥

इत्येवं सर्वदात्मानं विद्यात्सर्वं स माहितः ॥ विदित्वा मां स्वदेहस्थ मृषिर्मुक्तो ध्रुवो भवेत् ॥ २५ ॥

तदेवमुक्तलक्षणेनात्मतत्त्वंशास्त्राचार्यप्रसादाच्छ्रवणमनननि दिध्यासननिष्ठांप्राप्तःसन्सदामुमुक्षुरहंब्रह्मास्मीत्यनुसंदध्यादि तिमुमुक्षुंप्रोत्साहयति इत्येवमिति ॥ सर्वंपूर्वमुक्तं वेदनफलमा ह विदित्वेति ॥ ऋषिःसर्वदर्शी ॥ २५ ॥

कृतकृत्यश्च सिद्धश्च योगी ब्राह्म ण एव च ॥ य एवं वेद तत्त्वार्थ मन्यथा ह्यात्महा भवेत् ॥२६॥

उक्ततत्त्वविदउक्तांमुक्तिंप्रपंचयति कृतकृत्यश्चेति ॥ सब्रा ह्मणइतिश्रुतेर्मुख्योब्राह्मणएवचभवेदितिसंबंधः ॥ एवंनिष्ठाही नस्यप्रत्यवायमाह अन्यथेति ॥ उक्तंश्रीभागवतेभगवता ॥ नृदे हमाद्यंसुलभंसुदुर्लभंप्लवंसुकल्पंगुरुकर्णधारं ॥ मयानुकूलेन नभस्वतेरितंपुमान्भवाब्धिंनतरेत्सआत्महेति ॥ २६ ॥

**वेदार्थो निश्चितो ह्येष समासेन मयोदितः ॥ संन्यासिभ्यः प्रवक्त व्यः शांतेभ्यः शिष्टबुद्धिना ॥२७॥**

उक्तस्यप्रकरणार्थस्यप्रामाणिकत्वंदर्शयन्प्रतिपत्तिसौकर्य माह वेदार्थइति ॥ अस्यग्रहणेमुख्याधिकारिणोदर्शयति ॥ संन्यासिभ्यइति ॥ नकेवलंप्राप्तसंन्यासाश्रममात्रेभ्यःकिंतुशां तेभ्यःशमादिसाधनसंपन्नेभ्यइत्यर्थः ॥ उपदेष्टारंविशिनष्टि शि ष्टबुद्धिनेति ॥ शास्त्राचार्यानुशिष्टबुद्धिनेत्यर्थः ॥ २७ ॥ ॥ इत्यचक्षुष्ट्वप्रकरणंत्रयोदशंविवृतं ॥ १३ ॥

**स्वप्नस्मृत्योर्घटादेर्हि रूपाभासः प्र दृश्यते ॥ पुरा नूनं तदाकारा धीर्दृष्टे त्यनुमीयते ॥ १ ॥ ॥छ॥**

पूर्वस्मिन्प्रकरणेंतःकरणाविवेकादात्मनिसंसारित्वप्रतीति र्नस्वतइतिशास्त्रप्रामाण्याद्बाधिताज्ञानतत्कार्योब्रह्मरूपएवात्मे तिनिर्द्धारितम् इदानीमंतःकरणस्यपरोक्षत्वात्संसारप्रतिभास

स्यचापरोक्षत्वान्नतत्प्रतिभासोबुद्ध्यविवेककृतइत्याशंक्यान्तः करणस्यापरोक्षत्वप्रतिपादनपूर्वकंपूर्वोक्तशास्त्रार्थेयुक्तिप्रदर्शनप रम्प्रकरणम्प्रक्रमते स्वप्नस्मृत्योरिति ॥ हियस्मात्स्वप्नेस्मृतौ चघटादेर्विषयजातस्यंरूपाभासआकारावभासोदृश्यते अनुभू यते तस्मात्पुरापूर्वंजाग्रदवस्थायामनुभवावस्थायामपि नूनम वश्यंतदाकाराघटाद्याकाराधीरंतःकरणवृत्तिर्दृष्टा साक्षादनुभूते त्यनुमीयतइत्यर्थः ॥ स्वप्नस्मृत्योर्दृष्टार्थविषयत्वनियमात्पूर्व दृष्टस्यबाह्यार्थस्यतत्राऽभावात्स्वप्नस्मृत्योरुपलभ्यमानोविषयो र्थाकारवृत्तिमदंतःकरणमेवेतिजाग्रत्पूर्वानुभवयोरप्यन्तःकरण मेवार्थाकारवृत्तिमदपरोक्षमनुभूतमितिकल्प्यते ॥ तस्मात्सर्वा स्वप्यवस्थासुवृत्तिमदंतःकरणस्यापरोक्षत्वात्तद्गतचिदाभासावि वेकादात्मनःसंसारित्वावभासोऽपरोक्षोयुक्तइतिभावः ॥ १ ॥

**भिक्षामटन्यथा स्वप्ने दृष्टो देहो न**
**स स्वयं ॥ जाग्रद्दृश्यात्तथा देहाद्द्रष्टृ**
**त्वादन्य एव सः ॥ २ ॥ ॥छ॥**

एवमंतःकरणस्यापरोक्षत्वेनिरूपितेकिमायातमात्मनइत्य पेक्षायांदृश्यादन्तःकरणादिसंघाताद्विवेकसिद्धिरायातेतिसदृष्टां तमाह भिक्षामिति ॥ सषुप्तस्ययतेःस्वप्नेभिक्षामटन्दृष्टोयोदेहः सस्वयंद्रष्टानभवति यथा तद्देहात्मत्वमभिमन्यमानोपितदात्म कोनभवति ॥ तथा जाग्रद्दृश्यादपिदेहात्सआत्मान्यएवद्रष्टृत्वा दित्यर्थः ॥ देहपदमुपलक्षणमिंद्रियांतःकरणयोरपि तथाचप्र योगोविमतोदेहादिनात्मादृश्यत्वात्स्वप्नदृश्यदेहादिवदिति ॥२॥

मूषासिक्तं यथा ताम्रं तन्निभं जा
यते तथा ॥ रूपादीन्व्याप्नुवच्चित्तं
तन्निभं दृश्यतेध्रुवम् ॥ ३ ॥ ॥

बुद्धिरेवसर्वावस्थासुअर्थाकाराद्दृश्यतइत्युक्तमर्थंदृष्टांतेनस्पष्टयति मूषेति ॥ मूषांतःसुषिराम्रृत्प्रतिमा यथाग्निसंपर्काद्द्रवीभूतंताम्रंमूषायांनिषिक्तंनिक्षिप्तंसत्तन्निभंजायते तत्समानाकृतिर्भवति तथाचित्तमपिरूपादीन्विषयान्व्याप्नुवत्तन्निभंदृश्यते तदाकारंजायतइत्यर्थः ॥ ३ ॥ ॥ ॥ ॥

व्यंजको वा यथा लोको व्यंग्य
स्याकारतामियात् ॥ सर्वार्थव्यंज
कत्वाद्धीरर्थाकारा प्रदृश्यते ॥ ४ ॥

ननुमूषासिक्तताम्रस्यकठिनमूषाभिघातेनशैत्यापत्तौतदाकारापत्तिरितियुज्यते चित्तस्यत्वमूर्तत्वाद्विषयव्याप्तावपिकथंतदाकारापत्तिसंभवइत्याशंक्यदृष्टांतांतरमाह व्यंजकोवेति ॥ व्यंजकोग्न्यादिरयःपिंडादेरालोकोवाघटादेः स्पष्टार्थः ॥ ४ ॥

धीरेवार्थस्वरूपा हि पुंसा दृष्टा पु
रापि च ॥ न चेत्स्वप्ने कथं पश्ये
त्स्मरतो वा कृतिः कुतः ॥ ५ ॥ ॥

बुद्धेरन्वयमुखेनस्वप्नस्मृत्योरित्यत्रोपपादितमपरोक्षत्वमनूद्यव्यतिरेकमुखेनोपपादयति धीरेवेति ॥ स्पष्टम् ॥ ५ ॥

व्यंजकत्वं तदेवास्या रूपाद्याकारदृ
श्यता ॥ द्रष्टृत्वं च दृशेस्तद्वद्व्याप्तिः
स्याद्धिय उद्भवे ॥ ६ ॥ ॥ छ ॥

आलोकादिवद्व्यंजकत्वाद्बुद्धेर्व्यंग्याकारत्वमुक्तंस्पष्टयति ॥ व्यंजकत्वमिति ॥ अस्याबुद्धेर्यारूपाद्याकारेणदृश्यतादर्शनयोग्यतापत्तिस्तदेवविषयव्यंजकत्वमित्यर्थः ॥ चैतन्यंहिविषयावभासोविषयश्चनबुद्धेरन्यत्रस्वातंत्र्येणस्फुरति तथाचबुद्धेर्विषयाकारत्वाभावेचैतन्यस्यविषयात्मनास्फूर्त्तिरनुपपन्नेतिविषयाभिव्यक्त्यर्थंतयातदाकारापत्तिरेवबुद्धेर्व्यंजकत्वमित्यभिप्रायः ॥ यथारूपाद्याकारेणावभासमानत्वमेवधियोरूपादिव्यंजकत्वंतथा दृशेःआत्मनोधियउद्भवेधर्माधर्मवशादुत्पत्तौसत्यांतद्व्याप्तिस्तदात्मनास्फुरणमेवद्रष्टृत्वंनपरिणामइत्याह द्रष्टृत्वंचेति ॥ यद्यपिधियोविषयव्याप्तिःपरिणाममंतरेणनभवति विषयदेशेतस्याःप्रागेवासत्त्वात्तथापिचैतन्यात्मनोधीवृत्तिव्याप्तौनपरिणामापेक्षा चिदात्मन्येवतत्प्रकाशकवलितायाएवधियःसदोत्पत्तेरितिभावः ॥ ६

चिन्मात्रज्योतिषा सर्वाः सर्वदेहेषु
बुद्धयः ॥ मया यस्मात्प्रकाश्यंते
सर्वस्यात्मा ततो ह्यहम् ॥ ७ ॥

बुद्धितद्वृत्तिसाक्षित्वेनचिदात्मनःपरिणामाभावेपिनतस्यब्रह्मरूपतयैकत्वंयुक्तम् प्रतिदेहंतत्तद्बुद्धिसाक्षिभेदादित्याशंक्य प्रमाणाभावान्मैवमित्याह चिन्मात्रेति ॥ यथैकस्मिञ्छरीरे बुद्ध्यवभासोविकृतचिद्व्याप्तिमात्रस्तथासर्वशरीरगतबुद्ध्यवभासइ

तिभास्यबुद्धिभेदेपिनतदवभासस्वरूपभेदःप्रमाणपथमवतरति ॥ भेदस्यापिसाक्ष्यत्वेनसाक्षिधर्मत्वाभावान्नसाक्षिभेदाशंकावकाशइत्यर्थः ७॥ ॥ ॥ ॥ ॥ ॥

करणं कर्म कर्त्ता च क्रिया स्वप्ने फलं च धीः ॥ जाग्रत्येवं यतो दृष्टा द्रष्टा तस्मादतोन्यथा ॥ ८॥

चैतन्यस्यसर्वत्रैकत्वेपिदृश्यस्यबुद्ध्यादेरनेकत्वान्नाद्वयब्रह्मात्मतासिद्धिरित्याशंक्यसकलदृश्यस्यानाद्यनिर्वाच्याविद्याविलासबुद्धिमात्रत्वाच्चेतनस्याऽद्वयब्रह्मत्वमविरुद्धमित्युपपादयति ॥ करणमिति ॥ यथाक्रियाकारकफलानिस्वप्नेधीरेवबाह्यार्थस्यतदातत्राभावादितिनिश्चितं एवमेवजाग्रतिजाग्रदवस्थायांचयतोधीरेवक्रियाकारकफलरूपादृष्टातयैवबहिःपदार्थसत्त्वमवगतं॥ तथासतिसुषुप्तावपितदाकारविशेषस्फुरणंकदाचित्स्यात्तस्माद्विषयैःसहैवात्मनिबुद्धेरध्यस्तत्वात्तस्याश्चाद्यंतवत्त्वेनमिथ्यात्वाद्द्रष्टात्माततोबुद्धेरन्यथाऽन्यादृशःसत्योऽखंडैकरसइत्यर्थः ॥ ८॥

बुद्ध्यादीनामनात्मत्वं हेयोपादेयरूपतः ॥ हानोपादानकर्तात्मा न त्याज्यो न च गृह्यते ॥ ९॥ ॥

अन्यथेत्युक्तंस्फुटयति ॥ बुद्ध्यादीनामिति ॥ बुद्ध्यादयोनात्मस्वरूपधर्म्माआगमापायित्वाद्वस्त्रादिवदित्युक्तेचिदात्मनिव्यभिचारमाशंक्यपरिहरति हानोपादानेति ॥ बुद्ध्यादेर्हानोपादानयोर्लयविक्षेपयोः कर्त्तात्मातदधिष्ठानमात्रेणकर्त्तेत्युच्यते

सनकेनचित् त्याज्योनविलाप्योनचगृह्यते नविक्षिप्यतेआत्म
नःसर्वाधिष्ठानत्वात्तस्यचाधिष्ठानांतराभावादित्यर्थः ॥ ९ ॥

सबाह्याभ्यंतरे शुद्धे प्रज्ञानैकरसे
घने ॥ बाह्यमाभ्यंतरं चान्यत्कथं
हेयं प्रकल्प्यते ॥ १० ॥ ॥छ॥

आत्मनःस्वरूपेणाहेयानुपादेयत्वेपितत्संबंधित्वेनप्राप्तस्यबा
ह्यस्यवस्त्राभरणादेरान्तरस्यचपापादेर्हेयत्वमान्तरस्यचयोगध्या
नादेरुपादेयत्वंचभविष्यतीतिनविशुद्धिरात्मनइत्याशंक्याहस
बाह्येति ॥ बाह्याभ्यंतरसहितेबाह्यमाभ्यंतरंचात्मैव नततःपृ
थगित्यर्थः॥ यतःशुद्धःकेवलोऽतोबाह्याभावः यतश्चप्रज्ञानैकर
सोऽतोनांतरमपिपृथगस्ति ॥ एकरसत्वंस्पष्टयति घनइति॥ सैं
धवघनवद्विज्ञानघनइत्यर्थः ॥ हेयमित्युपलक्षणं एवंभूतेआ
त्मनिकथंहेयमुपादेयंवाकल्प्यतइत्यर्थः॥ सत्तास्फूर्त्यनालिंगि
तस्यबाह्यस्याभ्यंतरस्यचोल्लिखितुमशक्यत्वात्तयोश्चात्मस्वरू
पत्वान्नततोबहिरंतर्वाकिमप्यस्ति परमार्थतोयदुपादेयंहेयंवाभ
वेदितिनात्मनोविशुद्धिसंकोचावकाशइतिभावः ॥ १० ॥

य आत्मा नेतिनेतीति परापोहेन
शेषितः ॥ स चेद्ब्रह्मविदात्मेष्टो य
तेतातः परं कथं ॥ ११ ॥ ॥

वस्तुस्वभावानुसारेणविचार्यमाणेनात्मनिहेयाद्यस्तीत्युक्तमि
दानींविद्वदनुभवेनाप्ययमर्थोवगम्यतइत्याह यआत्मेति ॥ब्रह्म

विदोज्ञानिनःआत्मास्वरूपंकथंयतेतकृतकृत्यत्वादित्यर्थः ११

अशनायाद्यतिक्रांतं ब्रह्मैवास्मि निरंतरं ॥ कार्यवान्स्यां कथं चाहं विमृशेदेवमंजसा ॥ १२ ॥ ॥

एवंविधमात्मतत्त्वंनपरानुभवगम्यमितिस्वयमेवात्मविदा शास्त्राचार्योपदेशानुसारेणविवेक्तव्यमित्याह अशनायादीति ॥ षडूर्मिरहितमित्यर्थः ॥ १२ ॥

पारगस्तु यथा नद्यास्तत्स्थः पारं यियासति ॥ आत्मज्ञश्चेत्तथा कार्यं कर्त्तुमन्यदिहेच्छति ॥ १३ ॥

एवंविमर्शेप्राप्तंप्रापणीयमितिकर्त्तव्यबुद्धिरेवनभवेदितिदृष्टांतेनाह पारगइति ॥ नद्याःपारंपरतीरंगतोयथातत्स्थःपरतीरस्थएवतमेवपारंयियासतियातुंप्राप्तुमिच्छतिचेदित्यन्वयः ॥ तथायथोक्तात्मज्ञोन्यत्कार्यंकर्त्तुमिहश्रेयोमार्गइच्छतीतियोजना नैवयियासतिनैवेच्छतिचेत्यर्थः ॥ १३ ॥

आत्मज्ञस्यापि यस्य स्याद्धानोपादानता यदि ॥ न मोक्षार्हः स विज्ञेयो वांतोसौ ब्रह्मणा ध्रुवम् ॥ १४ ॥

यःपुनरात्मज्ञोपिकार्यवान्स्यात्सनसम्यग्दर्शीति तंनिंदति ॥ आत्मज्ञस्यापीति ॥ स्पष्टार्थः ॥ १४ ॥

सादित्यं हि जगत्प्राणस्तस्मान्नाह
र्निशैव वा ॥ प्राणज्ञस्यापि न स्या
तां कुतो ब्रह्मविदोऽद्वये ॥१५॥ ॥

अनागतांतुयेपूर्वामनक्षात्रांतुपश्चिमां संध्यांनोपासतेविप्रास्ते कथम्ब्राह्मणाः स्मृताइतिस्मृतेर्ब्रह्मविदोपिविप्रस्यसंध्यावंदनमस्तिकार्यमित्याशंक्य कैमुतिकन्यायेननिराकरोति सादित्यमिति ॥ आदित्यः सूर्यस्तत्सहितमिदंजगत्सर्वंहियस्मात्प्राणोहिरण्यगर्भः तस्मात्प्राणज्ञस्यापिप्राणोहमस्मीति प्राणात्मभावमापन्नस्याप्युपासकस्येतियावत् ॥ अहर्निशैववानस्यातामुदयास्तमयरहितसूर्यरूपत्वात्तस्याहोरात्रेनस्यातामित्यर्थः ॥ तथाचश्रुतिः ॥ नहवाअस्माउदेतिननिम्लोचतिसकृद्दिवा हैवास्मैभवंतीति ॥तथाचप्राणज्ञस्यापिप्राणविदोपिभेददर्शिनो यद्यहर्निशेनस्यातांतदास्यब्रह्मविदोमुख्यब्रह्मभूतस्याद्वयेसर्वद्वैताभासरहितेस्वरूपेसतितेकुतःस्यातांनकुतोपीतिकालभेददर्शनाभावादेवतन्निमित्तकर्तव्याभावइत्यर्थः ॥ १५ ॥

न स्मरत्यात्मनो ह्यात्मा विस्मरेद्वा
प्यलुप्तचित् ॥ मनोपि स्मरतीत्येत
ज्ज्ञानमज्ञानहेतुजम् ॥ १६ ॥ ॥

ब्रह्मविदोबाह्यक्रियाभावेपिसंध्यंसमाधावात्मन्याचरेदितिश्रुतेःस्वात्मनिविस्मृतिंपरित्यज्यमोक्षायस्मृतिःकर्तव्येत्यतआह ॥ नस्मरतीति॥स्मरतियोगात्षष्ठीद्वितीयार्थे स्मरणाविस्मरण

योरभावे हेतुरलुप्तचिदिति॥ यद्यशक्यत्वादात्मनःस्मरणंविधा तुंनयुक्तं तर्हितत्त्वज्ञानादूर्ध्वमाविर्भावतिरोभावादिविकारशांत येमनएवात्मानंस्मरेदितिविधिःस्यादित्यतआह ॥ मनोपीति ॥ मनसोऽचेतनत्वात्स्मर्तृत्वानुपपत्तेर्मनःस्मरतीतिज्ञानमप्य ज्ञानहेतुजमाविवेकविलसितमित्यर्थः ॥ तथाचासम्यग्ब्रह्मावि दआत्मव्यतिरेकेणमनः पश्यतःसंध्यंसमाधाविति विधिर्नसम्य ग्ब्रह्मविदइतिभावः ॥ १६ ॥

**ज्ञातुर्ज्ञेयः परो ह्यात्मा सोविद्याक ल्पितः स्मृतः॥ अपोढे विद्यया त स्मिन् रज्ज्वां सर्प इवाद्वयः॥१७**

यद्यप्यात्माऽलुप्तचिद्रूपत्वान्नात्मानंस्मरति तथापि परमा त्मानंस्मरेदेवेत्याशंक्याह ॥ ज्ञातुरिति ॥ यदिपरआत्माज्ञा तुर्ज्ञेयोविषयःस्यात्तदासोऽविद्याकल्पितःस्वाज्ञानकल्पितोहि निश्चितंस्मृतोज्ञातोविद्वद्भिः ज्ञानविषयस्यरज्जुसर्पवदविद्या कल्पितत्वनियमात्सआत्मैवनभवतीत्यर्थः ॥ तथाचतस्मि न्नात्मनःपरत्वज्ञेयत्वादिकेविद्ययाआत्मविद्ययाऽपोढेबाधितेस तिज्ञातृज्ञेयविभागाभावादद्वयएवात्माभवतीत्यर्थः ॥ तत्रदृष्टां तोरज्ज्वांसर्पइवेति ॥ यथारज्जुविद्ययासर्पेबाधितेरज्जुरेवा वशिष्यतेतद्वदित्यर्थः ॥ १७ ॥

**कर्तृकर्मफलाभावात्सबाह्याभ्यंत रं ह्यजं ॥ ममाहं वेत्ति यो भाव स्तस्मिन्कस्य कुतोभवत् ॥ १८ ॥**

प्रत्यगात्मनोवस्तुतोद्वितीयत्वेपितस्मिन्ममाहमित्यादिसं सारप्रतिभासात्तन्निवृत्तयेकिमपिकर्तव्यंभविष्यतीत्यतआह ॥ कर्तृकर्मेति ॥ कर्तृकर्मफलभेदाभावात्सबाह्याभ्यंतरमजमेवा त्मस्वरूपंहियतोतस्मिन्नात्मनिममाहमित्यादिरूपोयोभावःप्र तिभासःसकस्यभवेत्कुतोवाहेतोर्भवेत्नभवेदेवेतियोजना॥ त स्मात्तज्ज्ञानोत्पत्तेःप्रागेवसर्वकर्तव्यतानोर्ध्वमितिभावः ॥१८॥

**आत्मा ह्यात्मीय इत्येष भावोऽवि द्याप्रकल्पितः ॥ आत्मैकत्वे ह्यसौ नास्ति बीजाभावे कुतः फलं॥१९॥**

आत्मविदोदेहादावहंकारममकाराभावेहेतुमाह ॥ आत्मा ह्यात्मीयइति ॥ आत्मैकत्वेज्ञातेसतीतिशेषः ॥ १९ ॥

**द्रष्टृ श्रोतृ तथा मंतृ विज्ञात्रेव तद क्षरं ॥ द्रष्ट्राद्यन्यन्न तद्यस्मात्तस्मा द्द्रष्टाहमक्षरं ॥ २० ॥ ॥ छ ॥**

केनप्रमाणेनतदात्मकत्वंज्ञातुंशक्यमित्यपेक्षायांवेदांतवा क्यप्रमाणबलादित्याह ॥ द्रष्टृश्रोत्रितिद्वाभ्यां ॥ यद्द्रष्टृश्रोतृ मंतृविज्ञातृप्रसिद्धंप्रत्यग्रूपं तदक्षरमेवसर्वाधिष्ठानंब्रह्मैवेतियो जना ॥ तथाचश्रुतिरक्षरंप्रकृत्यअदृष्टंद्रष्टृश्रुतंश्रोत्रमतंमंत्रवि ज्ञातंविज्ञात्रिति ॥ तथानान्यदतोस्तिद्रष्टृनान्यदतोस्तिश्रोतृ नान्यदतोस्तिविज्ञात्रित्युत्तरवाक्यार्थमाह ॥ द्रष्ट्रादीति ॥ तत् द्रष्ट्रादिप्रत्यक्स्वरूपंतस्मादक्षरादन्यन्नभवतीत्यर्थः यस्मादेव

मविषयभूतमेवाद्वयमात्मतत्त्वंश्रुतिसिद्धंतस्माद्द्रष्टाहमक्षरमि त्युपसंहारः ॥ २० ॥

स्थावरं जंगमं चैव द्रष्टृत्वादिक्रि यायुतं ॥ सर्वमक्षरमेवातः सर्व स्यात्माक्षरं त्वहं ॥२१॥ ॥ छ ॥

प्रत्यगात्मनोऽक्षरब्रह्मात्मत्वेपिकथमद्वयात्मत्वसिद्धिरित्या शंक्यैतस्मिन्नुखल्वक्षरेगार्ग्याकाशओतश्चप्रोतश्चेतिश्रुत्यर्थंवद नूअद्वयात्मत्वंसाधयति ॥ स्थावरमिति ॥ उपाधिरुपाहितमु पाध्याधारश्चेतिसर्वमक्षरमेवातोहमक्षरंसर्वस्यात्मास्वरूपंनम दन्यत्किमप्यस्तीत्यर्थः ॥ २१ ॥

अकार्यशेषमात्मानमक्रियात्मक्रि याफलं ॥ निर्ममं निरहंकारं यः प श्यति स पश्यति ॥ २२ ॥ ॥

स्थावरादिसर्वमक्षरमित्युक्तेसप्रपंचमेवाक्षरमात्मेतिप्रातिभा सशंकांवारयन्नागमिकमात्मज्ञानंस्फुटयत्यकार्यशेषमिति ॥ अ कार्यशेषत्वमकर्तृत्वंतत्रहेतुरक्रियात्मेति ॥ क्रियास्वरूपतत्फ लविलक्षणमित्यर्थः ॥ क्रियातत्फलसंसर्गशून्यमितिवा ॥ कु तोयतोनिर्ममंतदपिकुतोयतोनिरहंकारंएवंविधमात्मानंयःस म्यग्पश्यतिसएवतत्त्वदर्शीत्यर्थः ॥ २२ ॥

ममाहंकारयत्नेछाः शून्या एव स्व भावतः ॥ आत्मनीति यदि ज्ञात

माध्वं स्वस्थाः किमीहितैः ॥२३॥

आत्मविदोहंकाराद्यभावादकर्मशेषत्वमुक्तंमपंचयंस्तस्यकृत कृत्यतामाह ॥ ममाहंकारेतिआत्मनिस्वभावतःशून्याएवावि द्याप्रयुक्तदेहाद्यभिमानंविनानसंतीत्यर्थः ॥ हेमुमुक्षवोयद्येवं ज्ञातंतर्हिस्वस्थानिर्व्यग्राःसंतःआध्वंतिष्ठतकिमीहितैःकर्मभिः कृत्यं ज्ञानेनैवकृतकृत्यत्वात्कर्मणांचानधिकृतकृतानांविफल त्वाच्चेत्यर्थः ॥२३ ॥ ॥ ॥ ॥

योहंकर्तारमात्मानं तथा वेत्तारमेव च ॥ वेत्ति नात्मज्ञ एवासौ योन्य थाज्ञः स आत्मवित् ॥२४॥ ॥

देहाद्यतिरिक्तात्मज्ञानवतःसर्वेषुपारलौकिककर्मस्वधिका राभ्युपगमादस्त्यात्मविदोपिसफलंकर्मेत्याशंक्यतस्यात्मतत्त्व वित्त्वमेवनास्तीत्याह ॥ योहंकर्तारमिति ॥ कस्तर्हिआत्मविदि त्यतआह ॥ योन्यथाज्ञइतियोऽकर्त्तारमज्ञातारमभोक्तारंचा त्मानंजानातिसआत्मतत्त्वविदित्यर्थः ॥ २४ ॥

यथान्यत्वेपि तादात्म्यं देहादिष्वा त्मनो मतं ॥ तथा कर्तु रविज्ञाना त्फलकर्मात्मतात्मनः ॥ २५ ॥ ॥

किमितिकर्त्तात्मेतिजानतोनात्मवित्त्वमात्मन्येवकर्तृत्वादिप्र तिभासादित्याशंक्य कर्त्रविवेकनिबंधनोयंभ्रमइत्यभिप्रेत्याह॥ यथान्यत्वेपीति ॥ यथापरमार्थतोदेहादिभ्योन्यत्वेप्यात्म

नस्तेषुतादात्म्यमाध्यासिकंमतमिष्टं तथाऽकर्त्तुरभोक्तुरविज्ञाना दात्मनःफलकर्मात्मतामता यथास्थूलदेहात्मनोरभेदाध्यासान्मनुष्यत्वाद्यभिमानस्तथाहंकारप्रधानलिंगदेहाविवेकात्कर्तृत्वाद्यभिमानोमिथ्याबुद्धिरित्यर्थः ॥ २५ ॥ ॥

दृष्टिः श्रुतिर्मतिर्ज्ञातिः स्वप्ने दृष्टा
जनैः सदा ॥ तासामात्मस्वरूप
त्वादतः प्रत्यक्षतात्मनः ॥ २६ ॥

नन्वहंकारस्यैवात्मत्वात्कथमहंकारात्मनोराविवेकइत्युच्यतइत्यतआह ॥ दृष्टिरिति ॥ दृष्ट्यादिशब्दैश्चक्षुरादिद्वारकांतःकरणवृत्तयोनिर्दिश्यंते ॥ तास्तुसदैवस्वप्नेजनैर्दृष्टाः सवृत्तिकस्यांतःकरणस्य स्वप्नेवेद्याकारत्वात्तद्भेदितान्यःसाक्षीसिद्धइत्यभिप्रायः ॥ किंचतासांदृष्ट्यादीनामात्मस्वरूपत्वादित्ययमर्थःसुषुप्तेसवृत्तिकस्यांतःकरणस्याविद्यामात्रतयात्मन्यस्तमयादात्मनश्चानस्तमयात्स्वतस्तस्याद्वितीयापरोक्षचिन्मात्रतयावभासमानत्वाद्युक्तांतःकरणादहंकारादिरूपादात्मनोऽव्यतिरेकसिद्धिरिति ॥ यतएवमतआत्मनःप्रत्यक्षतासाक्षिमात्रेणस्वयंप्रकाशमानतयानित्यापरोक्षब्रह्मरूपतासिद्धेत्यर्थः ॥ २६ ॥

परलोकभयं यस्य नास्ति मृत्यु
भयं तथा ॥ तस्यात्मज्ञस्य शोच्याः
स्युः सब्रह्मेंद्रा अपीश्वराः ॥ २७ ॥

एवमशेषप्रमातृसाक्षिभूततयाप्रत्यगात्मनोब्रह्मत्वापादनेला

भंदर्शयन्योन्यथाज्ञःसआत्मविदित्यत्रोक्तमात्मवित्त्वंस्पष्टीकरोति॥परलोकभयमिति ॥ यस्यपरलोकभयंपरलोकनिमित्तंभयं किमहंसाधुनाकरवंकिमहंपापमकरवमित्यादिरूपंनास्ति नैनंकृताकृतेतपतइतिश्रुतेः॥तथायस्यमृत्युभयंमरणभयंनास्ति॥नजीवोम्रियतइतिश्रुतेः ॥ आत्मव्यतिरिक्तस्यद्वितीयस्यादर्शनाद्वितीयदर्शननिमित्तंहिभयं द्वितीयाद्वैभयंभवतीतिश्रुतेः ॥ तस्यात्मज्ञस्यब्रह्मेंद्राद्या अपिज्ञानैश्वर्यसंपन्नतयाईश्वराअपिशोच्याःशोचनीयाःस्युरहोएतेऐश्वर्यासक्ततयाव्यग्राःकथंस्वस्थाः स्युरिति ॥ तस्माद्यःपरलोकमरणनिमित्तव्यग्रताहेत्वहंकारादिशून्यतयाब्रह्मनिष्ठःसएवात्मविन्नविपरीतइतिसिद्धं ॥ २७ ॥

**ईश्वरत्वेन किं तस्य ब्रह्मेंद्रत्वेन**
**वा पुनः॥ तृष्णा चेत्सर्वतश्छिन्ना**
**सर्वदैन्योद्भवाशुभा ॥२८॥ ॥**

ब्रह्मेंद्रादिभावस्यसर्वैःप्रार्थ्यमानत्वात्कथंशोच्यतेत्याशंक्य ब्रह्मात्मज्ञानादूर्ध्वंनकिमपिप्रार्थ्यमस्तीत्याशयेनाह ॥ ईश्वरत्वेनेति सर्वत्रदैन्यस्योद्भवोयस्याःसातथाअतएवाशुभापापप्रवृत्तिद्वारत्वात्सातृष्णाचेत्सर्वतःसर्वात्मनासहमूलेनछिन्नेत्यर्थः ॥ तथाचश्रुतिः ॥ यदासर्वेप्रमुच्यंतेकामायस्यहृदिश्रिताःअथमर्त्योऽमृतोभवत्यत्रब्रह्मसमश्नुतइति ॥ २८ ॥

**अहमित्यात्मधीर्या च ममेत्यात्मी**
**यधीरपि ॥ अर्थशून्ये यदा यस्य**
**स आत्मज्ञो भवेत्तदा ॥ २९ ॥ ॥**

निर्ममंनिरहंकारंयःपश्यतिसपश्यतीत्युक्तंस्पष्टयन्नात्मज्ञस्य लक्षणमात्मेवाअहमितीति॥ यस्यशास्त्राचार्यानुगृहीतस्यपदार्थ द्वयविवेकतोहंममेति चात्मात्मीयविषयधियावर्थशून्येप्रयोज नशून्येयदास्यातांतत्प्रयुक्तव्यवहारहीनःपुमान्यदास्यादित्यर्थः तदासआत्मविद्भवेद्देहादौतदनुबंधेचव्यवहारकालेपिपूर्ववद्वस्तु त्वोल्लेखरहिततयाआत्ममात्रदर्शीसम्यगात्मविदित्यर्थः ॥२९॥

**बुद्ध्यादौ सत्युपाधौ च तथासत्य विशेषता ॥ यस्य चेदात्मनो ज्ञा ता तस्य कार्यं कथं भवेत् ॥३०॥**

यदैवमात्मज्ञानंवाक्याद्भवतितदाकृतकृत्यत्वान्नतस्यकार्यशेष तासंभवतीतिप्रागुक्तमकार्यशेषत्वंप्रपंचयतिबुद्ध्यादाविति॥जा ग्रत्स्वप्नयोर्बुद्ध्यादावुपाधौसतितथासुषुप्तावसतिच यस्यात्मनो ऽविशेषताचेज्ज्ञाताचेच्छब्दोऽसंदेहेपिसंदेहवचनोवेदाश्चेत्प्रमाण मितिवत्तस्याविशेषात्मज्ञस्यकार्यंकथंभवेन्नकथंचिदित्यर्थः॥३०

**प्रसन्ने विमले व्योम्नि प्रज्ञानैकरसे द्वये ॥ उत्पन्नात्मधियो ब्रूत किम न्यत्कार्यमिष्यते ॥ ३१ ॥ ॥ छ ॥**

आत्मविदोनास्तिकार्यमित्यत्रहेत्वंतरमाह ॥ प्रसन्नइति॥ व्योम्निव्योमसदृशेप्रसन्नेस्वतोदोषरहितेविमले आगंतुकमलव र्जितेउक्तविशेषणद्वयसाधकंक्रमेणविशेषणद्वयं प्रज्ञानैकरसेऽ द्वयइति ॥ एतस्मिन्ब्रह्मण्युत्पन्नाआत्मधीरात्मेतिमतिरेवंवि

धंब्रह्मैवात्मेतिबुद्धिर्यस्यतस्यात्मस्वरूपज्ञानादन्यत्किंकार्यमि ष्यतेतद्भूतनकिमपीत्यर्थः ॥ ३१ ॥

आत्मानं सर्वभूतस्थममित्रं चात्म नोपियः ॥ पश्यन्निछत्यसौ नूनं शीतीकर्तुं विभावसुं॥ ३२ ॥ छ ॥

ननुशास्त्राचार्यप्रसादादेवंतत्वेवगम्यमानेपिश्रेयोमार्गप्राप्ति प्रतिबंधकस्यशत्रोःसंभवात्तत्परिहारार्थंकिमप्यनुष्ठेयं स्यादिति चेन्नेत्याह ॥ आत्मानमिति ॥ यथोष्णस्वभावस्यविभावसोः शीतस्वभावतापादनंनसंभाव्यतेतथासर्वभूतात्मभूतस्यशत्रुमि त्रादिसंभावनादुःसंपाद्येतिनानुष्ठेयकल्पनावसरइत्यर्थः ॥३२॥

प्रज्ञाप्राणानुकार्यात्माछायेवाक्षादि गोचरः ॥ ध्यायतीवेति चोक्तो हि शुद्धो मुक्तः स्वतो हि सः ॥ ३३ ॥

आत्मनःकर्मशेषत्वंकिंसोपाधिकस्येष्यतेनिरुपाधिकस्यवे तिविकल्प्याद्यमंगीकृत्यद्वितीयंदूपयाति ॥ प्रज्ञेति ॥ प्रज्ञाबु द्धिःप्रज्ञाप्राणावनुकर्तुंशीलमस्तीतिप्रज्ञाप्राणानुकारीप्रज्ञाप्राणो पाधिकइत्यर्थः ॥ छायेवसूर्यादिप्रतिबिंबमिवजलेष्वक्षादिगो चरःइंद्रियतद्वारकवृत्तिषुप्रतिबिंबितआत्मातदविवेकात्करोतीवे तिध्यायतीवलेलायतीवेतिश्रुत्योक्तस्तस्यांदशायांकर्मशेषत्वम श्नुवानोपिस्वतःशुद्धोमुक्तश्चहिसआत्माभवति ॥ उदकानुगत्वे नसूर्यस्यकंपादिमत्तयाभासमानत्वेपिनपरमार्थतःसूर्यःकंपादि

मानुभवतितथाचोपाधिविगमेभेदविपर्यासादिविगमाद्वारहीनं कर्मात्मतत्त्वविदंनढौकतइत्यर्थः ॥ ३३ ॥

**अप्राणस्यामनस्कस्य तथाऽसंस गिणो दृशेः ॥ व्योमवद्व्यापिनो ह्य स्य कथं कार्यं भवेन्मम॥ ३४ ॥**

निरुपाधिकस्यात्मनोनकर्मशेषत्वमित्युक्तमुपपादयन्प्राणायामान्षडाचरेदित्यादियतिधर्मविधिशेषतापिनास्यास्तीत्याह ॥ अप्राणस्येति ॥ क्रियाशक्तिप्राणहीनस्यज्ञानशक्तिमनोहीनस्यस्वभावतोऽसंसर्गिणोऽसंगस्यव्योमवदपरिछिन्नस्यस्वतश्चलनशक्तिरहितस्येतियावत् ॥ दृशेश्चिदेकरसस्यास्यैवंविधस्य ममकथं कार्यंभवेन्नकथमपीत्यर्थः ॥ ३४ ॥

**असमाधिं न पश्यामि निर्विकारस्य सर्वदा ॥ ब्रह्मणो मे विशुद्धस्य शोध्यं नान्यद्विपाप्मनः ॥ ३५ ॥ ॥ छ ॥**

तत्रैकाग्रंमनःकृत्वायतचित्तेंद्रियक्रियः उपविश्यासनेयुंज्यायोगमात्मविशुद्धयइत्यादिभगवद्वचनान्मनःसमाधानांनुष्ठानेनात्मशुद्धिःसंपाद्यावशिष्यतइत्याशंक्य तस्याःप्रागेवसिद्धत्वान्नेदानीमस्त्यवसरइत्यभिप्रेत्याह ॥ असमाधिमिति॥विकारोह्यसमाधिर्नाम तद्धेतूपाधिशून्यतयासदानिर्विकारस्यतन्नपश्यामिब्रह्मभूतस्यातएवसर्वदाविशुद्धस्यप्रागेवविपाप्मनानित्यनिवृत्तकल्मषस्यशोध्यंचान्यन्नपश्यामीत्यर्थः ॥ ३५ ॥

गंतव्यं च तथा नैव सर्वगस्याचल
स्य च॥नोर्ध्वं नाधस्तिरो वापि नि
ष्कलस्यागुणत्वतः ॥ ३६ ॥

नन्वन्यन्नपश्यामीत्ययुक्तंगंतव्यब्रह्मलोकादेर्गमनसाधनस्यार्चिरादिमार्गस्यचब्रह्मविदोपिज्ञातव्यत्वादित्याशंक्य सगुणब्रह्मविदस्तत्सत्त्वेपिननिर्गुणब्रह्मविदस्तथात्वमितिसहेतुकमाह ॥गंतव्यमिति॥ गंतव्यमितिभावकर्मणोस्तंत्रेणग्रहणं तथाचसर्वगत्वेनचलनासामर्थ्याद्गंतव्यंनैवपश्यामि गमनधात्वर्थंनैव पश्यामीत्यर्थः ॥ तथागंतव्यंगत्याप्राप्यंदेशंस्थानविशेषंनपश्यामिकुतइत्यतआह ॥ नोर्ध्वमिति तिरइतिपुरस्तात्पश्चाद्दक्षिणंचोत्तरंचनैवपश्यामीत्यनुषंगः कुतोदेशभेदाभावइत्यतआह ॥ निष्कलस्येति ॥ पूर्णस्येत्यर्थः ॥ कुतोनिष्कलत्वंज्ञानसुखादिगुणात्मकावयवयोगादित्यतआह ॥ अगुणत्वतइति ॥ ज्ञानसुखयोः स्वरूपत्वात्संसर्गिगुणस्यचासंगेमय्यसंभवाद्गुणतोपि विभागशून्यस्यनगंतव्यंप्राप्यंगतिःप्राप्तिर्वाविद्यतइति नतत्साधननिष्पादनविधानावकाशइत्यर्थः ॥ ३६ ॥

चिन्मात्रज्योतिषो नित्यं तमस्त
स्मिन्न विद्यते ॥ कथं कार्यं ममैवा
द्य नित्यमुक्तस्य शिष्यते॥ ३७ ॥

किंवाज्ञानोपाधिंविनात्मनिनित्यमुक्तेकस्यापिविशेषस्योत्प्रेक्षितुमशक्यत्वादज्ञानस्यच ज्ञानस्वभावेवस्तुतोसंभाव्यमानत्वा

न्नकदाप्यात्मनःक्रियायोग्यतेतिस्थितेकुतइदानीमज्ञानप्रतिभासस्याप्यभावेकर्मविधिशेषतास्यादित्यभिप्रेत्याह॥चिन्मात्रेति॥ तस्मिन्नात्मनितमःस्वरूपतःप्रतिभासतोपिनाविद्यते कुतश्चिन्मात्रज्योतिषःज्योतिष्ट्वतइतिभावप्रधानोनिर्देशः सुगममन्यत्॥३७

अमनस्कस्य का चिंता क्रिया वा निंद्रियस्य का ॥ अप्राणो ह्यमनाः शुभ्र इति सत्यं श्रुतेर्वचः ३८॥ ॥

किंचाज्ञानाभावेबाह्यांतःकरणएतत्संसर्गाभावात्तंविनाप्रवृत्त्यभावान्नमेकर्मावसरइत्याह ॥ अमनस्कस्येति ॥ प्राणमनोविहीनत्वेप्रमाणमाह ॥ अप्राणोहीति ॥ श्रुतेर्वचःसत्यंसत्यार्थंनिर्दोषतयास्वतःप्रमाणत्वादित्यर्थः ॥ ३८ ॥

अकालत्वाददेशत्वाददिक्त्वादनिमित्ततः ॥ आत्मनो नैव कालादेरपेक्षा ध्यायतः सदा ॥ ३९ ॥

अपरात्रादिकालस्यविविक्तपूतादिदेशस्यप्राच्यादिदिग्विशेषस्यमनोविक्षेपराहित्यराहूपरागादिनिमित्तस्यच प्रतीक्षायाआत्मचिंतनेकर्तव्यत्वात्कथंकार्याभावइत्याशंक्याह ॥ अकालत्वादिति ॥ सदात्मानंध्यायतोयतेर्नैवकालादेरपेक्षास्तीतियोजना तत्रहेतुरात्मनोऽकालत्वादित्यादिःआत्मस्वरूपस्यकालाद्यनिबंधनत्वान्नतद्ध्यानेतदपेक्षेत्यर्थः ॥तथाचाहभगवान्सूत्रकारः यत्रैकाग्रतातत्राविशेषादिति ॥३९॥

**यस्मिन्देवाश्च वेदाश्च पवित्रं कृत्स्नमेकतां ॥ व्रजेत्तन्मानसं तीर्थं यस्मिन्स्नात्वामृतो भवेत् ॥ ४० ॥**

ब्रह्मविदोदेशकालादिसव्यपेक्षेकर्मण्यपेक्षाभावेपिप्रयागादितीर्थेस्यादपेक्षा गंगातीरेवसेन्नित्यंभिक्षुर्मोक्षपरायणइत्यादिस्मृतिविहितत्वादित्याशंक्य ब्रह्मात्मज्ञानरूपेतीर्थेसाक्षान्मुक्तिहेतौस्नातस्यात्मविदोनतीर्थांतरापेक्षास्तीत्याह ॥ यस्मिन्निति॥ यस्मिन्ब्रह्मात्मस्फूर्तिरूपेदेवास्तत्तत्तीर्थस्थानविशेषाधिष्ठातारो माधवविश्वेश्वररामेश्वरत्रिविक्रमादयःपूजादर्शनस्पर्शनस्मरणादिभिर्भक्तपावनाः प्रसिद्धास्तथावेदाश्चऋग्यजुसामाथर्वाख्या अध्यनब्रह्मयज्ञपाठानुष्ठानादिभिःपावयंति तथाकृत्स्नंपवित्रं पावनंतीर्थविशेषंहरिहरनामोच्चारणादिएतत्सर्वमेकत्वंव्रजेद्यस्मिन्त्सरितइवसागरेंतर्भवंतीत्यर्थः ॥ सर्वात्मकब्रह्माविर्भावरूपत्वादितिपरमोहेतुरत्रानुसंधेयः ॥ तन्मानसंमनसिवेदांतमहावाक्यजनितांतःकरणवृत्तिरूपेसमुल्लसितंमानसंतीर्थंसंसारपापमूलाविद्यातारकं तीर्थत्वंस्पष्टयाति ॥यस्मिन्निति यस्मिन् स्नात्वानिमज्ज्योदकराशौनिक्षिप्तोदकबिंदुवत्तदेकतांप्राप्यइत्येतत् अमृतोभवेन्निर्विशेषनित्यात्मस्वरूपएवभवेत्तस्मिंस्तीर्थेनित्यंनिमग्नस्यनतीर्थांतरापेक्षेतिभावः ॥ तथाचश्रुतिः ॥ शतं शुक्राणियत्रैकंभवंतिसर्वेवेदायत्रैकंभवंतिसर्वेहोतारोयत्रैकंभवंतिसमानसीनआत्माजनानांइति॥यथोदकंशुद्धेशुद्धमासिक्तंतादृगेवभवति एवंमुनेर्विजानतआत्माभवतिगौतमेतिच ॥ ४०॥

न चास्ति शब्दादिरनन्यवेदनः पर स्परेणापि न चैव दृश्यते ॥ परेण दृश्यास्तु यथा रसादयस्तथैव दृश्यत्वत एव दैहिकाः॥ ४१ ॥ ॥

एवंकृतार्थत्वापादकंज्ञानतीर्थंकेनोपायेनप्राप्यमित्यपेक्षायांपूर्वोक्तःपदार्थविवेकएवतल्लाभोपायइति वक्तुंप्रथमंस्थूलदेहान्यत्वमात्मनोविशदयति ॥ नचास्तीति ॥ शब्दादिर्गंधांतोविषयोऽनन्यवेदनोनचास्तिस्वयंप्रकाशस्तावन्नास्तीत्यर्थः ॥ तथा परस्परेणापिशब्देनस्पर्शः स्पर्शेनशब्दइत्येवंपरस्परेणापिनचैव दृश्यतेप्रकाश्यतेजडत्वादेवेत्यर्थः दर्शनमंतरेणव्यवहारानुपपत्तेर्दर्शनस्यस्वतः परस्परतश्चाभावेपरिशेषात्परेणस्वविलक्षणेनाजडेनप्रकाश्याएवतुशब्दोवधारणार्थः तथाचदैहिकाअपिरसादयः परेणदृश्याः दृश्यत्वाद्यथाबाह्यरसादयस्तथैवेमेतस्मात्तथेत्यक्षरार्थः ॥ ४१ ॥

अहंममेत्येषणयत्नविक्रियासुखादयस्तद्वदिह प्रदृश्यतः ॥ दृश्यत्वयोगाच्च परस्परेण ते नदृश्यतां यांति ततः परो भवान् ॥ ४२ ॥

तदेवंपंचभूतात्मकात्स्थूलाद्देहात्तद्रष्टारमात्मानंविविच्यसूक्ष्मादपिदेहात्तंविविनक्ति ॥ अहंममेति ॥ अहमहंकारःएषण

यत्नविक्रियासुखादयः कामप्रयत्नकर्तृत्वभोक्तृत्वसुखदुःखमोहद्वेषादयोममेति निर्दिश्यमानामनोवृत्तयस्तद्वच्छब्दादिवन्नानन्यवेदनाः कुतःइहव्यवहारभूमौप्रदृश्यतोदर्शनकर्मत्वात्तेपरस्परेणापिदृश्यतांनयांतिनप्राप्नुवंति दृश्यत्वयोगादेवपरिशेषात्तेषांद्रष्टाततस्तेभ्योहंकारादिभ्यस्तत्संघातरूपाल्लिंगदेहादिति यावत् भवानात्मापरोन्यइतियोजना ॥ ४२ ॥

अहंक्रियाद्या हि समस्तविक्रिया
सकर्तृका कर्मफलेन संहता ॥ चि
तिस्वरूपेण समंततोर्कवत्प्रकाश्य
मानाऽसितताऽऽत्मनो ह्यतः ॥ ४३ ॥

यद्यप्येवंदेहद्वयग्राहकत्वात्तदतिरिक्तएवात्मातथापितत्संबंधप्रतीतेस्तस्यननित्यमुक्तरूपतेत्याशंक्याह अहंक्रियेति॥अहंक्रियाहंकरणमहंममेत्येवमाद्यासमस्तविक्रियाचितिस्वरूपेण चैतन्यप्रकाशात्मनाऽर्कवदर्केणेवसमंततःप्रकाश्यमाना हियतोऽतआत्मनोऽसितताऽबद्धतासिद्धा विक्रियासंबंधस्यापिदृश्यत्वाद्दृष्टृधर्मत्वानुपपत्तेर्नमुक्तिविरोधइत्यर्थः ॥ ४३ ॥

दृशिस्वरूपेण हि सर्वदेहिनां विय
द्यथा व्याप्य मनांस्यवस्थितः॥अ
तो न तस्मादपरोस्ति वेदिता परो
पि तस्मादत एक ईश्वरः ॥ ४४ ॥

एवंदेहद्वयाविविक्तस्याप्यात्मनःप्रतिदेहंपरिछिन्नत्वान्नब्रह्मात्मनापूर्णतासिध्येदित्याशंक्याह ॥ दृशिस्वरूपेणहीति ॥ हियतःआत्मासर्वदेहिनांमनांसिदृशिस्वरूपेणैवव्याप्यघटादीनिवियदिवावस्थितोनपरिछिन्नरूपेण॥अतस्तस्मादात्मनश्चितिस्वरूपादपरोजीवोवेदितानास्तितथा परईश्वरोपितस्मादन्योवेदितानास्तिचितिस्वभावत्वाविशेषत्वात्तस्मादेकएवात्मेत्यर्थः आत्मानस्वरूपभेदवानुपाधिपरामर्शमंतरेणाविभाव्यमानभेदत्वादाकाशवदितिभावः ॥ ४४ ॥

शरीरबुद्ध्योर्यदि चान्यदृश्यता नि
रात्मवादाः सुनिराकृता मया ॥ प
रश्च शुद्धो ह्यविशुद्धिकर्मतः सुनि
र्मलः सर्वगतोऽसितोद्वयः ॥ ४५ ॥

देहद्वयसाक्षीब्रह्मस्वभावश्चेदात्माकथंतर्हितस्यनास्तितार्शकाकेषांचिदित्याशंक्यस्वदोषवशादेवेत्यभिप्रेत्याह ॥ शरीरेति ॥शरीरबुद्ध्योःस्थूलसूक्ष्मदेहयोर्यद्यन्येननित्यसद्रूपेणदृश्यतापूर्वोक्तन्यायेनसिद्धातदानिरात्मवादाः शून्यक्षणिकाद्यात्मवादामयानिराकृताएवेत्यर्थः ॥ तथाचअविशुद्धिकरात्कर्मतोधर्माधर्मादिलक्षणात्कर्मणःपरोव्यतिरिक्तस्तत्साक्षित्वादतश्चशुद्धोऽकर्ताऽतश्चसुनिर्मलः॥ कर्मफलभोगमललेशेनापिरहितःसर्वगतोऽपरिछिन्नोऽतएवासितोबंधनशून्यश्चेत्यर्थः ॥ ४५ ॥

घटादिरूपं यदि तेन गृह्यते मनः प्रवृत्तं

बहुधा स्ववृत्तिभिः ॥ अशुद्धयचि
द्रूपविकारदोषता मतेर्यथा वारयि
तुं न पार्यते ॥ ४६ ॥ ॥छ॥

भवेदेतदेवंयदिशरीरबुद्ध्योरात्मदृश्यतासिद्ध्येत्सातुनसंप्रतिपन्नेत्याशंक्यतयोरात्मदृश्यत्वाभावेबाधकमाह ॥ घटादीति ॥ यदितेतवमतेस्ववृत्तिभिर्बहुधाप्रवृत्तंघटादिरूपंविषयाकारंमनोन्येनात्मनानगृह्यतेनप्रकाश्यतेतदात्मनोमनोन्यत्वासिद्धावशुद्ध्यचिद्रूपविकारदोषदुष्टतायथामतेर्बुद्धेस्तथावारयितुंनशक्यतेतस्यसाक्षित्वानभ्युपगमेसतिमातिदोषाणांतस्मिन्नवश्यंभावात्तथाचानिर्मोक्षप्रसंगइत्यर्थः ॥ अथवायद्यपिशरीरद्वयग्राहकतयातदन्यआत्मानित्यसद्रूपस्तथापिदृश्यसंसर्गकृतदोषोनपरिहर्तुंशक्यतेस्वचैतन्याभेदेनहिदृश्यमवभासयन्द्रष्टाभवति ॥ अन्यथादृश्यस्यापरोक्षानुपपत्तेरतोविशुद्धत्वाद्यनुपपन्नमितिशंकते ॥ घटादिरूपमिति ॥ स्ववृत्तिभिर्बहुधाप्रवृत्तंघटाद्याकारंमनोयदितेनचेतनात्मनागृह्यतेतदातस्यदृश्यसंबंधादशुद्ध्यादिदोषतावारयितुंनपार्यतेयथामतेश्चैतन्यसंसर्गाच्चिच्छायतांवारयितुंनपार्यतेतद्वदित्यर्थः ॥ ४६

यथा विशुद्धं गगनं निरंतरं न सज्जते
नापि च लिप्यते तथा॥ समस्तभूते
षु सदैव तेष्वयं समः सदात्मा ह्य
जरोऽमरोऽभयः ॥ ४७ ॥ ॥छ॥

स्यादेतदेवंयदिमातिवत्सावयवंपरिछिन्नंपरिणामिचात्मस्वरूपंस्यान्नैवमात्मस्वरूपमतोनास्याशुद्ध्यादिशंकावकाशइतिदृष्टांतेनोपपादयन्नुत्तरमाह ॥ यथाविशुद्धमिति ॥ विशुद्धंपरिणामविक्रियामलरहितंनिरंतरमपरिछिन्नमतएवनिरवयवं चेतिद्रष्टव्यं ॥ एवंविधंयथागगनंनसज्जतेकाष्ठेनजतुवन्नसंलग्नंभवतिनापिलिप्यतेभल्लातकरसेनेववस्त्रादि ॥ तथात्मापिविशुद्धोनिरंतरोनिरवयवश्चशास्त्रान्निश्चितोनबुध्यादिषुसज्जतेनापितद्दोषेणालिप्यतेइत्यर्थः ॥ अत्रशास्त्रप्रसिद्धिंहिशब्देनद्योतयन्हेतुमाह समस्तभूतेष्विति ॥ तत्तदभिमानिदेवतासहितेष्वपिसमस्तभूतेषुअयमात्मासदासमोहियस्मात्तस्मादजरोमरोभयोनित्यशुद्धइत्यर्थः ॥ तथाचशास्त्रं ॥ यःसर्वेषुभूतेषुतिष्ठन्सर्वेभ्योभूतेभ्योंतरोयंसर्वाणिभूतानिनविदुर्यस्यसर्वाणिभूतानिशरीरंयःसर्वाणिभूतान्यंतरोयमयत्येषतआत्मांतर्याम्यमृतइति ॥ समंसर्वेषुभूतेषुतिष्ठंतंपरमेश्वरं ॥ विनश्यत्स्वविनश्यंतंयःपश्यतिसपश्यति ॥ नलिप्यतेलोकदुःखेनबाह्यइत्यादि ॥ ४७ ॥

अमूर्त्तमूर्त्तानि च कर्मवासना दृशि
स्वरूपस्य बहिः प्रकल्पिताः ॥ अ
विद्यया ह्यात्मनि मूढदृष्टिभिरपोह्य
नेतीत्यवशेषितो दृशि ॥ ४८ ॥ ॥

किंचदृश्यस्यबाधितत्वादपिनतत्कृतदोषसंबंधआत्मनःसंभाव्यते नहि मिथ्यार्थेनसत्यंवस्तुसंसृज्यते॥कथंबाधितत्वमितिचेत्प्रतिपन्नोपाधौनिषिध्यमानत्वाद्रज्जुसर्पादिवदित्यभिप्रेत्याह ॥

अमूर्तेति॥ अमूर्तंचमूर्तानिच अमूर्तमूर्तानिपंचमहाभूतात्मकानि स्थूलानिद्वेवावब्रह्मणोरूपेमूर्तंचैवामूर्तंचेतिश्रुतौदृशिस्वरूपस्य ब्रह्मणःसंबंधीनिश्रुतानिच अपरंकर्मवासनाश्रयंलिंगमितियावत्तदपितस्यहैतस्यपुरुषस्यरूपंयथामाहारजनंवासइत्यत्रोक्तं एतत्सर्वंसकारणंमूढबुद्धिभिरविद्ययामोहरूपयाआत्मनिदृशिस्वरूपेप्रत्यगात्मनिब्रह्मणिप्रकल्पितं॥वासनाप्रकल्पिताऽमूर्तमूर्तानिप्रकल्पितानीतियोजना हियस्मादविद्ययाध्यस्तमात्मनि सप्रपंचत्वं तस्मान्नेतिनेतीतिविप्सयातत्सर्वमात्मनोबहिरपोह्यात्मविशेषणतारूपंबाधित्वाकेबलंदृशिश्चिन्मात्रएवावशेषितः सत्यस्यसत्यमितिश्रुत्येतियोजना ॥ यदाप्रकल्पिताइतितिसर्गांतपाठस्तदैवंयोजना ॥ अविद्ययामूढदृष्टिभिरात्मनिप्रत्यग्रूपेप्रकल्पिताःआरोपिताः कर्मवासनाअमूर्तमूर्तानिचभूतानि दृशिस्वरूपस्यप्रत्यक्स्वरूपस्यब्रह्मणोबहिर्नेतिनेतीत्यपोह्यदृशिरेवावशेषितोनिषेधावधिभूतः श्रुत्याहियस्मात्तस्मान्नास्त्यात्मनिदोषसंसर्गइति ॥ ४८ ॥ ॥छ॥

**प्रबोधरूपं मनसोर्थयोगजं स्मृतौ च सुप्तस्य च दृश्यतेर्थवत् ॥ तथैव देहप्रतिमानतः पृथक् दृशेः शरीरं च मनश्च दृश्यतः ॥ ४९ ॥ ॥**

स्थूलसूक्ष्मप्रपंचस्यश्रुत्याबाधमुक्त्वादृश्यत्वादितियुक्त्यापि बाधमाह ॥ प्रबोधेति ॥ अर्थयोगाद्विषयसंबंधाज्जातंमनसःप्रबोधरूपंविषयाकारवृत्तिरूपंयत्तत्स्मृतौस्मृत्यवस्थायांसुप्तस्यपुंसःस्वप्नावस्थायांचार्थवदर्थाकारमेवदृश्यतेतद्यथास्वप्नस्मृत्यो

र्थाभावेप्यर्थाकारंदृश्यमानमात्मनःपृथगेवनात्मविशेषणंतद्दृश्यत्वात्तथैवदृश्यतोदृश्यत्वहेतोः शरीरंमनश्चदेहप्रातिमानतोदेहप्रतिमानंचतसेःसार्वविभक्तिकत्वांगीकारात्प्रथमार्थःसइहगृह्यतेदेहद्वयवासनारूपंचदृशेरात्मनःपृथक्नदृशिविशेषणमितियोजना ॥ अतआत्मन्येवदृश्यस्यात्मानिनिषेधान्मिथ्यात्वंशुक्तिरूप्यादिवत्सिद्धमितिभावः ॥ ४९ ॥ ॥ ६८ ॥

**स्वभावशुद्धे गगने घनादिकेमलेऽपयाते सति चाविशेषता ॥यथाच तद्वच्छ्रुतिवारितद्वयेसदाविशेषोगगनोपमेदृशौ ॥५०॥ ॥**

ननुश्रुत्यायद्यध्यस्तनिषेधेनात्माप्रतिपाद्यतेतदानिवृत्तसंसारत्वविशेषयोगाद्विक्रियावत्त्वेनानित्यत्वादिदोषप्रसंगइतिचेन्नेत्याह॥स्वभावेति॥यथास्वभावशुद्धेशुद्धस्वभावेगगनेअधिष्ठानेघनादिकेमलेसातितस्मिन्नपयातेवाऽविशेषतानविशेषःकश्चिदस्ति ॥ अविक्रियमेवसदागगनमित्यर्थः ॥ तद्वद्दृशावात्मन्यधिष्ठानेगगनोपमेस्वभावशुद्धेश्रुत्यावारितंबाधितंद्वयंयस्मिंस्तस्मिन्सदैवाविशेषःकूटस्थतेतियोजनातथाचसंसारनिवृत्तेर्मिथ्यार्थप्रातियोगिकायाअधिष्ठानदृगात्मव्यतिरेकेणानिरूणान्नकोपिविशेषइतिभावः ॥ ५० ॥ इतिस्वप्नस्मृतिप्रकरणंचतुर्दशंविवृतं ॥१॥

**नान्यदन्यद्भवेद्यस्मान्नान्यत्किंचिद्विचिंतयेत् ॥ अन्यस्यान्यत्वभा**

वे हि नाशस्तस्य ध्रुवो भवेत् ॥ १ ॥

ननुस्वभावशुद्ध आत्मातथासतिसाधनवैयर्थ्यात्किंतुसंसारिस्वभावएवसन्ज्ञानध्यानादिसाधनानुष्ठानेनस्वभावशुद्धब्रह्मस्वरूपोभविष्यतीतिकेचिदेकदेशीयाःप्रतिपेदिरेतन्नश्रद्धेयंमुमुक्षुभिस्तस्यश्रुतियुक्तिबाधितत्वादित्याह ॥ नान्यादिति॥जीवब्रह्मणोरत्यंतंभेदइष्यतेकिंवाभेदाभेदौ नांत्यौविरुद्धस्वभावतया ब्रह्माहमित्येकरूपध्यानज्ञानयोरसंभवात्तदसंभवेचासंसारिब्रह्मभावफलानिष्पत्तेरितिमनसिनिधायाद्येदोषमाह ॥नान्यदन्यद्भवेद्यस्मादिति यस्मादन्यज्जीवरूपंस्थितंसदन्यद्ब्रह्मनभवेत्तद्रूपस्थितिविरोधात्तथातदेवब्रह्मणोन्यज्जीवरूपंवस्तुनष्टंसदन्यद्ब्रह्मनभवेन्नष्टत्वादेवतस्यब्रह्मभावंप्रापुरभावादितियोजना ॥ ब्रह्मैवसन्ब्रह्माप्येतीतिश्रुतिविरोधः स्फुटएवेतिनात्रोदाहृतःयस्मादेवंश्रुतियुक्तिविरुद्धमिदंमतंतस्मात्किंचिदीषन्मात्रमप्यन्यद्ब्रह्मेतिनाविचिंतयेन्मुमुक्षुरितिशेषः ॥ किंत्वहमेवब्रह्मब्रह्मैवाहमितिभेदोपमर्देनैकरूपमेवात्मवस्तुचिंतयेदित्यर्थः ॥ नन्वन्यस्याप्यन्यात्मतादृष्टासाधनविशेषसाध्या यथौषधविशेषयोगात्ताम्रादेरपिसुवर्णात्मतातद्वदिहापिस्यादित्याशंक्याह ॥ अन्यस्येति ॥ जीवस्यस्वविरुद्धस्वभावस्यान्यब्रह्मण्येकीभावेतप्तायोगोलकप्रविष्टोदकबिंदुवत्तस्यनाशोध्रुवोभवेत् ॥ तथाचनब्रह्मभावःपुरुषार्थः ॥ किंत्वनर्थार्थःस्यादित्यर्थः ॥ दृष्टांतोसंप्रतिपन्नोवस्तुरूपाभिभावकनील्यादिवत्रसविशेषस्यताम्ररूपाभिभावकमात्रत्वात्कालांतरेसुवर्णाकारतापगमदर्शनाच्चताम्रादेस्ततश्चभ्रममात्रंतदित्यभिप्रायः ॥ १ ॥

स्मरतो दृश्यते दृष्टं पटे चित्रमिवार्पि

**तं ॥ यत्र येन च तौ ज्ञेयौ सत्त्व क्षेत्रज्ञ संज्ञकौ ॥ २ ॥ ॥ ॥**

ननुयद्येवमन्यन्नध्येयंस्वात्मनिचध्यानंनसंभवत्येकस्मिन् ध्यातृध्येयभावायोगात्कथंतर्हिनिदिध्यासनविधिरितिचेदन्यथै वोपपत्तेर्नतदर्थंभेदआस्थेयइत्याह ॥ स्मरतइति ॥ दृष्टंनील पितादिस्मरतःपुंसोयत्रांतःकरणेतद्वासनारूपंपटेर्पितांचित्रमिव दृश्यते येनचचैतन्यात्मनादृश्यतेउपलभ्यते तौसत्वक्षेत्रज्ञसं ज्ञकौ यत्रदृश्यतेतत्सत्त्वंयेनदृश्यतेसक्षेत्रज्ञइत्यर्थः ॥ तथाचा त्मानिदिध्यासितव्यइतिविधिनानैरंतर्येणत्वंपदार्थविवेकसंपाद नमेवकर्तव्यतयोच्यते विविक्तत्वमर्थस्यैवब्रह्मत्वादहंब्रह्मास्मी त्यपरोक्षानुभवसंभवात्संसारनिवृत्तिफलसिद्धिः अन्यभावना यांतुप्रागुक्तन्यायेनान्यस्यान्यात्मताऽयोगात्संसारानिवृत्तेर्नि ष्फलोविधिःस्यादितिभावः ॥ २ ॥

**फलांतं चानुभूतं यद्युतं कर्त्रादि कारकैः ॥ स्मर्यमाणं हि कर्मस्थं पूर्वं कर्मैव तच्चितः ॥ ३ ॥ ॥**

अंतःकरणस्याप्रत्यक्षत्वात्कथंस्मृत्यवस्थायांतस्मिन्नीलपी ताद्युपलंभइत्यतआह ॥ फलांतमिति ॥ फलांतंसुखादिफला वसानंकर्त्रादिकारकैर्युतंयद्वैतम्पूर्वमनुभूतन्तदिदानींस्मर्यमाणं कर्मस्थंदृश्यनिष्ठंदृश्यते नद्रष्टृनिष्ठं हियस्मात्तस्मात्पूर्वमपितत्स्म र्यमाणस्याधिकरणमंतःकरणंचितआत्मनः कर्मैवदृश्यमेवेत्य र्थः ॥ अयंभावः॥ पूर्वानुभूतविषयाकाराद्धिवृत्तिरंतःकरणपरिणा

मात्मिकास्मृतिरित्युच्यते तस्यांहिविषयोभासमानःसाश्रयो भासते नहितदासाक्षिणानुभूयमानस्यविषयस्यबहिराश्रयेऽव स्थानमस्ति तथाचेदंस्मरामीतिपरामर्शयोग्यतयादृश्यस्थतयानुभवस्यावश्यंभावात्तदाचित्तमेवस्मर्यमाणाधिकरणतयादृश्यतेइतिसिद्धमंतःकरणस्यसाक्षिप्रत्यक्षत्वमिति ॥ ३ ॥

द्रष्टुश्चान्यद्भवेदृश्यंदृश्यत्वात्घटव
त्सदा ॥ दृश्याद्द्रष्टासजातीयो न
धीवत्साक्षितान्यथा ॥ ४ ॥ ॥

आत्मैवद्रष्टादृश्यंचेतिभाट्टामेनिरेऽतःस्वगतमेववासनारूपमात्मापश्यतीतीदंस्मरामीत्यनुभवस्यान्यथासिद्धत्वान्नान्तःकरणस्यसाक्षिप्रत्यक्षतेत्याशंक्याहद्रष्टुश्चेति ॥ विमतंदृश्यंद्रष्टुरत्यंतंभिन्नंदृश्यत्वाद्धटवदित्युक्तेद्रष्टृदृश्ययोर्भेदेपिपरिणामत्वेनसाजात्यसंभवाद्द्रष्टुःसजातीयमेतद्दृश्यमित्याशंक्याह दृश्यादिति द्रष्टासदैवदृश्यासजातीयोदृश्यांशस्याचेतनत्वादात्मत्वानुपपत्तेरित्यर्थः ॥ विपक्षेदोषमाह ॥ नधीवदिति ॥ अन्यथा द्रष्टृदृश्ययोरसजातीयत्वानंगीकारेद्रष्टुःपरिणामित्वाद्धीवत्साक्षिताआत्मनोनस्यादित्यर्थः ॥ ४ ॥

स्वात्मबुद्धिमपेक्ष्यासौ विधीनां स्या
त्प्रयोजकः ॥ जात्यादिः शववत्तेन
तद्वानात्मतान्यथा ॥ ५ ॥ ॥

ननुभवत्येवात्मासाक्षीतस्यब्राह्मण्यादिजातिमत्तयासविशेष

त्वात्कर्माधिकारित्वेनपरिणामित्वोपपत्तेरित्याशंक्याह ॥ स्वा त्मेति ॥ असौजात्यादिर्ब्राह्मणत्वादिआदिशब्दाद्वयोवस्था दिग्गृह्यते ॥ स्वात्मबुद्धिंस्वस्मिन्नात्मीयाभिमानलक्षणांमिथ्या दृष्टिमपेक्ष्यविधीनांप्रयोजकः प्रवर्तकःस्यान्नान्यथायथाशवउ त्क्रांतप्राणोदेहोममभाताममपितावेत्यध्यासानुसारेणसंस्कारप्र योजकोदृश्यतेतदभावेनदृश्यतइतियोजना तेनहेतुनातद्वच्छव वदेवजात्यादिरात्मधर्मोनभवतीत्यर्थः ॥अन्यथाजात्यादिमत्वे त्वात्मनोघटादिवदनात्मताप्रसज्येतेतियोजनीयं तस्मात्साक्ष्ये वात्मानकर्माधिकारितयापरिणामीतिभावः ॥ ५ ॥

न प्रियाप्रियइत्युक्तेर्नादेहत्वं क्रिया फलं ॥ देहयोगः क्रियाहेतुस्तस्मा द्विद्वान् क्रियास्त्यजेत्॥ ६ ॥ ॥

ननुनाध्यासनिबंधनंकर्तृत्वंविदुषोपिमोक्षायक्रियानुष्ठानादि तिचेन्नेत्याह ॥ नप्रियेतिअदेहत्वमशरीरत्वंहिमोक्षस्तत्रक्रियाफ लंतुसुखदुःखेप्रसिद्धेतेतुनाशरीरस्यदृष्टेश्रुतेवा ॥ अशरीरंवाव संतंनप्रियाप्रियेस्पृशतइत्युक्तेःश्रुत्यैवमुक्तत्वादित्यर्थः ॥ क्रि याहेतुर्यस्यसःक्रियाहेतुर्देहयोगःक्रिययादेहसंबंधएवसाध्योन मोक्षइत्यर्थः ॥ यस्मादेवंतस्माद्विद्वान्नकर्मसाध्यामुक्तिःकिंतु ज्ञानैकसाध्येतिजानन्क्रियाः सर्वाणिसाहंकाराणिकर्माणित्य जेत्सन्यस्यश्रवणादिनिष्ठोभवेदित्यर्थः ॥ ६ ॥

कर्मस्वात्मा स्वतंत्रश्चेन्निवृत्तौ च तथेष्यतां ॥ अदेहत्वे फलेऽकार्ये

ज्ञाते कुर्यात्कथं क्रियाः ॥ ७ ॥

ननुसर्वेषांकर्मणामात्मकर्तव्यत्वप्रतीतेर्नविद्वान्क्रियास्त्य क्तुंशक्नुयादितिचेन्नेत्याहकर्मास्विति ॥ आत्माचेत्कर्मसुस्वतं त्रःकर्त्तातर्हिनिवृत्तंचकर्मत्यागरूपंचतथेष्यतां ॥ यथारागादि मान्प्रवृत्तिलक्षणेकर्मणिस्वतंत्रः तथाविशुद्धसत्त्वोवीतरागस्त त्यागेपिस्वतंत्रइष्यतांकर्मसाध्यफलाभिलाषाभावेकर्मत्याग स्यार्थप्राप्तत्वादित्यर्थः ॥ एतदेवस्पष्टयत्यदेहत्वइति ॥ देहसं बंधशून्येफलेमोक्षलक्षणेअकार्येकेनापिकर्मणाऽसाध्येशास्त्रा दिनाज्ञातेसतिक्रियाःकथंकुर्यान्नकुर्यादेवताभिःप्रयोजनाभावा दित्यर्थः ॥ ७ ॥

जात्यादीन्संपरित्यज्य निमित्तं क र्मणां बुधः ॥ कर्महेतुविरुद्धं यत्स्व रूपं शास्त्रतः स्मरेत् ॥ ८ ॥ ॥

किंक्रियापरित्यागमात्रेणाकार्यंविदेहकैवल्यंप्राप्यतेनेत्याह ॥ जात्यादीनिति ॥ बुधःपंडितोबुद्धिमान्कर्मणांनिमित्तभूतान् जात्यादीन्संपरित्यज्यजात्याद्यभिमानंपरित्यज्ययत्स्वरूपंकर्म हेतुविरुद्धंकर्मनिमित्तोपमर्दकंशुद्धात्मस्वरूपंतच्छास्त्रतोयथा शास्त्रोक्तंतथास्मरेदनुचिंतयेदित्यर्थः ॥ ८ ॥

आत्मैकः सर्वभूतेषुतानितस्मिंश्च खे यथा ॥ पर्यगाद्व्योमवत्सर्वं शुक्रं दीप्तिमदिष्यते ॥ ९ ॥ ॥ ॥

शास्त्रमेवोदाहरन्स्मर्तव्यमात्मरूपंविशदयत्यात्मैकइत्या दिना यस्तुसर्वाणिभूतान्यात्मन्येवानुपश्यति ॥सर्वभूतेषुचात्मा नंततोनविजुगुप्सतइतिमंत्रार्थःपूर्वार्द्धेनोच्यते ॥ सपर्यगाच्छुक्र मकायमव्रणमस्नाविरंशुद्धमपापविद्ध मितिमंत्रार्थंसार्धश्लोकेना ह ॥ पर्यगादिति ॥ एषाक्षरयोजनासर्वभूतेष्वहमेकएवात्मा नचेतनभेदोस्तितर्हिकिंभूतान्यधिकरणमात्मनोनेत्याह ॥ ता नीति ॥ तानिचभूतानितस्मिन्नात्मन्येवाध्यस्तानिनततःपृ थक्वर्ततेतथाचस्वाध्यस्तसकलविकारानुस्यूतसत्तास्फूर्तिरूपो विकारोपमर्देनानुसंधेयइत्यर्थः ॥ खेयथेति ॥ अंतःसुषिरूपे णबहिरवकाशरूपेणवर्तमानेआकाशेयथाभूतसंबंधस्तथेत्यर्थः ॥ पर्यगादात्माव्योमवत्स्वसत्तामात्रेणपरिसमंतादगाद्गतवान्स र्वमशेषमात्मनानकिंचिदव्याप्तमस्तीत्यर्थः ॥ तथाचब्राह्मणं ॥ नैनेनकिंचनानावृतंनैनेनकिंचनासंवृतमिति ॥ शुक्रमितिमं त्रपदंतस्यव्याख्यानंदीप्तिमदितिप्रकाशस्वभावंशुद्धंतदात्मस्व रूपमिष्यतइत्यर्थः ॥ ९ ॥

**व्रणस्नाय्वोरभावेन स्थूलं देहं नि वारयेत् ॥ शुद्धापापतयालेपं लिं गं चाकायमित्युत ॥ १० ॥**

अव्रणमस्नाविरमितिपदयोरर्थमाह ॥ व्रणेति ॥ क्षत शिराजालनिरासेनस्थूलदेहात्मत्वमात्मनोपोह्यमित्यर्थः शुद्ध मपापविद्धमित्यनयोरर्थमाह॥शुद्धेति ॥ शुद्धंरागादिदोषहीनम तएवापापंपुण्यपापहीनंतस्मात्कारणाभावादेवसुखदुःखादित दनुभवसंस्कारलेपहीनमित्यर्थः ॥ अकायमितिमंत्रपदेनसू

क्ष्मदेहात्मतानिरसनीयेत्याह ॥ लिंगमिति ॥ निवारयेदितिस र्वत्रानुषंगः ॥ स्थूलसूक्ष्मदेहतत्कार्यतद्वासनाभ्योऽव्यावृत्तःस मएकोऽपरिछिन्नआत्मेतिसदाचिंतयेदित्यर्थः ॥ १० ॥

वासुदेवो यथाश्वत्थे स्वदेहे चा
ब्रवीत्समं ॥ तद्वद्वेत्ति य आत्मा
नं समं स ब्रह्मवित्तमः ॥ ११ ॥

यएवंयथोक्तमात्मानंवेत्तिसब्रह्मविदामुत्तमइत्याह ॥ वासु देवइति ॥ वासुदेवोभगवान्कृष्णोश्वत्थेनिकृष्टोपाधौस्वदेहे चाविर्भूतविज्ञानैश्वर्यशक्तिमदात्माधिष्ठितेउत्कृष्टोपाधौच यथा सममाविशिष्टमात्मानमब्रवीदश्वत्थःसर्ववृक्षाणामितिवृष्णीनां वासुदेवोस्मीतिचतद्वद्यआत्मानंसममुपाधिकृतवैषम्यापोहेनै करूपंवेत्तिंसोतिशयेनब्रह्मविदित्यर्थः ॥ ११ ॥

यथा ह्यन्यशरीरेषु ममाहंता न चे
ष्यते ॥ अस्मिंश्चापि तथा देहे धी
साक्षित्वाविशेषतः ॥ १२ ॥

वासुदेवस्ययुक्तंसर्वत्रसमात्मदर्शनंतस्योपाधिषुममाहंकार रहितत्वान्नतुमुमुक्षोस्तस्यतद्वैपरीत्यादित्यतआह ॥ यथाही ति ॥ अन्यशरीरेषुबहिर्दृश्यमानेषुदेहेषुयथाममाहंताममाहमो भावोनचेष्यतेतस्यदृश्यत्वेनानात्मत्वनिश्चयात्तथास्मिंश्चापि स्वत्वाभिमतेदेहेममाहंतानेष्यतेकुतःधीसाक्षित्वाविशेषतः ॥ उभयत्रदेहाकारपरिणतबुद्धिसाक्षित्वाविशेषादित्यर्थः ॥ तथा

चात्मतत्त्वालोचनायामहंकारादेरनवसरत्वाद्वासुदेववत्समात्म दर्शनंयुक्तमेवेतिभावः ॥ १२ ॥

**रूपसंस्कारतुल्याधीरागद्वेषौ भयं च यत् ॥ गृह्यते धीश्रयं तस्माज्ज्ञाता शुद्धोऽभयः सदा ॥ १३ ॥**

रागद्वेषभयोपलंभान्नास्तिमुमुक्षोरभिमानाभावइतिचेन्नेत्याह ॥ रूपेति॥नीलादिरूपसंस्कारेणतुल्यःसमानआधिःआश्रयोययोस्तौरागद्वेषौरूपसंस्कारतुल्याधीयच्चभयंतदपितत्समानाश्रयमिति ॥ संस्कारोनामस्वाश्रयस्यप्रागुद्भूतावस्थासमानावस्थांतरापादकोतींद्रियोधर्मःततश्चायमर्थःरूपाद्याकारपरिणतांतःकरणेहिरूपादिसंस्कारः पुनरपिरूपाद्याकारपरिणामहेतुर्विद्यतेतत्रैवचरागद्वेषौरूपादिदर्शननिमित्तौतान्निमित्तकंचभयंतत्रैवकामः संकल्पोविचिकित्साश्रद्धाश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वंमनएवेतिश्रुतेः ॥ यस्माद्धीश्रयंबुद्धिसंश्रयमेवरागद्वेषौभयंचेतित्रयमात्मनागृह्यतेनात्मसंश्रयंतस्माज्ज्ञाताशुद्धोरागादिरहितोऽभयश्चसदेति ॥ ॥ १३ ॥ ॥ ॥

**यन्मनास्तन्मयोन्यत्वे नात्मत्वाप्तौ क्रियात्मनि ॥ आत्मत्वे चानपेक्षत्वात्सापेक्षं हि न तत्स्वयं॥१४**

ननुसदाशुद्धआत्माकिंतुयथाक्रतुरस्मिंल्लोकेपुरुषोभवतितथेतःप्रेत्यभवतिइतिश्रुतेःयंयंवापिस्मरन्भावंत्यजत्यंतेकलेवरं ॥

तंतमेवैतिकौंतेयसदातद्भावभावितइतिस्मृतेश्चपूर्वमशुद्धोपिपुरुषोब्रह्मभावनयाशुद्धःपश्चाद्ब्रह्मभविष्यतीत्याशंक्याह ॥ यन्मनाइति ॥ यस्मिन्ध्येयेदेवादौमनोयस्यसयन्मनाध्यायीपुरुषःसतन्मयोध्येयदेवादिमयोभवतिध्यातृध्येययोरन्यत्वेसतिध्यानक्रियायास्तत्रार्थवत्वसंभवादित्यर्थः॥नपुनरात्मत्वाप्तौआत्मस्वरूपावस्थानप्राप्त्यर्थमात्मनिक्रियाध्यानादिरूपापेक्ष्यतइत्यर्थः॥तत्रहेतुः आत्मत्वेतिमोक्षरूपस्यब्रह्मणआत्मत्वेसतितस्यचतुर्विधक्रियाफलविलक्षणत्वात्क्रियायाअनपेक्षत्वादित्यर्थःमोहमात्रव्यवधानाच्चात्रनक्रियापेक्षेतिचकारार्थः॥विपक्षेदोषमाह॥सापेक्षंहीति॥यदिक्रियासापेक्षंकैवल्यंभवेत्तर्हितत्स्वयमात्मरूपंनस्यात्॥क्रियासाध्यस्यानात्मत्वादनित्यत्वाच्चेत्यर्थः॥तस्मात्सदाशुद्धएवात्मातस्मिन्नशुध्याभासोमिथ्याध्यासइतिभावः ॥ १४ ॥

खमिवैकरसा ज्ञप्तिरविभक्ताजराऽ
मला ॥ चक्षुराद्युपधानात्सा विप
रीता विभाव्यते ॥ १५ ॥ ॥

विभागादिमलाभावाच्चिदेकरसत्वाच्चात्मासदाशुद्धएवाभ्युपेयइत्याह ॥ खमिवेति ॥ यद्येवंस्वभावैषाज्ञप्तिस्तर्हितस्यांजन्मविनाशभेदप्रतिभासाःकथमित्याशंक्यचक्षुराद्युपाधिसंसर्गदोषादित्याह ॥ चक्षुरादीति ॥ १५ ॥ ॥

दृश्यत्वादहमित्येषो नात्मधर्मो घ
टादिवत् ॥ तथान्ये प्रत्यया ज्ञेया
दोषाश्चात्माऽमलो ह्यतः ॥ १६ ॥

आत्मनःप्रतिपादितममलत्वंविशदयति ॥ दृश्यत्वादिति ॥ अहमित्येषोहमितिप्रत्ययोऽनात्मधर्मोनात्मनिष्ठोदृश्यत्वाद्धटादिवत्तथान्येपिप्रत्ययाःपरिणामादोषाःदोषरूपारागद्वेषादयोऽनात्मधर्माज्ञेयाहियस्मादतआत्माऽमलोहिनिर्मलएवेत्यर्थः॥१६॥

**सर्वप्रत्ययसाक्षित्वादविकारी च सर्वगः ॥ विक्रियेत यदि द्रष्टा बुध्यादीवाल्पविद्भवेत् ॥१७॥**

अहंकारादीनामात्मधर्मत्वाभावेपिनात्मनोविशुद्धिःसिध्यति विकारित्वात्परिछिन्नत्वाच्चेत्याशंक्याह ॥ सर्वप्रत्येति ॥ विपक्षेदोषमाह ॥ विक्रियेतेति ॥ विक्रियेतपरिछिन्नोवायद्यात्मा तदाल्पविद्विषयमात्रावभासकोभवेद्बुध्यादिवद्बुद्धिचित्तमनोवदित्यक्षरार्थः बुध्यादिशब्देनतद्गताभासोलक्ष्यतेअन्यथास्वरूपतो चेतनत्वाद्वेदनयोगवत्वेनाल्पवित्ववचनमनुपपन्नंस्यात्तत्रबुद्धेः साभासायाविषयावभासनमात्रेउपक्षीणपरिणामायायथापूर्वापरानुभूतितदवस्थातत्प्रचारानुसंधानाभावोविक्रियावत्वात्तथा द्रष्टुरपिविक्रियावत्वात्तथाद्रष्टुरपिविक्रियावत्वेनुसंधानाभावप्रसंगात्सर्वव्यवहारविलोपप्रसंगइतिभावः ॥१७॥

**न दृष्टिर्लुप्यते द्रष्टुश्चक्षुरादेर्यथैवतत् ॥ नहि द्रष्टुरितिह्युक्तं तस्माद्द्रष्टा सदैकदृक् ॥१८॥ ॥॥ ॥छ॥**

द्रष्टुरात्मनोपिबुद्धिवदल्पवित्त्वमेवज्ञानस्यसाधनाधीनस्यो

त्पत्तिविनाशवत्वादितिचेन्नेत्याह ॥ नदृष्टिरिति ॥ यथैवचक्षु रादिद्वारकदृष्टिर्लुप्यतेपरिणामित्वान्नथाद्रष्टुरात्मनोदृष्टिर्लुप्यते अपरिणाम्यात्मस्वरूपत्वात्तस्याइत्यर्थः ॥ तद्दृष्टेर्नित्यत्वंनहिद्र ष्टुर्दृष्टेर्विपरिलोपोविद्यतेऽविनाशित्वादितिहिश्रुत्योक्तमित्यर्थः॥ यस्मात्प्रमाणसिद्धमिदंतस्मादित्यर्थः ॥ सदेकदृक्एकरूपदृष्टि स्वभावइत्यर्थः ॥ सदैकभुगितिपाठेभुंक्तेपश्यतीतिभुक्साक्षी त्यर्थः ॥ १८ ॥

**संघातो वास्मि भूतानां करणानां तथैव च॥व्यस्तं वान्यतमो वास्मि को वास्मीति विचारयेत्॥१९॥**

यस्मादेवमात्माशुद्धस्वभावोपिसन्नुपाधिसंबंधादन्यथाप्रती यतेतस्मादात्मानंब्रह्मत्वेनप्रातिपत्तुंपदार्थविवेकं कुर्यान्मुमुक्षुरि त्याह ॥ संघातोवेति ॥ अयमर्थः ॥ अहमितितावदात्माव भासतेसभासमानोहंमनुष्यःकृशःस्थूलइत्यादौ भूतसंघातात्म कदेहरूपःस्फुरतितदिदमुच्यते संघातोवास्मिभूतानामिति ॥ तथाहंद्रष्टाश्रोतारसयिताकाणोबधिरइतिकरणेष्वप्यहमुल्लेखो दृश्यतेअंतःकरणसंघातोवाहमितितत्रापिपृथक्पृथगेवाहंकार दर्शनाद्व्यस्तमेकैकंचेंद्रियमहमस्मि ॥ अथवैकस्मिन्देहेऽनेका त्मत्वकदाचिद्देमत्यसंभवाद्भोगव्यवस्थानुपपत्तेरन्यतमोवास्मीं द्रियसंघातादन्योवातदधिष्ठातास्मियद्यन्यतमस्तर्हिसकोवांतः करणप्राणाद्यन्यतमःकिंवातत्साक्षीतद्विलक्षणस्वभावइतिवि चारयेत् ॥ १९ ॥

**व्यस्तं नाहं समस्तं वा भूतमिंद्रिय**

मेव वा॥ज्ञेयत्वात्करणत्वाच्च ज्ञाता न्योऽस्माद्धटादिवत् ॥ २० ॥ ॥

विचारफलंपदार्थविवेकंकथयति ॥ व्यस्तंनाहमिति ॥ भूतंचेंद्रियंवासमस्तंव्यस्तंवानाहमस्मिज्ञेयत्वादचेतनत्वात् घटादिवत्करणत्वात्कुठारादिवदितियथायोगंयोज्यं ॥ तस्मात्ज्ञाताचेतनोन्योंतःकरणप्राणादिभ्योप्यचेतनेभ्यइतिद्रष्टृदृश्यान्वयव्यतिरेकालोचनेनविवेकःकार्यइत्यर्थः ॥ २० ॥

आत्माग्नेरिंधना बुद्धिरविद्याकामकर्मभिः ॥ दीपिता प्रज्वलत्येषा द्वारैः श्रोत्रादिभिः सदा ॥ २१ ॥

इदानींसाक्षिसाक्ष्यान्वयव्यतिरेकालोचनेनावस्थात्रयविवेकद्वारातत्साक्षिणस्तुरीयस्याधिगमप्रकारमाह ॥ आत्माग्नेरित्यादिनातत्रैवंसतीत्यतःप्राक्तनैःश्लोकैः ॥ आत्मैवाग्निस्तस्येंधनाइध्यतेप्रकाश्यतेव्यवहारयोग्यःक्रियतेअनयेतींधनाबुद्धिरात्मचैतन्यस्याविशेषाकारतयाभिव्यक्तिकारणभूतेत्यर्थः ॥ साविद्याकामकर्मभिर्दीपिताउत्तेजितावायुनेवाग्निस्थमिंधनमाध्मातासतीप्रज्वलतिचैतन्यग्रस्ततयाप्रकाशमानाजायतेऽभिव्यक्ताग्निनादह्यमानमिंधनमिवेत्यर्थः ॥ गवाक्षेभ्योनिःसृतदीर्घप्रभान्यायेनश्रोत्रादिभिर्द्वारैर्निःसृतासतीसदाप्रज्वलत्येषेतियोजना ॥ अत्राग्नींधनादिरूपकनिर्देशप्रयोजनंव्यवहारकालेविषयग्रहणस्यहोमत्वभावनातत्फलंचविषयेसक्तिनिवृत्तिरितिद्रष्टव्यं ॥ २१ ॥ ॥

दक्षिणाक्षिप्रधानेषु यदा बुद्धिर्वि
चेष्टते ॥ विषयैर्हविषा दीप्ता आ
त्माग्निः स्थूलभुक्तदा ॥ २२ ॥

एवंविधबुध्यवस्थाजागरणंतस्यामात्मास्थूलपदार्थभुग्भव
तीत्याह ॥ दक्षिणाक्षीति ॥ दक्षिणस्यांगस्यपुरुषेश्रेष्ठत्वप्र
सिद्धेरिदंविशेषणंदक्षिणमक्षिप्रधानंमुख्यंयेषामिंद्रियाणांतेषुबु
द्धिर्यदाविचेष्टतेव्यापारवतीभवतिहविःस्थानीयैर्विषयैर्दीप्ताविं
षयंव्याप्यतदाकारेणदीप्यमानासतीतियावत्तदात्माग्निः स्थूल
भुक्स्थूलविषयाणांभोक्ताजागर्तीत्युच्यतेइत्यर्थः ॥ २२ ॥

हूयंते तु हवींषीति रूपादिग्रहणे
स्मरन् ॥ अरागद्वेष आत्माग्नौ जा
ग्रद्दोषैर्नलिप्यते ॥ २३ ॥ ॥

रूपकनिरूपणफलंस्पष्टयति ॥ हूयंतइति ॥ रूपादिग्रह
णेविषयग्रहणसमयेअरागद्वेषःशोभनाशोभनाध्यासेनरागद्वेषा
वकुर्वन् हवींषीमान्यात्माऽग्नौहूयंतइतिस्मरन्ध्यायन्नात्माजाग्र
द्दोषैर्विषयोपलब्धिनिबंधनैःपुण्यापुण्यलक्षणैर्नलिप्यतेनसं
श्लिष्यतइत्यर्थः ॥ २३ ॥

मानसे तु गृहे व्यक्तः सोविद्याकर्म
वासनां ॥ पश्यंस्तैजस आत्मोक्तः
स्वयंज्योतिः प्रकाशिता ॥ २४ ॥

इदानींस्वप्नावस्थामाह ॥ मानसेत्विति ॥ मनसःपरिणा मोपाधिर्मानसंगृहंसःतत्राभिव्यक्तआत्माऽविद्याप्रयुक्तकर्मोद्भ द्भावासनाविद्याकर्मवासनेत्युच्यते ॥ तांविषयाकारांपश्यंस्तैज सइत्युक्तोविद्वद्भिःतेजसिवासनामये विषयेऽभिव्यक्तइतिव्युत्प त्तेरित्यर्थः ॥ तत्रभासमानकर्मसुखदुःखादीनांमनोमात्रत्वात्त स्यचदृश्यत्वेनैवतदावस्थानादात्मनः उपाध्यंतराभावेसतिबाह्य स्यचादित्यादिज्योतिषस्तदानीमुपरमादात्मैवस्वयंज्योतिः स न्प्रकाशितासाक्षीभवतीत्यर्थः ॥ तथाचश्रुतिःदृष्ट्वैवपुण्यंचपापं चेति ॥ अत्रायंपुरुषःस्वयंज्योतिर्भवतीति ॥ २४ ॥

**विषया वासना वापि चोद्यंते नैव कर्मभिः ॥ यदा बुद्धौ तदा ज्ञेयः प्राज्ञ आत्मा ह्यनन्यदृक् ॥ २५ ॥**

सुषुप्तिमाह ॥ विषयाइति ॥ यदाबुद्धावंतःकरणेविषयाःस्थू लाःवासनाश्चसूक्ष्माःस्वप्नदृश्याश्चकर्मभिर्नचोद्यंतेनोद्भूताः क्रि यंतेतदात्माप्राज्ञोज्ञेयस्तत्संज्ञकस्तदाभवतीत्यर्थः प्रज्ञातिशया त्तदाप्राज्ञइतिव्युत्पत्तिमभिप्रेत्यविशिनष्टि ॥ ' .नन्यदृगिति ॥ अन्यदात्मव्यतिरिक्तंविषयंवासनांवानपश्यतीत्यनन्यदृक्अप रिछिन्नप्रज्ञइत्यर्थः ॥ २५ ॥

**मनोबुद्धींद्रियाणां या अवस्थाः क र्मचोदिताः ॥ चैतन्येनैव भास्यंते रविणेव घटादयः ॥२६॥ ॥ ॥**

एवमवस्थात्रयंतदवस्थंचात्मानंद्रष्टृदृश्यभावेनविविच्येदा नींअभिमानिसहितावस्थात्रयसाक्षितयाविश्वादित्रयापेक्षया तुरीयंप्रत्यंचमात्मानंनित्यविज्ञप्तिस्वभावमुपलंभयति ॥ मनो बुद्धीति ॥ इंद्रियाणामवस्थाजागरणं ॥ मनोवस्थास्वप्नः ॥ बु ध्यवस्थाकारणावस्थासासुषुप्तिरितिविभागः॥स्पष्टमन्यत् ॥२६

तत्रैवं सति बुद्धीर्ज्ञ आत्मभासाव
भासयन् ॥ कर्त्ता तासां यदर्था
स्ता मूढैरेवाभिधीयते ॥ २७ ॥

ननुयद्यात्मानिर्विकारएवसाक्षीकथंतर्हिबुध्यादीनांकर्त्तो च्यतेतत्राह ॥ तत्रैवंसतीति ॥ तत्रतस्मिन्नात्मनिएवंसतिअव स्थात्रयेध्यस्तेसावस्थाःबुद्धीः आत्मभासास्वचैतन्याभासेना वभासयन्ज्ञआत्मातासांकर्तेत्ति[illegible]शास्त्राचार्योपदेशरहितैर भिधीयतेऽव्यपदिश्यते[illegible] ॥ना ॥ तथाऽव्यवहारप्रवृत्तौनि मित्तंसूचयन्बु[illegible]फलंस्पष्ट[illegible] ॥ यदर्थास्ताइतियस्यात्मनःसुख दुःखप्रतिभास[illegible]मयेस्ताभासयन्निति कर्मोद्भासितबुध्यवस्थानुग तःचिदाभासा[illegible]विवेकादात्मादर्शनकर्तेत्युच्यतेमूढैरित्यर्थः॥ २७

सर्वज्ञो[illegible]प्यत एव स्यात्स्वेन भासाव
भासयन् ॥ सर्वं सर्वक्रियाहेतोः
सर्वकृत्त्वं तथात्मनः ॥ २८ ॥

एवमज्ञानेतत्कार्येचप्रतिबिंबितस्यचिदात्मनोज्ञातृत्वमुपा धिनिबंधनंव्युत्पाद्यसर्वज्ञत्वंसर्वकर्तृत्वंचतस्यैवमायोपाधिमति

बिंबवशादिति॰व्युत्पादयति ॥ सर्वज्ञोपीति ॥ अतएवेत्युक्तमे
वविशदयति ॥ स्वेनेति ॥ स्वात्माश्रयविषयकमायाविवर्त्तंसर्वं
स्वचैतन्येनादित्यप्रकाशवदविकृतेनभासयन्सर्वज्ञउच्यतेनपु
नःसर्वविषयज्ञानकर्तृत्वेनेत्यर्थः ॥ तथातद्वन्मायानिबंधनमे
वात्मनःसर्वकृत्त्वंसर्वकर्तृत्वंतदेवाहसर्वक्रियाहेतोरिति ॥ सन्नि
धिसत्तामात्रेणभ्रामकवत्सर्वकारकप्रवृत्तिहेतुत्वादित्यर्थः ॥२८

सोपाधिश्चैवमात्मोक्तोनिरुपाख्यो
नुपाधिकः ॥ निष्कलो निर्गुणः
शुद्धस्तं मनो वाक्च नाप्नुतः ॥२९॥

तदेवमवस्थात्रयसाक्षितयाविविक्तशुद्धचिद्रूपस्यात्मनःका
र्यकारणात्मकमायोपाधिवशाज्ज्ञातृत्वकर्तृत्वसर्वज्ञत्वादि॰व्यव
हारास्पदत्वंनस्वभावतइत्युक्तमर्थमनूद्यकिंतत्स्वाभाविकंबिंब
तुल्यमात्मस्वरूपमित्यपेक्षायां तदाह ॥ सोपाधिश्चेति ॥ य
स्तुनिरूपाख्योविषयतयोल्लेखयोग्योनभवतिसोनुपाधिकः सर्व
॰व्यवहारातीतइत्यर्थः ॥ गुणावयवशून्यत्वाच्छुद्धःकूटस्थइत्य
र्थःनिरूपाख्यत्वमुक्तं॰व्यनक्तितमिति ॥ २९ ॥

चेतनोऽचेतनो वापि कर्ताऽकर्ता
गतोगतः ॥ बद्धो मुक्तस्तथा चै
कोऽनेकः शुद्धोऽन्यथेति वा॥३०॥

मनोवागगम्यत्वंसाधयति ॥ चेतनइति ॥ अयमर्थः ॥
अहमितिशब्दप्रत्ययोतावत्पराग्व्यावृत्ततयात्मानंप्रत्यंचमव

गाहेतेइत्यविवादंतौचेच्छुद्धमेवात्मानंगोचरयेतांतदाप्रत्यक्षोप
लब्धेघटादाविवविवादिनांविप्रतिपत्यभावएवस्यात् ॥ विमति
पद्यंतेतुतदेहेंद्रियमनोबुद्धीनामन्यतमोऽचेतनएवचेतनोवाना
त्मेतिवेदबाह्याः तदन्यश्चेतनइतिवेदवादिनस्तेष्वपिकेचित्कर्ते
तिकेचिदकर्तेतिगतोऽव्यापकोऽगतोऽव्यापकोऽणुपरिमाणोदेह
परिणामोवेतिकेचिद्बद्धोजीवोमुक्तोन्यईश्वरस्तथासर्वशरीरेष्वे
कोऽनेकोवाशुद्धोरागादिगुणरहितोऽन्यथातद्युक्तश्चेति ॥३०॥

अप्राप्यैव निवर्तंते वचोधीभिः
सहैव तु ॥ निर्गुणत्वात्क्रियाभावा
द्विशेषाणामभावतः ॥ ३१ ॥ ॥

अतोविप्रतिपत्तेरयथाभूतात्ममात्रगोचरत्वादसमर्थौशब्दप्र
त्ययौशुद्धात्मनीत्याह ॥ अप्राप्यैवेति ॥ कथमात्मप्राप्तिर्वाचां
धियामितिचेत्परमार्थतः प्रवृत्तिबीजाभावादित्याह ॥ निर्गुण
त्वादिति रूपादिगुणहीनत्वाद्बाह्येंद्रियद्वारकधीभिस्तावदात्मा
नप्राप्यतेमनसश्चबाह्येंद्रियद्वारोपलब्धविषयातिरेकेणस्वतंत्र
स्याविषयानिरूपणात्तदगोचरमात्मानंतत्रप्राप्नोतिक्रियाभावाद्वा
त्मनोगोचरत्वाभावः॥ नहिक्रियाहीनेऽनवच्छिन्नेवस्तुनिक्रियाव
दनुगतिमात्रेणापूर्वधर्मोपजनिःसंभवति घटादिनानुगतेगगनेत
ददर्शनात्तस्मान्मनःसंयोगजज्ञानासंभवान्नमनसापिप्राप्यआ
त्मेत्यर्थः॥तथाविशेषाणांगोधनरूपाणांबाह्यानांस्वगतानांवाजा
त्यादीनां प्रवृत्तिनिमित्तानामभावान्नशब्दोपिप्राप्नोत्यात्मानमि
त्यर्थः॥तथाचश्रुतिः॥ यतोवाचोनिवर्तंतेअप्राप्यमनसासहेति॥
नचक्षुषागृह्यतेनापिवाचानान्यैर्देवैस्तपसाकर्मणावेतिच ॥३१॥

व्यापकं सर्वतो व्योम मूर्त्तैः सर्वै
र्वियोजितं ॥ यथा तद्वदिहात्मानं
विद्याच्छुद्धं परं पदं ॥ ३२ ॥

अविषयस्यात्मनःकथंवेदांतवेदनीयत्वमित्याशंक्यलक्षणा वर्त्मनेत्यभिप्रेत्याह ॥ व्यापकमिति ॥ सर्वैःमूर्तैःसर्वतोवियो जितंपरिछेदप्रतिभासहेतूपाधिवर्जितंव्यापकंस्वरूपतोऽपरिछि न्नंचव्योमयथातद्वदेवशुद्धमवस्थात्रयोपाधिवियोजितमवस्था त्रयसाक्षितयालक्षितंशुद्धमात्मानमिहवेदांतसमयेपरंपदंपरमा त्मानंब्रह्मविंद्यादितियोजना ॥ ३२ ॥

दृष्टं हित्वा स्मृतिं तस्मिन् सर्वग्रश्च
तमस्त्यजेत् ॥ सर्वदृग्ज्योतिषा यु
क्तो दिनकृच्छार्वरं यथा ॥ ३३ ॥

एवमात्मतत्त्वेवधारितेपुनरवस्थात्रयाभिमानंनकुर्यादित्याह॥ दृष्टमिति ॥ दृष्टंजागरितंतद्धित्वाद्रष्टाश्रोतामंतेत्येवमेकैकक्रियो परक्तत्यात्माभिमानंत्यक्त्वेत्यर्थः ॥ दर्शनाद्यवस्थायामपिनिर्वि शेषमेवात्मानंमन्वीतेतिभावः ॥ तस्मिन्दृष्टेर्थेस्मृतिंस्वप्नंहित्वा संस्कारद्वारकत्वात्स्वप्नएवेहस्मृतिरुच्यतेअहंस्वप्नेदेवोभूवंव्या घ्रोवाभूवमितितदभिमानंहित्वेत्यर्थः ॥ दृश्यस्यसवासनस्यमन सोविकारोऽसौनात्मनइत्यसंगतामात्मनोनुसंदधीतेतिभावः ॥ तथातमःसुषुप्तिंत्यजेत्तमसोविशेषणंसर्वग्रइतिसर्वंग्रसतीतिस र्वग्रःसांतमिदंपदंसुषुप्तेरप्यवभासकतयाऽलुप्तप्रकाशस्वभावए

वात्मानतु मूढोऽज्ञानवान्वेतिमन्वीतेत्यर्थः ॥कोसाववस्थात्रयत्य
क्तेतितमाह ॥ सर्वदृगिति ॥ सर्वदृक्सर्वसाक्षीप्रत्यगात्माज्यो
तिषायुक्तोज्योतिषांज्योतिरित्युक्तेनब्रह्मणैकीभूतइत्यर्थः ॥ य
थादिनकृत्सविताशर्वर्यांभवंशार्वरंतमःस्वतेजसाग्रसित्वानिस्त
मस्कएवावतिष्ठते ॥ तथाऽवस्थाविकारहेत्वज्ञानंब्राह्मणज्योति
षाऽभिभूयाद्वयानंदस्वभावएवावतिष्ठतेत्यर्थः ॥ ३३ ॥

रूपस्मृत्यंधकारार्थाः प्रत्यया य
स्य गोचराः ॥ स एवात्मा समो
द्रष्टा सर्वभूतेषु सर्वगः ॥ ३४ ॥

उक्तमेवत्यागप्रकारंप्रकटयतिरूपस्मृतीति ॥ रूपस्मृत्यंध
काराजाग्रत्स्वप्नसुषुप्तयोऽर्थाविषयायेषांप्रत्ययानांतेतथोक्ताःते
यस्यसाक्षिणोगोचराःप्रतिभास्याःसएवात्मासर्वभूतेषुद्रष्टातथा
पिसमोनिर्विशेषोयतःसर्वगःपरिच्छेदकरहितइत्यर्थः ॥ ३४ ॥

आत्मबुद्धिमनश्चक्षुर्विषयालोकसं
गमात् ॥ विचित्रो जायते बुद्धेः
प्रत्ययोऽज्ञानलक्षणः ॥ ३५ ॥ ॥

यद्येवमुक्तस्वभावएवात्माकुतस्तस्मिन्विचित्रःसंसारप्रत्ययो
दयस्तत्राह ॥ आत्मबुद्धीति ॥ अज्ञानलक्षणोऽज्ञानोपाधिनिबं
धनइत्यर्थः ॥ ३५ ॥

विविच्यास्मात्स्वमात्मानं विद्या

च्छुद्धं परं पदं ॥ द्रष्टारं सर्वभूत
स्थं समं सर्वभयातिगं ॥ ३६ ॥

अविद्यातत्कार्योपाधीनामात्मनश्चाविवेकानुपलंभादेवसं
सारप्रतिभासइतिस्थितेमुमुक्षोःकर्तव्यमुपदिशति ॥ विविच्ये
ति ॥ अस्माद्बुध्यादिसंघाताद्विविच्यस्वमात्मानंविंद्यादितिसं
बंधःस्पष्टमन्यत् ॥ ३६ ॥

समस्तं सर्वगं शांतं विमलं व्योम
वत्स्थितं ॥ निष्कलं निष्क्रियं स
र्वं नित्यं द्वंद्वैर्विवर्जितं ॥ ३७ ॥

वेद्यमेवात्मरूपंपुनर्विशिनष्टिसमस्तमिति ॥ समस्तमात्मा
नंसर्वंपरंपदंब्रह्मेतिपृथक्योज्यमपुनरुक्ततायैअत्रविधिमुखेन
प्रतिषेधमुखेनचयेविशेषानिर्दिष्टाःतानशेषान्साक्षिणित्वंपदार्थे
तत्पदार्थेचब्रह्मण्यनुसंधायानयोस्तुल्यलक्षणत्वंनिश्चित्यतत्त्व
मसिवाक्यादहंब्रह्मेतिनिश्चिनुयादितितात्पर्यार्थः ॥ ३७ ॥

सर्वप्रत्ययसाक्षी ज्ञः कथं ज्ञेयो म
येत्युत ॥ विमृश्यैवं विजानीयाज्ज्ञा
नकर्म न वेत्ति वा ॥ ३८ ॥ ॥

एवंब्रह्मात्मरूपेणैवज्ञातव्यमित्युक्तेपुनर्मुमुक्षुंशिक्षयति॥सर्वे
ति॥सर्वप्रत्ययसाक्षीज्ञानैकस्वभावोयउक्तःसकथंकीदृक्स्वभा
वइतिविमृशेदितियोजनीयंकथंशब्दसूचितंविमर्शमेवविभजते

ज्ञेयइति ॥ मयाज्ञेयउतनज्ञेयइतिशेषः यदिज्ञेयस्तदापिज्ञानंप्र तिकर्मवानवेत्येवंविमृश्यविजानीयात्तत्त्वमात्मनइत्यर्थः ॥३८॥

अदृष्टं द्रष्टृविज्ञातं दृष्टमित्यादिशा
सनात् ॥ नैव ज्ञेयं मयान्यैर्वा परं
ब्रह्म कथंच न ॥३९॥ ॥ छ ॥

एवंविमर्शेज्ञेयत्वपक्षस्तावन्नसंगच्छतइत्याह ॥ अदृष्टमिति॥ यदिमन्यसेसुवेदेति दभ्रमेवापिनूनंत्वंवेत्थब्रह्मणोरूपमितिज्ञेय स्याल्पत्वोपदेशादब्रह्मत्वापत्तेरदृष्टमविज्ञातमितिचश्रुतिशास नान्नब्रह्मात्मतत्त्वंज्ञानकर्मत्वेनमया अन्यैर्वाकथंचनज्ञेयमित्य र्थः ॥ ३९ ॥

स्वरूपाव्यवधानाभ्यां ज्ञानालो
कस्वभावतः ॥ अन्यज्ञानानपेक्ष
त्वाज्ज्ञातं चैव सदा मया॥ ४० ॥

यद्येवंज्ञेयत्वंनसंभवतिकथंतर्हिआत्मन्येवात्मानंपश्येदि त्याद्युपदेशइत्याशंक्याविषयत्वेनाविर्भावमात्रमेवात्मतत्त्वज्ञा नंनविषयत्वेन यस्यामतंतस्यमतंमतंयस्यनवेदसइतिश्रुतिरि तिमन्वानोऽज्ञेयत्वंपक्षमपिप्रतिक्षिपति ॥ स्वरूपेति ॥ यज्ज्ञा नस्वरूपादन्यज्जडंयच्चव्यवहितंज्ञानदेशात्तदागंतुकज्ञानसापे क्षसिद्धिकत्वाज्ज्ञानविषयतयाज्ञेयंभवति ॥ नतथेदमात्म तत्त्वंकथंतर्हिशृणु ॥ ज्ञानालोकस्वभावतोज्ञानप्रकाशस्वरू पत्वात्स्वरूपाव्यवधानाभ्यांहेतुभ्यामन्यज्ञानानपेक्षत्वादविष

यत्वेनविज्ञातंभवत्यात्मतत्त्वमितियोजना ॥ ज्ञातुरेवब्रह्मत्वोपदेशाज्ज्ञातुश्चस्वज्ञेयत्वानुपपत्तेरविज्ञातत्वाभावाच्चसदामयाज्ञातंचब्रह्मात्मतत्त्वमित्यर्थः ॥ ४० ॥

नान्येन ज्योतिषा कार्यं रवेरात्म
प्रकाशने ॥ स्वबोधान्नान्यबोधेछा
बोधस्यात्मप्रकाशने ॥ ४१ ॥ ॥

ज्ञानस्वरूपस्यनान्यज्ञानापेक्षेत्येतद्दृष्टांतेनसाधयाति ॥ नान्येनेति ॥ स्पष्टार्थः ॥ ४१ ॥

न तस्यैवान्यतोपेक्षा स्वरूपं यस्य
यद्भवेत् ॥ प्रकाशांतरदृश्यो न प्रका
शो ह्यस्ति कश्चन ४२ ॥ ॥

दृष्टांतस्यदार्ष्टांतिकस्यचनैरपेक्ष्यमुक्तंसाधयाति ॥ नतस्येति ॥ आत्मानान्यतोज्ञानमपेक्षतेतत्स्वरूपत्वाद्यद्यस्यस्वरूपंतन्नान्यतस्तदपेक्षते यथाप्रकाशरूपःसवितानप्रकाशमन्यतोऽपेक्षतेतथाचायंतस्मादेवमित्यर्थः किंचनात्माप्रकाशांतरदृश्यः प्रकाशरूपत्वादादित्यवदित्याह प्रकाशांतरेति ॥ ४२ ॥

व्यक्तिः स्यादप्रकाशस्य प्रकाशा
त्मसमागमात् ॥ प्रकाशस्त्वर्ककार्यः
स्यादिति मिथ्या वचो ह्यतः ॥ ४३ ॥

ननुप्रकाशांतरदृश्यत्वाभावेपिस्वरूपप्रकाशदृश्यएवकिंन

स्याद्यथासविताघटादिप्रकाशयन्स्वात्मानमपिप्रकाशयत्येवत थात्मापिदृश्यमवभासयन्स्वात्मानमपिभासयेदितिचेन्नेत्याह॥ व्यक्तिःस्यादिति ॥ अप्रकाशस्वरूपतःप्रकाशहीनस्यप्रका शात्मसमागमात्प्रकाशस्वभावसंसर्गमात्रात्व्यक्तिरभिव्य क्तिस्तमोनिवृत्तिलक्षणास्यात्नतत्रप्रकाशगुणोदयइत्यर्थः ॥ अतःप्रकाशोर्ककार्यइतिमृषाव्यपदेशःप्रकाशावगुंठितेवस्तुनि प्रकाशोदयाभावेभिव्यक्त्यभावादर्शनादित्यर्थः॥तस्माद्भासमा नस्वरूपसंसर्गएवभासस्याभिव्यक्तिरितिप्रकाशस्वभावस्यस वितुर्नान्यप्रकाश्यतास्वप्रकाश्यतावास्तीतिनदृष्टांतत्वसिद्धिर तोनदार्ष्टांतिकसिद्धिस्त्वत्पक्षइतिभावः ॥ ४३ ॥

यतोऽभूत्वा भवेद्यच्च तस्य तत्कार्य
मिष्यते॥स्वरूपत्वादभूत्वानप्रका
शो जायते रवेः॥ ४४ ॥ ॥ छ॥

घटादिप्रकाशःकस्मादर्ककार्योनभवतीतिचेत्तत्राह ॥ यतो भूत्वेति ॥ यत्तुप्रागभूत्वायतोभवेत्तत्तस्यकार्यमिष्यतइतिसंबं धः ॥ स्पष्टमन्यत् ॥ ४४॥

सत्तामात्रे प्रकाशस्य कर्त्तादित्या
दिरिष्यते ॥ घटादिव्यक्तितो यद्व
त्तद्वद्बोधात्मनीष्यतां ॥ ४५ ॥ ॥

कथंतर्हिप्रकाशस्वरूपस्यादित्यस्यप्रकाशयितृत्वमात्मनश्चबो धमात्रस्वभावस्यबोद्धृत्वंव्यपदिश्यतेतत्राह ॥ सत्तामात्रइति॥

प्रकाशस्यसन्निधिसत्तामात्रेसतिघटादिव्यक्तितोघटाद्यभिव्य
क्तेर्दर्शनादादित्यादिःप्रकाशस्यकर्तेष्यतेयद्वत्तद्वद्बोधरूपेप्यात्म
निस्वाध्यस्तवस्तुसन्निधिसत्तामात्रेसतिबोद्धृत्वमिष्यतामंगीकि
यतामितियोजना ॥ ४५ ॥

**बिलात्सर्पस्य निर्याणे सूर्यो यद्व**
**त्प्रकाशकः ॥ प्रयत्नेन विना तद्व**
**ज्ज्ञातात्मा बोधरूपतः ॥ ४६ ॥**

स्वगतविकारमंतरेणैवात्मनोऽर्थप्रकाशकत्वमित्येतदपिरविद्द
ष्टांतेनस्पष्टयाति ॥ बिलादिति ॥ सर्पस्याबिलद्वारान्निर्गमेज्ञाय
मानेयद्वत्सूर्यःप्रयत्नेनविनापूर्वसिद्धेनैवस्वज्योतिषातंभासयन्
प्रकाशकोव्यपदिश्यते तद्वदात्माबोधरूपत्वात्प्रयत्नेनविनावि
कारमंतरेणज्ञाताव्यपदिश्यतइत्यर्थः ॥ ४६ ॥ ॥

**दग्धैवमुष्णः सत्तायां तद्वद्बोद्धात्म**
**नीष्यतां ॥ सत्येव यदुपाधौ तु**
**ज्ञाते सर्प इवोत्थिते ॥ ४७ ॥ ॥**

इदानीमुपाधिभावेज्ञातृत्वव्यपदेशात्तदभावेतदभावादौपाधि
कमेवज्ञातृत्वमितिदर्शयितुंपरमुदाहरणमाह ॥ दग्धैवमिति ॥
यथादाह्यसन्निधावुष्णस्वरूपस्याग्नेःसत्तामात्रेणदाहकत्वंतथा
बोधस्वरूपस्याप्यात्मनोबोध्यसन्निधिमात्रेणबोद्धृत्वमिष्यतां य
द्यस्मादुपाधौज्ञातेसत्येवात्माज्ञातोच्यतेयथाबिलादुत्थितेसर्पे

उपाधौज्ञातेसत्येवसवितामकाशकःकथ्यतेनतदभावेतस्मादौ पचारिकएवात्मनोज्ञातृत्वव्यपदेशइत्यर्थः ॥ ४७ ॥

ज्ञाताऽयत्नोपि तद्वज्ज्ञः कर्ता भ्राम कवद्भवेत् ॥ स्वरूपेण स्वयं नात्मा ज्ञेयोऽज्ञेयोथवा ततः ॥ ४८ ॥

औपाधिकत्वंज्ञातृत्वमात्मनःरविदृष्टांतेनप्रतिपाद्यतेनैवदृष्टांतेनकर्तृत्वमप्यौपाधिकंप्रतिपादयति॥ज्ञातेति ॥ यद्वदयंज्ञ आत्मायत्नरहितोपि ज्ञाताव्याख्यातस्तद्वत्स्वगतविशेषशून्योपिसन्निधिमात्रेणकारकाणिप्रवर्तयन्क्रियाणां कर्तेतिव्यपदिश्यतेभ्रामकवदित्यर्थः ॥ भ्रामयतिप्रवर्तयतिप्राक्सुप्तंजनसमूहमितिभ्रामकःसूर्यःयद्वाभ्रामकोऽयस्कांतःसयथास्वयंचलनादिव्यापाररहितोपिलोहकीलादीनांचालकोदृष्टस्तथायमपीत्यर्थः तदेवंव्यक्तिःस्यादप्रकाशस्येत्यारभ्योक्तंप्रासंगिकमात्मनोज्ञातृत्वंकर्तृत्वंचौपाधिकंव्यवस्थाप्यप्रक्रांतमात्मनोज्ञानकर्मत्वाकर्मत्वाभ्यामज्ञेयज्ञेयत्वपक्षद्वयसमर्थनमुपसंहरति ॥ स्वरूपेणेति ॥ यतोयमात्मानिर्विशेषःस्वभावतोलुप्तप्रकाशस्वरूपश्चततःस्वयंस्वरूपेणासाधारणस्वभावेननज्ञेयोज्ञानक्रियया व्याप्तो नभवति ॥ तथानाज्ञेयोव्यवहितवस्तुवन्नज्ञानप्रकाशरहितइत्यर्थः ॥ अथवेत्यनेनज्ञातावान्यस्याज्ञातावानभवत्यात्मानिविकारत्वाच्चैतन्ययोगाच्च तथाकर्ताकारकाध्यासाधिष्ठानत्वान्नकर्ताचनिर्व्यापारत्वादित्यादिविरुद्धप्रतिभासव्यवस्थोपसंहारउक्तोवेदितव्यः ॥ ४८ ॥

विदिताविदिताभ्यां तदन्यदेवेति शासनात् ॥ बंधमोक्षादयो भावा स्तद्वदात्मनि कल्पिताः ॥ ४९ ॥

आत्मनःउक्तेज्ञेयत्वाद्यभावेप्रमाणमाह ॥ विदिताविदिताभ्यांतदिति ॥ अन्यदेवतद्विदितादथोअविदितादधीतिश्रुत्या विदिताविदिताभ्यांकार्यकारणाभ्यामन्यदात्मतत्त्वंब्रह्मेतिशासनात्कार्यकारणधर्मविलक्षणस्वभावएवायमात्मेत्यर्थः ॥ तथाच यथात्मनिज्ञातृत्वंकारणत्वमित्यादिसर्वमविद्यावशादेवकल्पितंतथाबंधोमोक्षश्छिन्नोभिन्नःसुखीत्यादयोपिभावाआत्मनिकल्पिताएवेत्याह बंधेति ॥ ४९ ॥

नाहोरात्रे यथा सूर्ये प्रभारूपाविशेषतः ॥ बोधरूपाविशेषान्न बोधाबोधौ तथात्मनि ॥ ५० ॥ ॥

बंधादीनामात्मनिकल्पितत्वेसदृष्टांतंहेतुमाह ॥ नाहोरात्र इति ॥ अबोधनिबंधनोबंधोबोधनिबंधनोमोक्षस्तयोरभावेतत्रतयोरप्यभावइत्यर्थः ॥ ५० ॥

यथोक्तं ब्रह्म यो वेद हानोपादानवर्जितं ॥ यथोक्तेन विधानेन स सत्यं नैव जायते ॥ ५१ ॥ ॥

उक्तेनोपायेनोक्तस्वरूपंब्रह्मविजानतःफलमाह ॥ यथोक्त

मिति ॥ हानोपादानवर्जितमिति हानोपादानकर्तृत्वंकर्मत्वंच व्यावर्त्यते ॥ अनेनसर्वविशेषाःप्रतिषिद्धाभवंतिपरिग्रहपरित्यागात्मकत्वात्सर्वविशेषाणामित्यर्थः ॥ यथोक्तविधानंपदार्थपरिशोधनप्रकारःसनैवजायतइतिसत्यमितिसंबंधः ॥ नसभूयोभिजायतइतिस्मृतेरित्यर्थः ॥ ५१ ॥

जन्ममृत्युप्रवाहेषु पतितो नैव श
क्नुयात् ॥ इत उद्धर्तुमात्मानं ज्ञाना
दन्येन केनचित् ॥ ५२ ॥ ॥ ॥

यथोक्तब्रह्मवेदनेनविनापियथोक्तफलसिद्धेःकृतंज्ञानेनेत्याशंक्यनान्यःपंथाविद्यतेयनायेतिश्रुतिविरोधान्मैवमित्याह ॥ जन्मेति॥इतएभ्योजन्ममृत्युप्रवाहेभ्यःकेनचित्साधनांतरेण ॥५२

भिद्यते हृदयग्रंथिश्छिद्यंते सर्वसंश
याः ॥ क्षीयंते चास्य कर्माणि त
स्मिन्दृष्ट इतिश्रुतेः ॥ ५३ ॥ ॥

उक्तेर्थेऽथर्वोपनिषद्वाक्यंप्रमाणयति॥भिद्यतइतिस्पष्टं ॥५३॥

ममाहमित्येतदपोह्य सर्वतो विमु
क्तदेहं पदमंबरोपमं ॥ सुदृष्टशास्त्रानु
मितिभ्य ईरितं विमुच्यतेऽस्मिन्य
दिनिश्चितो नरः ॥ ५४ ॥ ॥ ॥

प्रकरणार्थंसंक्षिप्योपसंहरति ॥ ममाहमितिसर्वतःसर्वात्म नाममाहमित्येतत्सविषयमपोह्यत्यक्त्वानरोमनुष्योस्मिन्यदिनि श्चितोनिश्चितमतिः स्यात्तदासविमुच्यतइतियोजना ॥ अस्मि न्कस्मिन्विनिश्चितइतितदाह ॥ विमुक्तदेहमिति ॥ देहद्वय संबंधशून्यंप्रत्यक्तत्त्वंपदंब्रह्मांबरोपमंनिरतिशयं निःप्रपंचमि तियावत् कुतएवंविधंब्रह्मात्मस्वरूपमित्यपेक्षायांश्रुतियुक्ति भ्यांनिर्धारितत्वादत्रासंभावनानास्तीत्यभिप्रेत्यतद्विशिनष्टिसु दृष्टेत्यादिईरितमित्यंतेन यदेवंविधंसम्यग्विचारितशास्त्रानुमा नेभ्योऽस्माभिरीरितमस्मिन्निितिसंबंधः ॥ ५४ ॥ इतिना न्यदन्यत्प्रकरणंपंचदशंविवृतं ॥ १५ ॥

## पार्थिवः कठिनो धातुर्द्रवो देहे स्मृ तोऽम्मयः ॥ पक्तिश्चेष्टावकाशाः स्युर्वन्हिवाय्वंबरोद्भवाः ॥ १ ॥

पूर्वस्मिन्प्रकरणेएकदेशिमतप्रतिक्षेपमुखेनब्रह्मैकत्वज्ञानमे वस्वरूपावस्थानलक्षणमोक्षसाधनंनभेदाभेदज्ञानमितिप्रति पादितं॥ अधुनासर्वतार्किकमतप्रतिषेधेनमुमुक्षुंस्वाराज्येभिषे क्तुंप्रकरणांतरमारभमाणः प्रथमंस्थूलशरीरात्मवादिमतंनिरा करोतिपार्थिवइति ॥ यःस्थूलदेहेकठिनोधातुर्मांसादिरूपःस पार्थिवः पृथिव्यंशःपृथिवीपरिणामात्मकःस्मृतोज्ञातोविद्वद्भिरि त्यर्थः ॥ एवंद्रवोऽम्मयोऽपांपरिणामः॥ पक्तिःपाकश्चेष्टास्पंदन मवकाशोन्नपानमनसांसंचारमार्गोदेहगतसुषयोयेस्युः एतेक्र मेणवन्हिवाय्वंबरोद्भवादेहानुगतवन्ह्याद्यंशकार्यभूताः स्मृताइ त्यक्षरार्थःदेहोनात्माभूतपरिणामत्वाद्वल्मीकादिवदितिभावः १

घ्राणादीनि तदर्थाश्च पृथिव्यादिगु
णाः क्रमात् ॥ रूपालोकवदिष्टं
हि सजातीयार्थमिंद्रियं ॥ २ ॥

इंद्रियात्मवादिनंप्रत्याह ॥ घ्राणादीनीति ॥ घ्राणादीनींद्रियाणितदर्थास्तेषांविषयाः गंधादयश्चक्रमात्पृथिव्यादीनांगुणाः कार्याणीत्यर्थः ॥ गंधरसरूपस्पर्शशब्दास्तावत्पृथिव्यप्तेजोवाय्वाकाशानांक्रमेणधर्माः प्रसिद्धास्तेषांघ्राणाद्येकैकेंद्रियग्राह्यतान्वयव्यतिरेकसिद्धा ॥ तथाचयदिंद्रियंयस्यधर्मंग्राहयतितदिंद्रियंतस्यसजातीयंभवितुमर्हतियथातैजसस्यरूपस्यप्रकाशकोदीपादिस्तैजसोदृष्टस्तथेंद्रियाण्यपिभौतिकानांप्रकाशकत्वाद्भौतिकान्येवेत्यनुमानमाह ॥ रूपालोकवदिति ॥ एवमिंद्रियाणांभौक्तिकत्वेसिद्धेदेहवदेषामप्यनात्मत्वमितिभावः ॥ २ ॥

बुध्यर्थान्याहुरेतानि वाक्पाण्या
दीनिकर्मणे ॥ तद्विकल्पार्थमंत
स्थं मन एकादशं भवेत् ॥ ३ ॥

किंचेंद्रियाणिनात्मानःकरणत्वात्कुठारवदित्यनुमानांतरंसूचयन्कार्यवशादिंद्रियाणामेकादशत्वनियममाह ॥ बुद्ध्यर्थानीति ॥ एतानिघ्राणादीनिबुद्ध्यर्थानिज्ञानकरणान्याहुःवाक्पाणिपादपायूपस्थाख्यानींद्रियाणिकर्मणेकर्मार्थंवचनादानगमनविसर्गानंदार्थंतत्करणान्याहुरित्यर्थः ॥ तेषांदशानामिंद्रियाणांविकल्पार्थंयुगपद्विषयसंनिधानेक्रमेणतत्तद्विषयज्ञानादिनियमा

र्थंयदिंद्रियंतन्मनउक्तदशापेक्षयाएकादशंभवेत् मनश्चैकंसाधारणंकरणमवश्यमंगीकार्यं॥अन्यथात्मनोयुगपदनेकेंद्रियविषयसंप्रयोगेसतियुगपदेवानेकज्ञानानिजायेरन्॥ नचैवमस्ति ॥ तथाचतस्यापिमनसःकरणत्वादनात्मत्वमिंद्रियवदितिसिद्धं ॥३॥

निश्चयार्था भवेद्बुद्धिस्तां सर्वार्थानुभाविनीं ॥ ज्ञातात्मोक्तः स्वरूपेण ज्योतिषा व्यंजयन्सदा ॥४॥

बुद्धिरपिनात्माकरणविशेषत्वान्मनोवदितिबौद्धमतंनिराकुर्वंस्तस्याःस्वभावंदर्शयति ॥ निश्चयार्थेति ॥ निश्चयोर्थपरिछेदःसोर्थःप्रयोजनंयस्याअंतःकरणवृत्तेःसानिश्चयार्थाबुद्धिर्भवेत् ॥ निश्चयकरणंबुद्धिरित्यर्थः ॥ अन्यदृश्यत्वादपितस्याःअनात्मत्वमित्याह ॥तामिति॥बुद्धिज्ञातुरपिबुद्धिवदन्यज्ञेयत्वशंकांवारयति स्वरूपेणज्योतिषेति ॥ तथाचभास्यभासकयोरूपालोकयोरिवभेदाद्भास्यायाबुद्धेरन्योभासकआत्मेत्यर्थः ॥ ४ ॥

व्यंजकस्तु यथाऽलोको व्यंग्यस्याकारतां गतः॥ व्यतिकीर्णोप्यसंकीर्णस्तद्वज्ज्ञः प्रत्ययैःसदा ॥५॥

यदिबुद्धेरात्माभासकस्तर्हितयासंसर्गादशुद्धिरापद्येतेत्याशंक्य दृष्टांतेनपरिहरत्याह ॥ व्यंजकास्त्विति ॥ यथाऽऽलोकोव्यंजकोदीपालोकादिःव्यंग्यस्यघटादेराकारतांगतःसन्व्यतिकीर्णोपिःव्यामिश्रतयाभासमानोपिवस्तुतोऽसंकीर्णोवि

विक्तस्वभावएवभवतितद्वदेवज्ञः आत्मासदाप्रत्ययैर्बुद्धिवृत्तिभि रित्यर्थः ॥ अतोनित्यशुद्धएवात्मेतिभावः ॥ ५ ॥

स्थितो दीपो यथायत्नः प्राप्तं सर्वं
प्रकाशयेत् ॥ शब्दाद्याकारबुद्धीर्ज्ञः
प्राप्तास्तद्वत्प्रपश्यति ॥ ६ ॥ ॥

यदिबुध्यादेरत्यंतविलक्षणोनिर्व्यापारआत्माकथंतर्हितस्य तदवभासकत्वमित्याशंक्यतदपिदृष्टांतेनाह ॥ स्थितइति ॥स्प ष्टार्थः॥ ६ ॥ ॥ ॥ ॥ ॥

शरीरेंद्रियसंघात आत्मत्वेन गतां
धियं ॥ नित्यात्मज्योतिषा दीप्तां
विशिंषंति सुखादयः ॥ ७ ॥ ॥

तथापिकथंशुद्धिःसुखित्वादिस्फुरणादित्याशंक्याह॥ शरीं रेति ॥सुखादयःशरीरादिसंघातेआत्मत्वेनप्रवृत्तांधियंबुद्धिंवि शिंषंति नत्वात्मानं किंलक्षणांनित्यात्मज्योषादीप्तांप्रकाशितां तथाचभास्यभासकबुध्यात्मनोरविवेकादात्मासुखादिमानिति भ्रांतिरित्यर्थः ॥ ७ ॥ ॥ ॥

शिरोदुःखादिनात्मानं दुःख्यस्मी
ति हि पश्यति ॥ द्रष्टान्यो दुःखि
नो दृश्याद्द्रष्टृत्वाच्च न दुःख्यसौ॥८

कुतएवंनिश्चयइत्यतआह शिरइति ॥ शिरआदिदेहावय

वगतेनदुःखेनहियस्माद्दुःख्यहमस्मीत्यात्मानंपश्यतितस्माद्देह मात्मत्वेनगताबुद्धिरितियोजना ॥ अयमाशयः आत्मनोवि शेषविज्ञानंबुध्यध्यासानिबंधनमितिहिस्थितिः ॥ तथाचशिरो दुःखेनोदरदुःखेनवादुःख्यहमस्मीत्यभिमानात्मकबुध्यवस्था पन्नविशेषस्यैवदुःखित्वात्सुखदुःखादयोबुद्धिंविशिंषंतीतियुक्तं वक्तुमिति द्रष्टातुदुःखिनोदृश्यादन्यःआत्मत्वेनाभिमन्यमानदे हावयवोपघातादिजनितदुःखाकारसाभासबुद्धेर्दृश्यायाः सा क्षीतदन्यएवासौद्रष्टृत्वादेवनदुःखीत्यर्थः ॥ ८ ॥

दुःखी स्याद्दुःख्यहंमानाद्दुःखिनो
दर्शनान्न वा ॥ संहतेंगादिभिर्द्रष्टा
दुःखी दुःखस्य नैव सः ॥ ९ ॥

द्रष्टृत्वादसौनदुःखीत्युक्तमेवस्पष्टयाति ॥ दुःखीस्यादिति॥ अयमात्मादुःख्यहंमानाद्दुःखाकारपरिणामवत्यंतःकरणेहमि त्यभिमानाद्दुःखीस्यान्नतुदुःखिनोदुःखाकारपरिणामवतोदर्शना त्तथासत्युदासीनानामपिदुःखिनंपश्यतांदुःखित्वप्रसंगइत्यर्थः प्रकृतेकिमायातंतदाह संहतइति ॥ अंगादिभिर्हस्ताद्यंगैश्च क्षुरादींद्रियैश्चसंहतेदेहेयद्दुःखंतस्यदुःखस्यद्रष्टायआत्मासाक्षी सनैवदुःखीतिसिद्धमितिशेषः ॥ ९ ॥

चक्षुर्वत्कर्मकर्तृत्वं स्याच्चेन्नानेकमे
व तत् ॥ संहतं च ततो नात्मा द्रष्टृ
त्वात्कर्मतां व्रजेत् ॥ १० ॥ ॥

दुःखिनोद्रष्टृत्वेपिदुःखित्वंआत्मनोयुज्यतइतिदृष्टांतेनशंकते चक्षुर्वदिति ॥ यथाचक्षुषोदर्पणादिनिष्ठतयादृश्यत्वंतस्यैवमुख देशस्थतयाद्रष्टृत्वंच तथात्मनोदुःखसंभिन्नतयादृश्यत्वंस्वरूप चैतन्यावस्थतयाद्रष्टृत्वंचेति कर्मकर्तृत्वंघटतइत्यर्थः ॥ सि द्धांतीपरिहरति ॥ नेति कुतइत्यतआह ॥ अनेकमेवतदिति तच्चक्षुरनेकमनेकाकारमेवसंहतंचभवतीत्यतोघटतेतस्यकर्म त्वंकर्तृत्वंचांशभेदोपपत्तेरित्यक्षरार्थः गोलकांशस्यदर्पणस्थस्य दृश्यत्वंतस्यैवशक्तिमत्त्वांशस्यमुखनिविष्टस्यद्रष्टृत्वमितियुक्तमु भयरूपत्वमितिविवक्षितोर्थः ॥ आत्मनस्तुनैवमंशभेदोस्ति एकरूपत्वादसंहतत्वाच्चेत्यभिप्रेत्याह ॥ ततइति ॥ चित्प्रका शैकस्वभावोह्यात्माद्रष्टैवनदृश्यांशसंभिन्नोदृश्यांशस्यानात्मत्वा दतोद्रष्टृत्वात्कर्मतांनप्राप्नोतीत्यर्थः ॥ १० ॥ ॥

ज्ञानयत्नाद्यनेकत्वमात्मनोपि
मतं यदि ॥ नैकज्ञानगुणत्वा
त्तुज्योतिर्वत्तस्य कर्मता ॥ ११

नन्वात्मनोपिज्ञानादिभिरनेकात्मत्वसंभवाच्चक्षुर्वद्भास्यभा सकतास्यादित्याशंक्यप्रत्याह ॥ ज्ञानयत्नादिति ॥ ज्ञानप्रय त्नेच्छाद्वेषादिगुणभेदैरनेकात्मकत्वादात्मनोपिकेनचिदंशेनाविशि ष्टस्यग्राह्यत्वमंशांतरेणग्राहकत्वंचयदिमतमितिशंकाग्रंथार्थः ॥ तुशब्दःशंकानिषेधार्थः ॥ नैवं एकज्ञानगुणत्वात्कृत्स्नःप्र ज्ञानघनएवेतिश्रुत्याज्ञानैकस्वभावत्वावधारणादनेकात्मत्वा योगाज्ज्योतिर्वत्तस्यनकर्मताग्राह्यतातस्यनसंभवतीतिपरिहार ग्रंथार्थः ॥ ११ ॥

ज्योतिषो द्योतकत्वेपि यद्वन्नात्मप्र
काशनं ॥ भेदेप्प्येवं समत्वाज्ज्ञ आ
त्मानं नैव पश्यति ॥१२॥ ॥

दृष्टांतंव्याचष्टे ॥ ज्योतिषइति ॥ अयमर्थः ॥ यद्यात्मनो ग्राह्यग्राहकांशभेदोभ्युपगम्यतेतदेदंवक्तव्यं ग्राह्यांशोपिचेतनः किंवाजडइति ॥ तत्राद्यंनिराकरोतिदृष्टांतेन ज्योतिषइति ॥ आदित्यादिज्योतिषोद्योतकत्वेपिप्रकाशनस्वभावत्वेपिनात्मप्र काशनंनज्योतिः स्वरूपप्रकाशनंतद्वदेवंयथादृष्टांतस्तथाभेदेप्यं शभेदकल्पनेपिज्ञआत्मासमत्वाच्चैतन्यस्वभावाविशेषादात्मानं नैवपश्यतिनस्वांशंविषयीकरोतीत्यर्थः ॥ नद्वितीयोजडाजडयो रंशांशित्वेनाभेदानुपपत्तेर्नग्राह्यांशस्यात्मत्वमितिनात्मनःस्ववे द्यत्वसिद्धिरितिदूषणंस्फुटमेवेत्युपेक्षितमितिद्रष्टव्यं ॥ १२ ॥

यद्धर्मा यः पदार्थो न तस्यैवेयात्स
कर्मतां ॥ न ह्यात्मानं दहत्यग्निस्त
था नैव प्रकाशयेत् ॥१३॥ ॥

स्वरूपेणांशद्वारेणवायद्यप्यात्मात्मानंनैवपश्यतितथापिगु णज्ञानस्यकर्मत्वंगमिष्यतीत्याशंक्याह ॥ यद्धर्मेति ॥ यःप दार्थोयद्धर्मायेनासाधारणधर्मेणधर्मवान्सतस्यैव धर्मस्यकर्मतां नेयात्तथाचज्ञानस्वभावआत्मानज्ञानकर्मतांगंतुमर्हतीत्यर्थः ॥दृष्टांतभागः स्पष्टार्थःआत्मानस्वीयधर्मव्याप्यःपदार्थत्वादग्नि वदित्यर्थः ॥ १३ ॥ ॥ ॥ ॥

एतेनैवात्मनात्मानो ग्रहो बुद्धेर्नि
राकृतः ॥ अंशोप्येवं समत्वाद्धि
निर्भेदत्वान्न युज्यते ॥१४॥ ॥

उक्तन्यायेनविज्ञानवादीबौद्धोपिनिराकृतइत्याह ॥ एतेनै
वेति ॥ आत्मनइत्यस्मिन्नात्मानइतिछांदसःप्रयोगःबुद्धेरात्मनः
स्वरूपस्यात्मनास्वेनैवग्रहइतिबौद्धपक्षोप्येतेनैवोक्तदृष्टांतप्रबंधे
ननिराकृतइत्यर्थः ॥ स्वरूपस्यस्वरूपेणैवग्राह्यत्वाभावेपिएके
नांशेनग्राह्यत्वमंशांतरेणग्राहकत्वमिति कल्पनाप्यत्रनघटतइ
त्याह ॥ अंशोप्येवमिति ॥ एवंप्रागुक्तवर्त्मनातदेवाहसमत्वान्नि
र्भेदत्वादिति ॥ १४ ॥

शून्यतापि न युक्तैवं बुद्धेरन्येन दृ
श्यता ॥ युक्तातो घटवत्तस्याः प्रा
क्सिद्धेश्च विकल्पतः ॥१५॥ ॥

एवंबुद्धेःस्वग्राह्यत्वनिराकरणेनार्थादन्यग्राह्यत्वमुपक्षिप्तम
न्यथातस्याःक्षणिकत्वाद्यसिद्धेःतत्रमाभूत्तर्हिबुद्धिस्तद्ग्राहकश्चा
परःशून्यमेवात्मतत्त्वमस्त्वितिवादिनंनिराकरोति ॥ शून्यता
पीति ॥ एवंसतिशून्यतापिनयुक्तायद्वायथाबुद्धेःस्वग्राह्यतान
युक्तायुक्तिविरोधादेवंशून्यतापिबुद्धेस्तदवभासस्यचनयुक्ताअप
रोक्षतयातस्याःप्रतीयमानत्वादित्यर्थः ॥ अतोहेतोर्घटवदन्येन
साक्षिणाबुद्धेर्ग्राह्यतायुक्ता साक्षिणिपर्यवसानात्तस्यापिनशून्य
ताशंकेत्यर्थः किंचतस्याबुद्धेर्विकल्पतोविकल्पनात्प्रागेवतत्सा
क्षिणःसिद्धेर्नशून्यताकदापीत्यर्थःबुद्धिविकल्पनात्पूर्वमेवसुषुप्ता

वप्यात्मप्रकाशसद्भावोंगीकर्तव्योऽन्यथासुषुप्तेरसाक्षिकत्वादव
स्थांतरेपरामर्शानुदयप्रसंगादितिभावः ॥ १५ ॥

अविकल्पं तदस्त्येव यत्पूर्वं स्या
द्विकल्पतः॥ विकल्पोत्पत्तिहेतुत्वा
द्यद्यस्यैव तु कारणं ॥ १६ ॥ ॥

किंचयत्कार्यंयदन्वितंदृश्यतेतत्तस्यकारणंकार्यविकल्पात्प्रा
क्सिद्धंचयथाघटान्वितामृत्तथाबुध्यादेर्विकल्पस्यसदार्थान्वित
तयोपलभ्यमानत्वात्प्राक्सिद्धसत्कारणकत्वमेवयुक्तमित्याह
॥अविकल्पमिति॥ सर्वविकल्परहितंकूटस्थमित्यर्थः ॥ अका
रणकार्योत्पत्तेरनुपपत्तेः कारणसत्त्वमेष्टव्यमन्यथाकार्यविशेषा
र्थिनांकारणविशेषोपादानप्रवृत्तिनियमानुपपत्तिःशून्यस्यसर्वत्र
सुलभत्वादितिभावः ॥ १६ ॥

अज्ञानं कल्पनामूलं संसारस्य नि
यामकं ॥ हित्वात्मानं परं ब्रह्म विं
द्यान्मुक्तं सदाभयं ॥ १७ ॥ ॥छ॥

कूटस्थस्यब्रह्मात्मनःकथंकारणत्वंव्यापारवद्धिकारणंनामे
त्याशंक्यरज्जुवत्सर्पस्यविवर्त्ताधिष्ठानतयातस्यकारणत्वंघटत
इत्यभिप्रेत्याह॥अज्ञानमिति॥अज्ञानमनाद्यविद्याकूटस्थप्रत्य
गात्मनिब्रह्मणिसर्वकल्पनायामूलमतद्रूपप्रतिभासहेतुरित्यर्थः
तथाचचिदविद्याविवर्त्तेषुकार्येषुसत्तात्मनाभासमानतयाकारण
त्वंकूटस्थस्यापिघटतइतिभावःसंसारस्यनियामकमितिविशेष

णेनसर्वविकल्पनायाअज्ञानमूलत्वेऽन्वयव्यतिरेकाख्यंप्रमाण मनुमानंसूचयति ॥ तर्ह्यज्ञानविशिष्टमेवकिंब्रह्मप्रत्यत्वेनअनुसंधेयंनेत्याह ॥ हित्वेतिसकार्यमज्ञानंहित्वासाक्ष्यत्वेनतस्यसाक्षिधर्मतांबाधित्वात्मानंप्रत्यंचंसाक्षित्वेनोर्वरितंसाक्ष्यबाधयापरंब्रह्मपरिपूर्णंमुक्तंकार्यकारणप्रपंचसंसर्गरहितमभयमद्वयमहंब्रह्मास्मीतिमहावाक्यार्थभूतंसदाविंद्यादनुसंदध्यादित्यर्थः १७

**जाग्रत्स्वप्नं तयोर्बीजं सुषुप्ताख्यं तमोमयं ॥ अन्योन्यस्मिन्नसत्त्वाच्च नास्तीत्येतत्त्रयंत्यजेत् ॥ १८ ॥**

संसारनियामकमज्ञानंहित्वात्मानंब्रह्मविंद्यादित्युक्तंतत्रकः संसारःकथंवातस्याज्ञानंकारणंततोवाकथमात्मनोविवेकःस्यादित्यपेक्षायामह ॥ जाग्रदिति ॥ जाग्रत्स्वप्नौस्थूलसूक्ष्मविषयभोगलक्षणौसंसारइतिशेषःतयोर्बीजंकारणंतमोमयमज्ञानप्रायंसुषुप्ताख्यंसुषुप्तिसंज्ञितंतमोबीजमितिवक्तव्येमयट्प्रयोगादज्ञानस्यस्वातंत्र्यंवार्यतेसाभासंतमोबीजमित्यर्थः ॥ एवंकार्यकारणस्वरूपमुक्त्वातयोस्त्यागप्रकारमाह ॥ अन्योन्यस्मिन्निति ॥ स्थूलसूक्ष्मकारणावस्थानामन्योन्यस्मिन्नसत्त्वात्सत्त्वव्यभिचाराच्चकाराद्दृश्यत्वाच्चएतत्त्रयंरज्ज्वांदृष्टसर्पधारादिवदात्मनिततोन्यत्रचनास्तीतिज्ञात्वात्यजेद्विलापयेदात्मानंशोधयेदित्यर्थः ॥ १८ ॥

**आत्मबुद्धिमनश्चक्षुरालोकार्थादिसंकरात् ॥ भ्रांतिः स्यादात्मकर्मे**

तिक्रियाणां सन्निपाततः ॥१९॥

त्यजेदित्युक्तेकर्तृत्वप्रतीतेःकथमस्यात्मनोब्रह्मत्वमित्यत आह ॥ आत्मबुद्धीति ॥ आत्मादेहःअर्थादीत्यादिपदाद्देश कालादिग्रहः ॥ आत्मादीनांसंकरान्मिथोगुणप्रधानभावेना ध्यासाद्धेतोः क्रियाणांसन्निपाततासमुद्भवादात्मकर्मआत्मनःक र्मक्रियाइत्यात्मातदाधिष्ठानभूतःकूटस्थोपिकरोतीतिभ्रांतिः स्यात् ॥ तस्मादात्मनःस्वतोनिष्क्रियत्वान्निष्क्रियंब्रह्मत्वमवि रुद्धमित्यर्थः ॥ १९ ॥

निमीलोन्मीलने स्थाने वायव्ये
तेन चक्षुषः ॥ प्रकाशत्वान्मनस्ये
वं बुद्धौ नस्तः प्रकाशतः ॥ २० ॥

अन्यधर्मस्याप्यन्यत्रारोपेदृष्टांतमाह ॥ निमीलेति ॥ ये नेत्रगोलकस्थानेनिमीलोन्मीलनेदृष्टेतेवायव्येवायुकार्येक्रिया त्मकस्यवायोस्तदाश्रयत्वान्नचक्षुरिंद्रियस्यतस्यप्रकाशरूपत्वा त्क्रियाश्रयत्वानुपपत्तेस्तथापिचक्षुष्येवतेव्यपदिश्येतेअध्यासा द्यथाएवंमनसिबुद्धौचचलनाचलनेनस्तःप्रकाशत्वादेवस्वतोन विद्येतेतथापिप्रमाणव्यापाररूपेतेतयोरारोप्येतेचंचलंमनःस्थिरा बुद्धिरितिव्यपदेशदर्शनादित्यर्थः ॥ २० ॥

संकल्पाध्यवसायौ तु मनोबुद्ध्यो
र्यथाक्रमात् ॥ नेतरेतरधर्मत्वं सर्वं
चात्मनि कल्पितं ॥ २१ ॥ ॥

मनोबुद्ध्योरसाधारणधर्मकथनपूर्वकंप्रासंगिकमुपपादितमु पसंहरति ॥ संकल्पेति ॥ संकल्पधर्मकंमनोध्यवसायधर्मि काबुद्धिरितिव्यवस्थैवनसांकर्यमित्यर्थः ॥ तस्मात्कूटस्थस्या त्मनःस्वतःकर्तृत्वासंभवादविद्यादेश्वजडस्यस्वातंत्र्येणप्रवृत्त्य संभवाज्जडाजडयोश्वपरमार्थतः संबंधानिरूपाणात्सर्वंसहेतु कंसंसारबंधनमात्मनिकल्पितमध्यस्तं नपरमार्थतइतिसदैवा त्माद्वयंब्रह्मेतिसिद्धमित्यर्थः ॥ २१ ॥

**स्थानावच्छेददृष्टिः स्यादिंद्रिया णां तदात्मतां॥गताधीस्तां हि पश्य न्ज्ञो देहमात्र इवेक्ष्यते ॥ २२ ॥**

पूर्वंदेहेंद्रियमनोबुद्धिशून्यात्मवादनिराकरणेनतद्विलक्षण आत्माविवेचितः इदानींदेहादिविलक्षणोप्यात्मादेहसमपरिमा णइतिजैनमतेनात्मनःपरिछिन्नत्वशंकायां नतस्यब्रह्मत्वमुपप द्यतेनचतत्रसर्वंकल्पितमितियुज्यतेकल्पकाभावादित्याशंक्या ह ॥ स्थानेति ॥ इंद्रियाणांदेहाद्बहिर्वृत्त्यभावाद्देहावयवगो लकस्थानावछेदेनदृष्टिरुपलंभःस्याद्भवतीत्यर्थेस्याच्छब्दः तथा च त्वगादीनामिंद्रियाणांयथायोगंदेहपरिमाणत्वात्तदात्मतांग ताधीःसेंद्रियदेहतादात्म्यंप्राप्ताबुद्धिःस्यादितियोजना ॥ तांबुद्धिं पश्यन्नवभासयन्नज्ञ आत्मास्वतोऽपरिछिन्नोपिदेहमात्रइवदेहप रिमाणावछिन्नइवेक्ष्यतेज्ञायतेभ्रांत्याप्रतिभासते॥अन्यथामध्य मपरिमाणस्यघटादिवत्सावयवत्वेनानित्यत्वापत्तेः पारलौकि कसाधनप्रवृत्त्यसंभवप्रसंगइतिदिक् ॥ उक्तोपाधिमंतरेणात्म नःस्वतःपरिछेदानुपलंभाद्युक्तंतस्यब्रह्मत्वंनिरवयवस्यचपरमा

र्थतउपाधिसंसर्गायोगाद्युक्तंतस्मिन्सर्वस्यकल्पितत्वंचेतिभा
वः ॥ २२ ॥

क्षणिकं हि तदत्यर्थं धर्ममात्रं नि
रंतरं ॥ सादृश्याद्दीपवत्तद्धीस्त
च्छांतिः पुरुषार्थता ॥ २३ ॥

दिगंबरमतनिराकरणेनयदनंतत्वमात्मनउक्तंतदमृष्यमा
णाःशाक्याःप्रत्यवतिष्ठंते ॥ क्षणिकंहीति ॥ तज्ज्ञानंज्ञेयंचेत्यु
भयंक्षणिकंहिनिश्चितं कतिपयानेकक्षणवर्तित्वशंकांवारयति॥
अत्यर्थमितिस्वरसभंगुरमित्यर्थः ॥ धर्ममात्रंवस्तुमात्रंनस्थायि
किंचित्तस्याधिष्ठानमस्तीतिमात्रस्यार्थः तर्हिकथंविछेदोनोपल
भ्यतेतत्राह ॥ निरंतरमितिनैरंतर्येणोत्पद्यमानमित्यर्थः ॥ य
दिसर्वंक्षणिकमेव कथंतर्हितदेवेदमितिसोहमितिचदृश्यद्रष्टृवि
षयंप्रत्यभिज्ञानंघटतइत्याशंक्यअतिसादृश्यादित्याह ॥ सादृ
श्यादिति॥तद्धीस्तदेवेदमितिमतिस्तच्छांतिस्तस्यस्थायित्वमति
भासस्यज्ञानज्ञेयगतस्यतन्मूलस्याविवेकस्यच शांतिरस्तमयः
प्रतिभासनिवृत्तिरेवपुरुषार्थतामोक्षइत्यर्थः ॥ २३ ॥

स्वाकारान्यावभासं च येषां रूपा
दि विद्यते ॥ येषां नास्ति ततश्चा
न्यत्पूर्वासंगतिरुच्यते ॥ २४ ॥ ॥

सिद्धांतीदूषणविभागज्ञानायबौद्धमतभेदंविविच्यदर्शयति ॥
स्वाकारेति ॥ स्वाकारस्यान्येनज्ञानेनावभासोस्यास्तीतिस्वा

कारान्यावभासंरूपादिबाह्यंवस्तुयेषांबौद्धानांमतेविद्यते ॥ ये षांचज्ञानमात्रास्तित्ववादिनांमतेततोऽवभासाज्ज्ञानादन्यद्बाह्यं रूपादिनास्तिपूर्वार्द्धगतचकाराद्येषांमतेविज्ञानमपिनास्तिशून्य मेवसर्वमितितत्रपूर्वासंगतिर्बाह्यार्थसत्त्ववादस्यासंगतिरघटमा नतातावदुच्यतेइतिप्रतिजानीतइतियोजना ॥ २४ ॥

**बाह्याकारत्वतो ज्ञप्तेः स्मृत्यभावः सदा क्षणात्॥क्षणिकत्वाच्च संस्कारं नैवाधत्ते क्वचित्तुधीः ॥ २५ ॥**

तन्मतस्यासंगतिंप्रतिपादयति ॥ बाह्येति ॥ ज्ञप्तेर्ज्ञानस्यैव बाह्याकारत्वतोबाह्यवस्त्वाकारत्वप्रसंगादित्यक्षरार्थः ज्ञेयस्यो त्पत्तेःप्राक्तावत्ज्ञानसंबंधोनास्तिउत्पन्नस्यचस्वरसभंगुरत्वा त्कर्मकारकतयाज्ञानात्प्रागवस्थानाभावादज्ञानेन संबंधानिरूप णाच्चप्रत्यक्षानुभवविरोधान्नित्यानुमेयत्वकल्पनानुपपत्तेश्चपारि शेषात्ज्ञानस्यैवाकारोविषयइतिविज्ञानमात्रास्तित्ववादिमतप्रवे शइतिभावः ॥ किंचानुभवितुरपितेमतेक्षणिकत्वादन्यानुभूतेऽ न्यस्यस्मृत्यदर्शनादनुभूतविषयस्मृत्यभावश्चप्रसज्येतेत्याह ॥ स्मृत्यभावइति ॥ क्षणात्क्षणिकत्वात्सदास्मृत्यभावःप्रसज्येते त्यर्थः ॥ स्मृतिहेतुसंस्कारोपितेदुर्लभइत्याह ॥ क्षणिकत्वादि ति धीःक्वचिदपिसंस्कारंनैवाधत्ते ॥ ननिक्षिपति ॥ सर्वस्यक्ष णिकत्वादित्यर्थः ॥ चशब्दान्नस्वात्मन्यपिस्वस्यापिक्षणिक त्वादित्यर्थः ॥ २५ ॥

**आधारस्याप्यसत्त्वाच्च तुल्यतानि**

निंमित्ततः ॥ स्थाने वा क्षणिक
त्वस्य हानं स्यान्न तदिष्यते॥२६॥

कचिदित्युक्तंस्फुटयति ॥ आधारस्येति ॥ यत्रसंस्कारआधातव्यआत्मन्यंतःकरणेवातस्याप्याधारस्यसंस्काराधानकालेऽसत्त्वाच्चस्मृत्यभावइत्यन्वयः यदुक्तंसादृश्यनिबंधनोभ्रमएवप्रत्यभिज्ञानमितितद्दूषयति ॥ तुल्यतेति ॥ इतआरभ्यक्रियमाणंदूषणंक्षणिकविज्ञानमात्रवादेपिसमानंज्ञेयं तुल्यतानिमित्ततइत्येकंपदं तुल्यतायाःपूर्वापरक्षणयोःसदृशत्वस्यनिमित्ताभावादित्यर्थः ॥ गुणैरवयवैर्वापिसामान्यंसादृश्यव्यवहारनिमित्तंतद्विज्ञानानांनास्तिनिर्गुणत्वान्निरवयवत्वाच्च॥तथापूर्वोत्तरक्षणयोर्द्रष्टुरेकस्यासत्त्वाच्च नसादृश्यसिद्धिरतस्तुल्यतायाअसिद्धेर्नतन्निबंधनंप्रत्यभिज्ञानमित्यर्थः ॥ अथपूर्वापरक्षणसादृश्यद्रष्टास्थायीकश्चिदास्थीयतेतत्राह ॥ स्थानेवेति ॥ तंत्क्षणिकत्वहानंनेष्यतेत्वयेतिशेषः ॥ २६ ॥

शांतेश्चायत्नसिद्धत्वात्साधनोक्तिर
नर्थिका ॥ एकैकस्मिन् समाप्तत्वा
च्छांतेरन्यानपेक्षता ॥ २७ ॥ ॥

यत्तुक्षणिकत्वादिभावनयास्थायित्वादिभ्रांतिशांतिर्मुक्तिरित्युच्यतेबौद्धैस्तदपिनोपपद्यतइत्याह ॥शांतेश्चेति ॥ शांतेरयत्नसिद्धत्वमेवसाधयति ॥ एकैकस्मिन्निति ॥ भावानामेकैकस्मिन्क्षणेसमाप्तत्वात्संतानस्यचावस्तुत्वादेकैकस्मिंश्चभ्रांत्यभावाच्छांतेरन्यनिरपेक्षतासिद्धाऽतस्तत्साधनविधानोक्तिर्निरवकाशेत्यर्थः ॥ २७ ॥

अपेक्षा यदि भिन्नेपि परसंतान इ
ष्यतां ॥ सर्वार्थै क्षणिके कस्मिंस्त
थाप्यन्यानपेक्षता ॥ २८ ॥ ॥

किंचास्मिन्मतेलोकेपिसाध्यसाधनभावोनघटतइत्याह ॥ अपेक्षायदीति ॥ कार्यकारणलक्षणानामत्यंतविलक्षणत्वाद्भिन्नेप्यत्यंतंव्यावृत्तेपि क्षीरेयदिदध्नोपेक्षातथापरसंतानेसिकतादावपिदध्नोपेक्षेष्यतांअत्यंतभेदाऽविशेषात्कथंनेष्यतइत्यर्थः ॥ तथाचसिकताभ्योपिदधिजायेतेत्यतिप्रसंगइतिभावः ॥ प्रसिद्ध्यवष्टंभेनातिप्रसंगपरिहारशंकांतदीयामनूद्यनिराकरोति ॥ सर्वार्थइति ॥ सर्वस्यजनस्यार्थैर्थ्यमानेकार्यकारणभावेनस्थितेदधिक्षीरादौवस्तुनिक्षणिकेपिकस्मिंश्चित्क्षीरएवकस्यचिद्दध्नोपेक्षानसर्वत्रेतिलोकप्रसिद्धेर्नातिप्रसंगइतिचेदितिशंकानुवादार्थः ॥तथापिप्रसिद्ध्याश्रयणेपिक्षणिकपक्षेन्यानपेक्षतैवेतिपरिहारभागार्थः ॥ २८ ॥

तुल्यकालसमुद्भूताावितरेतरयोगि
नौ ॥ योगाच्च संस्कृतो यस्तुसोन्यं
हीक्षितुमर्हति ॥ २९ ॥ ॥

तत्रहेतुमाह ॥ तुल्यकालेति ॥ यौभावौतुल्यकालसमुद्भूतावेककालेनलब्धात्मकौइतरेतरयोगिनौपरस्परंसंबद्धौचयथापर्जन्यांकुरौतयोर्मध्येयस्तुभावोंकुरलक्षणःपर्जन्ययोगात्संस्कृतश्चलब्धातिशयश्चभवेत्सहिखल्वन्यमुपकारिणमीक्षितुमपेक्षितुमर्हति नक्षणिकस्तथाप्रसिद्ध्यभावादतःक्षणिकानांभिन्नकाल त

यापरस्परसंबंधाभावेनोपकार्योपकारकत्वायोगान्नापेक्षाघटयितुंशक्यतइतिभावः ॥ २९ ॥

**मृषाध्यासस्तु यत्र स्यात्तन्नाशस्तत्र नो मतः ॥ सर्वनाशो भवेद्यस्य मोक्षः कस्य फलं वद ॥३०॥ ॥**

तदेवंक्षणिकमतंनिराकृत्यशून्यमतंनिराकरिष्यन्नादौस्वमतसामंजस्यमुपन्यस्यति मृषेति ॥ यद्वावेदांतमतेपिब्रह्मात्मनोनाधेयातिशयत्वात्क्षणिकमतइवतुल्यामोक्षानुपपत्तिरित्याशंक्यपरमार्थतोऽतिशयायोगेपिस्थायित्वात्फलत्वोपपत्तेर्मैवमित्याह ॥ मृषेति ॥ यत्राधिष्ठानेब्रह्मात्मनिकर्तृत्वादिसंसाराध्यासोमृषामिथ्या॥ अथवामृषाध्यासोऽविद्यानिबंधनोभ्रमःकर्तृत्वादिसंसारप्रतिभासोयत्रस्यादितियोजना ॥ तत्राहंब्रह्मास्मीतिविद्ययातत्रैवतन्नाशोऽध्यस्तनाशइतिनोमतोस्माकंमतमित्यर्थः ॥ तथाचयोऽज्ञानाद्बंधानुभववांस्तस्यज्ञानाद्बंधनिवृत्त्याशुद्धस्वरूपानुभवःपुरुषार्थइतिवेदांतिमतंसमंजसमितिभावः॥ इदानींशून्यमतेदोषमाह ॥ सर्वनाशइति॥अनुभवितुरभावात्कस्यपुरुषार्थः ॥ अधिष्ठानारोप्ययोरुभयोरपिनाशेफलाभावात्फलासिद्धेर्मोक्षासिद्धिरितिभावः ॥ ३० ॥

**अस्ति तावत्स्वयं नाम ज्ञानं वात्मान्यदेव वा ॥ भावाभावज्ञतस्तस्य नाभावस्त्वधिगम्यते ॥३१॥**

सर्वनाशएवमोक्षोबलादापततिपरमार्थस्वभावस्यास्तित्वेप्र माणाभावादित्याशंक्याह॥अस्तीति॥स्वयंनामास्तीत्यविवादंस र्ववादिनांसचज्ञानंवाआत्मावान्यच्छून्यंवेतिपरंविकल्पस्तस्या भावस्तुनाधिगम्यतेशून्यतातुनप्रामाणिकीत्यर्थः ॥ कुतइतित त्राह ॥ भावाभावज्ञतइति ॥ लोकव्यवहारसिद्धार्थानांभावा भावाभिज्ञत्वादन्यथास्थिरस्यकस्यचित्साक्षिणोऽभावेसर्वव्य वहारलोपप्रसंगइत्यर्थः ॥ ३१ ॥

येनाधिगम्यतेऽभावस्तत्सतस्यात्त
न्नचेद्भवेत् ॥ भावाभावानभिज्ञत्वं
लोकस्य स्यान्न चेष्यते ॥ ३२ ॥

तस्याप्यभावःकस्यचिद्भातीत्याशंक्ययस्यभातितस्यैवसत्त्व प्राप्तेर्नशून्यत्वशंकावकाशइतिपरिहरति येनेति ॥ अथवाउक्त मेवार्थंप्रपंचयति ॥ येनेति ॥ येनाभावोधिगम्यतेसर्वस्यतत्सदे वस्याद्विपक्षेदोषमाह ॥ तन्नचेदित्यादिना ॥ अस्तुलोकस्य भावाभावानभिज्ञत्वमितिचेन्नेत्याह ॥ नचेष्यतइति ॥ केना पिसोभिज्ञोनिराकर्तुंनशक्यतेनिराकर्तुरेवतत्त्वरूपत्वात्तस्यच सत्त्वात्तस्यापन्हववचनंस्वानुभवविरुद्धमेवेत्यर्थः ॥ ३२ ॥

सदसत्सदसच्चेति विकल्पात्प्राग्य
दिष्यते ॥ तदद्वैतं समत्वात्तु नित्यं
चान्यद्विकल्पितात् ॥ ३३ ॥

यद्यपिभावाभावविभागज्ञं किंचिदस्तीत्यवगतंतथापितत्की दृशमितिविशेषतोनिर्द्धारणेकारणंनास्तीत्याशंक्य तत्स्वरूपमुपपादयति ॥ सदसदिति ॥ साक्षिस्वरूपंजगच्चसदसद्रूपमितिचयोविकल्पोविवादस्तस्मात्प्रागेवासिद्धं निरालंबनविकल्पानुपपत्तेर्यत्स्वरूपमिष्यतेतत्त्वद्वैतं तत्रहेतुः समत्वादिति ॥ विकल्पात्प्राग्वैषम्यहेत्वभावादित्यर्थः ॥ द्वैतजडविलक्षणत्वंतत्स्वरूपमभिधायाविनाशित्वंविशेषांतरमाह ॥ नित्यंचेति ॥ अनृतविलक्षणत्वेनसत्यत्वंचविशेषांतरमाह ॥ अन्यद्विकल्पितादिति ॥ विकल्पात्प्राग्यदिष्यतइत्यत्रस्वतःसिद्धत्वोक्त्याज्ञानस्वरूपत्वमुक्तंअद्वैतमित्यानंत्यमुक्तं ॥ नित्यमितिकूटस्थत्वोक्त्या दुःखाभावस्यसूचितत्वात्तदविनाभूतानंदरूपताध्वनिता॥ तथाचसत्यज्ञानानंतानंदरूपमात्मतत्त्वमित्यनुभवादेवसिद्धमिति न तत्रकारणांतरंमृग्यमितिभावः ॥ ३३ ॥

**विकल्पोद्भवतोऽसत्त्वं स्वप्नदृश्यवदिष्यतां॥ द्वैतस्य प्रागसत्त्वाच्च सदसत्त्वादिकल्पनात्॥ ३४ ॥ ॥**

नानाविधेद्वैतेप्रतीयमानेकथमद्वैतमात्मतत्त्वमनुभूयतइत्यतआह ॥ यद्वा द्रष्टुःसत्यत्वमुपपाद्यदृश्यस्यविकल्पात्मकतयानृतत्वंप्रतिपादयति ॥ विकल्पोद्भवतइति॥ द्वैतस्यासत्त्वंपरमार्थत्वाभावइष्यतां ॥ कुतोविकल्पोद्भवतोविकल्परूपेणोद्भूतत्वात्स्वप्नदृश्यवदितियोजना द्वैतंनपरमार्थंसत् दृश्यत्वात्स्वप्नदृश्यवदित्यर्थः ॥हेत्वंतरमाह॥ प्रागिति ॥सदसत्त्वादिविकल्प

नात्प्रागसत्त्वाच्चस्वप्नदृश्यवदितिसंबंधः ॥ नहिद्वैतस्याज्ञातस त्त्वेप्रमाणमस्तीतिभावः ॥ ३४ ॥

वाचारंभणशास्त्राच्च विकाराणांत्व
भावता ॥ मृत्योः समृत्युमित्या
देर्मम मायेति च स्मृतेः ॥ ३५ ॥

न्यायतोद्वैतमिथ्यात्वमुपपाद्य शास्त्रादपितन्मिथ्यात्वमुपप न्नमित्याह ॥ वाचारंभणेति ॥ वाचारंभणंविकारोनामधेयंइति श्रुतिशास्त्राद्विकाराणामभावतासिद्धेतिशेषः ॥ वाचारंभणश ब्दोह्यनृतत्ववचनोवगम्यते मृत्तिकेत्येवसत्यमितिकारणेसत्य त्वावधारणादित्यर्थः ॥ मृत्योःसमृत्युमितिशास्त्रेणद्वैतदर्शनस्य निन्दितत्वात्सत्यत्वेद्वैतस्यतदयोगादर्थादनृतत्वन्तस्योक्तमित्य र्थः॥ आदिशब्दान्नेहनानास्तिकिंचनेत्यादिसाक्षाद्वैतापवादकंशा स्त्रंगृह्यते॥ मममायेत्यत्रमामेवयेप्रपद्यंतेमायामेतांतरंतितेइति गुणमय्याःसकार्यायाःमायायाः परमात्मज्ञाननिवर्त्यत्वस्यभग वतोऽनुशासनात्सत्यत्वेतदनुपपत्तेर्म्मायिकत्वंद्वैतस्यसिद्धमित्य र्थः ॥ ३५ ॥

विशुद्धिश्चात एवास्य विकल्पाच्च
विलक्षणः ॥ उपादेयो न हेयोऽत
आत्मा नान्यैरकल्पितः ॥ ३६ ॥

तदेवंश्रुतियुक्तिभ्यांद्वैतमिथ्यात्वप्रतिपादनेनात्मनोऽद्वितीय त्वेदृढीकृतेसत्त्वशुद्धिकारणाभावात्तस्यविशुद्धिरपिसिध्यतीत्या ह ॥ विशुद्धिरिति ॥ अस्यात्मनोविशुद्धिःधर्माधर्मतत्फलसं

स्पर्शाभावोऽतएवद्वैतस्यानृतत्वादेवसचयतोविकल्पाद्विलक्षण स्तद्विपरीतस्वभावोतएवात्मानोपादेयोहेयोवाभवतिहानोपादानेहिमूर्त्तविषयेनामूर्त्तेप्रत्यगात्मनितेसंभवतइत्यर्थः ॥ किंचान्यैरकल्पितोन्यैःकल्पयितुमशक्यत्वादपिविशुद्धएवात्मेत्यर्थः ॥ नहिसर्वकल्पनाधिष्ठानंकेनचित्कल्पयितुंशक्यते ॥ अतोनित्यशुद्धइतिभावः ॥ ३६ ॥

अप्रकाशो यथादित्ये नास्ति ज्यो
तिःस्वभावतः ॥ नित्यबोधस्वरूप
त्वान्नाज्ञानं तद्वदात्मनि ॥ ३७ ॥

कस्मादात्माकल्पितोनभवतीत्याशंक्यकल्पनाहेतोरज्ञानस्यवस्तुतआत्मन्यभावादित्याह ॥ अप्रकाशइति ॥ अनात्मनोऽज्ञानकल्पितत्वादेवतत्रतदभावइतिद्रष्टव्यं ॥ ३७ ॥

तथाविक्रियरूपत्वान्नावस्थांतरमा
त्मनः ॥ अवस्थांतरवत्त्वे हि नाशो
स्यस्यान्न संशयः ॥ ३८ ॥ ॥

यथानित्यबोधस्वरूपत्वादज्ञानमात्मनिवस्तुतोनास्ति तथा सर्वविक्रियारहितस्वभावत्वादवस्थांतरंकूटस्थताप्रच्युतिरूपंतस्यनास्तीत्याह ॥ तथाविक्रियेति ॥ विपक्षेदोषमाह ॥ अवस्थांतरवत्त्वेहीति ॥ ३८ ॥

मोक्षोऽवस्थांतरं यस्य कृतकः स
चलो ह्यतः ॥ न संयोगो वियोगो

वा मोक्षो युक्तः कथंचन ॥ ३९ ॥

मोक्षस्यावस्थांतरत्वात्कथमवस्थांतराभावइतितत्राह ॥ मोक्षइति ॥ यस्यवादिनोमतेमोक्षोवस्थांतरमात्मनःस्यात्तस्यमते कृतकोमोक्षःस्यात्प्रागवस्थायोगित्वानुपपत्तेरतःसमोक्षश्चलोऽनित्यएवस्यादित्यपुरुषार्थतापत्तिरित्यर्थः ॥ माभूदवस्थांतरंमोक्षस्तथाऽपि ब्रह्मणःसंयोगोवा प्रकृतेर्वियोगोवा मोक्षोभविष्यतीतिमतांतरमाशंक्यप्रत्याह ॥ नसंयोगइति ॥ ३९ ॥

संयोगस्याप्यनित्यत्वाद्वियोगस्य तथैव च॥ गमनागमने चैव स्वरूपं तु न हीयते ॥ ४० ॥ ॥

अयुक्तत्वेहेतुमाह ॥ संयोगस्येति ॥ कृतकस्यानित्यस्य नियमादित्यर्थः ॥ ननु जीवस्यसंसारदेशात्परमात्मनोवास्वोपासकानुग्रहायतंप्रत्यागमनंमोक्षइत्याशंक्याह ॥ गमनागमनेचेति ॥ नमोक्षोयुक्तइतिपूर्वेणानुषंगःजीवपरयोर्द्वयोरप्यविक्रियत्वाद्गमनागमनायोगादित्यर्थः ॥ परमतेदोषमुक्त्वास्वमतेनिर्दोषतामाह ॥ स्वरूपंत्विति ॥ नहीयतेनविनश्यति अतआत्मस्वरूपमेवमोक्षोयुक्तइत्यर्थः ॥ ४० ॥

स्वरूपस्यानिमित्तत्वात्सनिमित्ता हिचापरे ॥ अनुपात्तं स्वरूपं हि स्वेनात्यक्तं तथैव च ॥४१॥ ॥

आत्मस्वरूपमोक्षस्यनित्यत्वेऽकार्यत्वेहेतुमाह ॥ स्वरूप

स्येति॥नास्तिनिमित्तंकारणंयस्यतदनिमित्तंतस्यऽभावोनिमित्तत्वंतस्मादकार्यत्वादित्यर्थः ॥ अपरेअवस्थांतरादयःसनिमित्ता हीत्यतोऽनित्याःस्युरित्यर्थः स्वरूपस्यानिमित्तत्वंतल्लक्षणोक्त्या साधयत्यनुपात्तमिति ॥ स्वरूपंहिनामतद्यत्स्वेनान्येनवानोपात्तंउपार्जितंनभवतितथास्वेनान्येनवात्यक्तमितिनभवति ॥ नह्युपादेयंवावस्त्रादेःस्वरूपत्वंदृष्टमतोनागंतुकंवस्तुस्वरूपं किंतु नित्यमेवेत्यर्थः ॥ ४१ ॥

स्वरूपत्वान्न सर्वस्य त्यक्तुं शक्यो ह्यनन्यतः ॥ गृहीतुं वा ततो नित्योऽविषयत्वात्पृथक्कृतः ॥४२॥

उक्तंस्वरूपलक्षणमात्मनिलक्ष्येयोजयति स्वरूपत्वादिति॥ सर्वस्याकाशादेःस्वरूपत्वादारोपितसर्पादेरज्ज्वादिवंतसर्वस्यात्मभूतत्वात्त्यक्तुंगृहीतुंवानशक्यआत्मा कुतः हियस्मादनन्यतोभेदाभावादित्यर्थः ॥ हेयोपादेयत्वाभावेसिद्धेफलितमाह ॥ आत्मनउपादानहानयोरयोगेपुनरपिक्रमेहेतुद्वयमाह ॥ अविषयत्वात्पृथक्कृतइति ॥ नह्यविषयउपादीयतेस्वरूपंवात्यज्यतइतियुज्यतइत्यर्थः ॥ ४२ ॥

आत्मार्थत्वाच्च सर्वस्य नित्य आत्मैव केवलः॥ त्यजेत्तस्मात्क्रियाः सर्वाः साधनैः सह मोक्षवित् ॥४३॥

आत्मनोनित्यत्वेहेत्वंतरमाह ॥ आत्मार्थत्वाच्चेति ॥ स

र्वस्यागमापायिनआत्मार्थत्वादात्मभोग्यत्वात्तेष्वनागमापाय्य भोक्तात्मानित्यएवेतियोजना ॥ केवलोनिरूपाधिरित्यर्थःउपा धितोऽप्यस्यविशेषोनास्तीत्यर्थः ॥ यस्मादात्मानित्योन्यत्सर्व मनित्यमात्मार्थंसर्वंचस्वात्मन्यवस्थानंमोक्षइतिसिद्धंतस्मान्मु मुक्षुणाससाधनंसर्वंकर्मत्याज्यमित्याह॥त्यजेदिति ॥ ४३ ॥

आत्मलाभः परो लाभ इति शास्त्रो पपत्तयः ॥ अलाभोऽन्यात्मलाभ स्तु त्यजेत्तस्मादनात्मतां ॥ ४४॥

इतोपिमुमुक्षुणाक्रियात्याज्येत्याह ॥ आत्मलाभइति ॥ आत्मलाभान्नपरंविद्यतइतिस्मृतिःशास्त्रंसर्वस्वत्यागेनाप्यात्म संरक्षणप्रवृत्तिदर्शनमुपपत्तिः बहुवचनप्रयोगादनेकत्वंशास्त्रोप पत्तीनांसूचयति ॥ आत्मलाभस्यनित्यसिद्धत्वात्किमिदम पूर्वमिवोच्यतेइत्यतआह ॥ अलाभइति॥अन्यास्मिन्स्वाज्ञान परिनिष्पन्नेहंकारादावभेदेनात्मस्फुरणमन्यात्मलाभउच्यतेस तुलाभोनभवति संसारदुःखहेतुत्वात् स्वतःसिद्धपरमानंदावि र्भावप्रतिबंधकत्वात् प्रत्युतक्षतिरेवेत्यर्थः॥ तस्मादनात्मतामहं काराद्यात्माभिमानितामविद्याध्यारोपितांप्रमाणजनितब्रह्मात्म ज्ञानेनाज्ञानबाधनद्वारात्यजेदित्यर्थः ॥ ४४ ॥

गुणानां समभावस्य भ्रंशो न ह्यु पपद्यते ॥ अविद्यादेः प्रसुप्तत्वान्न चान्यो हेतुरुच्यते ॥ ४५ ॥ ॥

आत्मतत्त्वब्रह्मस्वरूपावगमआत्मलाभएवपरमोलाभःपरमपुरुषार्थइत्यात्मैक्यज्ञानंमोक्षसाधनमात्माचाद्वयानंदरूपस्तस्मिन्नज्ञानमूलः संसारोनपरमार्थतइतिस्वमतमभिधायतत्रैव मुमुक्षूणांमतिस्थैर्यायमतान्तरनिराकरणंकर्त्तुमारभमाणोभगवान्भाष्यकारःसांख्यकल्पनांतावन्निराकरोतिगुणानामिति ॥ तत्रयत्प्रधानं त्रिगुणात्मकंस्वतंत्रमचेतनंपुरुषस्यभोगापवर्गार्थं महदादिरूपेणपरिणमतइतिकल्पयंति ॥ तत्तावन्नसंभवति ॥ यतोगुणानांसत्त्वरजस्तमसांसमभावस्यसृष्टिप्राक्कालीनमेलनस्यभ्रंशःप्रच्युतिः पूर्वावस्थात्यागेनावस्थांतरापत्तिरूपः परिणामोदुर्घटत्वान्नोपपद्यते कुतइतिचेत्तत्रवक्तव्यं किंनिर्हेतुकएवगुणपरिणामइष्यतेसहेतुकोवा नाद्यः ॥ सदापरिणामप्रसंगात् ॥ द्वितीयेप्यविद्याप्राप्यदृष्टपुरुषाएवहेतुस्तदन्योवापरमेश्वरो नाद्यइत्याह ॥ अविद्यादेरिति ॥ तस्यामवस्थायामविद्यादेः प्रसुप्तत्वाल्लीनत्वात्पुरुषाणामुदासीनत्वान्नतन्निमित्तः साम्यावस्थाभ्रंशइत्यर्थः ॥ नद्वितीयइत्याह नचान्यइति ॥ अविद्यादिभ्योन्यपरमेश्वरांगीकारेऽपसिद्धांतप्रसंगइत्यर्थः ॥ ४५ ॥

**इतरेतरहेतुत्वे प्रवृत्तिः स्यात्सदा न वा ॥ नियमो न प्रवृत्तीनां गुणेष्वात्मनि वा भवेत् ॥ ४६ ॥**

गुणानामन्योन्यंप्रवृत्तिहेतुत्वंस्यादितिचेत्तत्राह॥इतरेतरेति॥ अस्मिन्पक्षेप्रयोजकांतरप्रतीक्षानपेक्षणात्सदाप्रवृत्तिः परिणामःस्यान्नवास्याद्विशेषाभावादित्यर्थः ॥ अथक्रमेणोत्पत्तिस्थितिसंहाराणांप्रसिद्धत्वान्नसदातत्प्रसंगइतितत्राह ॥ नियम

इति ॥ नियम्यतेनेनेतिनियमोनियामकोहेतुःप्रवृत्तीनांगुण कार्योत्पत्त्यादीनांगुणेषुसत्त्वादिष्वात्मनिपुरुषेवा यतोनभवेन्न संभवेदतःसदाप्रवृत्तिर्वास्यादितियोजना ॥ नहिगुणपुरुषाति रिक्तंकिंचित्तत्त्वमभ्युपगतमस्तिसांख्यैर्यद्गुणेषुवापुरुषेषुवास्थि त्वाप्रवृत्त्यादिनियामकंस्यादित्यर्थः ॥ ४६ ॥

विशेषो मुक्तबद्धानां तादर्थ्येन च युज्यते॥अर्थार्थिनोस्त्वसंबंधो नार्थी ज्ञो नेतरोपि वा ॥ ४७ ॥

यथाकथंचिदस्तुवाप्रधानप्रवृत्तिस्तथापिदोषप्रसक्तिःपरिह र्तुंनपार्यतइत्याह ॥ विशेषइति ॥ तादर्थ्येप्रधानस्यपुरुषार्थत्वे सतिबद्धमुक्तानांविशेषोनयुज्यतेनहिसर्वपुरुषान्प्रतिसाधारणेप्र धानस्यैकस्यव्यापारेकेचिद्बद्धाः केचिन्मुक्ताइतिव्यवस्थोपपद्य ते॥तथाचसर्वएवसदाबद्धामुक्तावास्युरित्यर्थः ॥ किंचास्मिन्म तेऽर्थार्थिनोःशेषशेषिणोःसंबंधश्चनयुज्यतइत्यन्वयः अर्थ्यतेप्रा र्थ्यतेइत्यर्थः सुखतत्साधनरूपःपदार्थःसोभिलषितोविद्यतेय स्यसोर्थी तयोःसम्बन्धउपकार्योपकारकभावलक्षणःसप्रधान वादेनयुज्यतेनघटतइत्यर्थः कुतइत्यतआह ॥ नेति ज्ञोज्ञा नैकस्वभावः पुरुषोनार्थयुक्तस्तस्यासंगत्वनिर्विशेषत्वाभ्युपग मान्नेतरोपिवाप्रधानाख्योपिनार्थीजडत्वादेवेत्यर्थः तस्मात्प्रधा नस्यपरार्थत्वकल्पनमयुक्तमितिभावः ॥ ४७ ॥

प्रधानस्य च पारार्थ्ये पुरुषस्यावि

कारतः ॥ न युक्तं सांख्यशास्त्रेपि विकारेपि न युज्यते ॥४८॥ ॥

एवंप्रधानस्यपुरुषान्प्रतिप्रवृत्तिमंगीकृत्याव्यवस्थोक्तासापीदानींनघटतइतिसाधयति ॥ प्रधानस्येति ॥ पुरुषस्याविकारतःप्रधानकृतातिशययोगित्वलक्षणविकाररहितत्वात्प्रधानस्यपारार्थ्यंचनयुक्तमितियोजना ॥ नह्यनुविधेयकृतातिशयायोगिनिस्वामिन्युपपद्यतइत्यर्थः ॥ यदिपुरुषस्यप्रधानंप्रतिस्वाम्योपपत्तयेविकारोप्यंगीक्रीयतेतदांगीकृतेपिविकारेप्रधानस्यपारार्थ्यंनयुज्यतेविकारवतोनित्यत्वनियमान्नित्यप्रधानस्वाम्यायोगादित्यर्थः ॥ सांख्यशास्त्रेपीत्यपिशब्दान्नवेदबाह्यशास्त्रेष्वेवाव्यवस्थाकिंतुसांख्यशास्त्रेपीतितस्यापिपुंबुद्धिमूलत्वंनसम्यग्वेदमूलत्वमस्तीतिद्योत्यते ॥ ४८ ॥

संबंधानुपपत्तेश्च प्रकृतेः पुरुषस्य च॥मिथोयुक्तं तदर्थत्वं प्रधानस्याचितित्वतः ॥ ४९ ॥

प्रधानपुरुषयोः संबंधाभावमुक्तंप्रपंचयतिसंबंधानुपपत्तेश्चेति पुरुषस्यासंगोदासीनस्वभावत्वात्प्रकृतेःजडत्वेनस्वतःप्रवृत्त्यनुपपत्तेः तयोर्मिथःसंबंधानुपपत्तेःप्रधानस्यतादर्थ्यंपुरुषार्थत्वमयुक्तंयुक्तिशून्यंअचितित्वतोजडत्वात् ॥ प्रधानस्यभृत्यवदुपकारकत्वासंभवादित्यर्थः ॥ अतःप्रधानपुरुषयोरर्थार्थित्वकल्पनानयुक्तेतिभावः ॥ ४९ ॥

क्रियोत्पत्तौ विनाशित्वं ज्ञानमात्रे च पूर्ववत् ॥ निर्निमित्ते त्वनिर्मोक्षः प्रधानस्य प्रसज्यते ॥ ५० ॥

पुरुषस्याविकारतइत्युक्तमविकारित्वंस्पष्टयति ॥ क्रियोत्पत्ताविति ॥ पुरुषेयत्किंचित्क्रियोत्पत्तौअभ्युपगम्यमानायांविनाशित्वंतस्यप्रसज्येतयक्रियावत्तदनित्यंयथाघटादीतिव्याप्तिदर्शनात्नित्यश्चपुरुषोभ्युपगम्यतेसांख्यैरित्यर्थः ॥ ननुनपरिस्पंदःपरिणामोवापुरुषस्यक्रियाभ्युपगम्यतेयेनानित्यत्वप्रसंगः किंतुज्ञानमेवक्रियाभ्युपगम्यतेइतिचेत्तर्हिजन्यमजन्यंवाज्ञानमभ्युपेयतेनोभयथापिघटतइत्याह ॥ ज्ञानमात्रे चपूर्ववदिति ॥ जन्यज्ञानयोगेविकारित्वादनित्यत्वापत्तिरजन्यज्ञानयोगित्वेनप्रधानंप्रतिस्वाम्यसंभवइत्युक्तदोषापत्तिरित्यर्थः ॥ तस्मात्पुरुषस्यासंगोदासीनत्वादनाधेयातिशयत्वात्प्रवर्तकत्वानुपपत्तेरन्यस्यचहेत्वंतरस्यप्रधानविकारातिरिक्तस्यानभ्युपगमात्प्रलयेचप्रधानविकाराणामलब्धात्मतयाप्रवर्त्तकत्वायोगान्निर्निमित्तैवप्रधानप्रवृत्तिरंगीकार्या ॥ तथाचाव्यवस्थासुस्थैवेतिप्रतिपादयन्नुपसंहरतिनिर्निमित्तइति ॥ प्रधानस्यव्यापारे निर्निमित्तेऽभ्युपगम्यमानेतस्यसर्वदाप्रवृत्तिसंभवात्दृक्शक्तिमतांपुरुषाणांतद्दर्शनस्यावर्जनीयत्वादनिर्मोक्षःप्रसज्येतअतइत्थमव्यवस्थितंसांख्यशास्त्रंनमुमुक्षुभिःश्रद्धेयमितिभावः॥

नप्रकाश्यं यथोष्णत्वं ज्ञानेनैवं सु

**खाद्य: ॥ एकनीडत्वतोऽग्राह्या: स्यु: कणादादिवर्त्मनां ॥ ५१ ॥**

निर्गुणपुरुषमतप्रक्रियांनिराकृत्यसगुणा:पुरुषाइतिवैशेषिकमतप्रक्रियांदूषयति ॥ नप्रकाश्यमित्यादिना आत्मगतेनज्ञानेनात्मगता:सुखादयोगुणा:प्रकाश्यंतइतिहितेमन्यंतेतन्नोपपद्यतेतथाहियथोष्णत्वमग्निनिष्ठमग्निनिष्ठेनप्रकाशेननप्रकाश्यंप्रकाशार्हंनभवति ॥ एकाश्रयत्वादेवंसुखादयोगुणाआत्मनिष्ठेनज्ञानेनाग्राह्यानग्राह्या:स्यु:कुत:एकनीडत्वत:एकाश्रयत्वात् ॥ कणादादिवर्त्मनांमतइत्यर्थ: ॥ विषयविषयिणो:समानदेशत्वेग्राह्यमिदंग्राहकमिदमितिचभेदनियमानासिद्धेरितिभाव:॥५१॥

**युगपत्समवेतत्वं सुखविज्ञानयोरपि ॥ मनोयोगैकहेतुत्वाद्ग्राह्यत्वं सुखस्य च ॥ ५२ ॥ ॥**

नकेवलमेकाश्रयत्वादेवज्ञानसुखादीनांभास्यभासकत्वानुपपत्तिरपितुयौगपद्यासंभवादपीत्याह ॥ युगपदिति नेतिपूर्वश्लोकादनुवर्त्तनीयं ॥ तथाचायमर्थ: ॥ सुखविज्ञानयोर्नयुगपत्समवेतत्वंसंभवति ॥ कुत:मनोयोगैकहेतुत्वान्मन:संयोगस्यासमवायिकारणस्यैकमेवात्मगुणंप्रतिहेतुत्वाभ्युपगमात्तथाचसुखासमवायिकारणमन:संयोगनाशेसुखस्यनाशात्संयोगांतरासमवायिकारणज्ञानेनसुखस्यनग्राह्यत्वंमत्यक्षतउपपद्यतेइतिअपिशब्दातसमवायोपिनप्रमाणयुक्तिपथमवतरतीतिद्योत्यते ॥ चशब्दादात्ममनसोर्निरवयवयो:प्रदेशाभावादात्म

नोरिवसंयोगानुपपत्तिःसंयोगेवाविभोरात्मनोविभागानुपपत्ति स्तदभावेसंयोगांतरानुपपत्तौज्ञानादिकार्यक्रमानुपपत्तिःकार्या णांअसमवायिकारणदेशानतिवर्त्तित्वनियमदर्शनादन्यत्रेहापि तत्प्रसंगेणुपरिमाणमनःसंयोगस्याणुदेशमात्रवर्तितयातत्कार्य स्यापितन्मात्रवर्तित्वेसकलशरीरगतात्मवेदनायाअप्रत्यक्षत्व प्रसंगइत्यादिदूषणगणःसमुच्चीयते ॥ ५२ ॥

**तथान्येषां च भिन्नत्वाद्युगपज्ज**
**न्म नेष्यते ॥ गुणानां समवेतत्वं**
**ज्ञानं चेन्न विशेषणात् ॥ ५३ ॥**

सुखवदेवदुःखेच्छाद्वेषप्रयत्नानामप्यय[illegible]जन्[illegible]त्यादि त्याह ॥ तथेति ॥ अन्येषांगुणानांभिन्न[illegible]समु[illegible]रवलक्षण त्वाज्ज्ञानसुखयोरिवयुगपज्जन्मनेष्यते [illegible]स्यात्ममनःसंयो गस्यानेककार्यहेतुत्वासंभवस्योक्तत्वादित्यर्थः ॥ चकारादेका श्रययोर्विषयविषयित्वायोगःपूर्वोक्तःसंगृह्यते ॥ माभूज्ज्ञान भास्यत्वंसुखादीनामेकस्मिन्नात्मनिसमवेतत्वमेवतेषांज्ञानंना मेत्याशंक्य ज्ञानेनतेषांविशेषितत्वात्मैवमित्याह ॥ गुणाना मिति ॥ ज्ञातंसुखंज्ञातंदुःखमितिविशिष्टव्यवहारदर्शना दित्यर्थः ॥ ५३ ॥

**ज्ञानेनैव विशेषत्वाज्ज्ञानाप्यत्वं**
**स्मृतेस्तथा ॥ सुखं ज्ञातं मयेत्येवं**
**तवाज्ञानात्मकत्वतः ॥ ५४ ॥ ॥**

एतदेवविशदयति ॥ ज्ञानेनैवेति ॥ ज्ञानेनविशेषत्वादेवज्ञा नाप्यत्वंसुखादीनामेष्टव्यमित्यर्थः ॥ ज्ञानाहितसंस्कारजन्य स्मृतिविषयत्वादपिज्ञानाप्यत्वंसुखादेरेष्टव्यमित्याह ॥ स्मृते स्तथेति ॥ सुखंमयाज्ञातमित्येवंस्मृतेरितिसंबंधः किंचज्ञान विशिष्टात्मसमवेतत्वंसुखादेर्ज्ञानमिष्यते केवलात्मसमवेतत्वं वा नाद्योयुगपत्क्षणिकात्मविशेषगुणानांसमवायासंभवस्योक्त त्वादात्मगतसंख्यापरिमाणादेरपिग्रहणप्रसंगाच्चेत्यभिप्रेत्यद्वि तीयंदूषयति ॥ तवेति ॥ तवमतेआत्मनोज्ञानभिन्नत्वाद्धटवद्द्र व्यमात्रत्वात्तत्समवेतत्वमात्रेणनसुखादिसिद्धिः सर्वस्यजडत्वा दित्यर्थः ॥ ५४ ॥

**सुखादेर्नात्मधर्मत्वमात्मनस्तेऽवि कारतः ॥ भेदादन्यस्य कस्मान्न मनसो वा विशेषतः ॥ ५५ ॥**

ज्ञानसुखादीनामात्मगुणत्वाभ्युपगमेनभास्यभासकत्वासं भवउक्तइदानींतेषामात्मगुणत्वमपिदुर्भणमित्याह ॥ सुखादेरि ति ॥ सुखादेरात्मधर्मत्वंनसंभवतितेतवमतेआत्मनोविकारतो विकारित्वाभावाद्विभुत्वांगीकारेणनित्यत्वाभ्युपगमान्नहिनित्य मनित्यगुणकमितिमांप्रतिदृष्टांतःकोपिविद्यतेऽतोनात्मनोगुण वत्वसिद्धिः ॥ दूरेग्राह्यग्राहकत्वकल्पनेतिभावः ॥ किंचगु णगुणिनोरत्यंतभेदवादिनस्तवमतेअस्यैवात्मनोऽयंसुखादिरि तिनियमोपिदुर्घटइत्याह ॥ भेदादिति ॥ अन्यस्यात्मांतरस्य मनसोवाकस्मात्सुखादयोगुणानस्युरविशेषितोभेदाविशेषादि त्यक्षरार्थः ॥ अयमाशयः ॥ सर्वात्मनांविभुत्वांगीकाराद्यच्छ

रीरावच्छेदेनात्मनिसुखादयोजायंतेतत्रतदासर्वात्मनांसत्त्वात्तद्भेदस्यचतत्रानवगमादस्यैवात्मनोयंसुखादिधर्मोनान्यस्येतिनियन्तुंनशक्यतेनमनः संयोगभेदोनियामकोमनस्यपिसर्वात्मसंबंधस्याविशेषान्नाप्यदृष्टभेदोनियामकस्तस्याप्यात्मधर्मत्वासिद्धेरदृष्टहेतुप्रयत्नादेरपिमनःसंयोगनिमित्तकत्वात्तस्यचसर्वात्मसुविशेषासिद्धेरदृष्टस्यापिनाश्रयविशेषसिद्धिरिति ॥ यत्रकुत्रापिजायमानंसुखादियस्यकस्यापिकस्मान्नस्यात्तथामनसः क्रियावत्वान्मूर्तत्वात्सुखादिदेशाऽव्यभिचाराच्चतस्यैवकस्माद्धर्माः सुखादयोनस्युर्विनिगमनाभावादिति ॥ ५५ ॥

**स्यान्मालाऽपरिहार्या तु ज्ञानं चेज्ज्ञेयतां व्रजेत्॥युगपद्वापि चोत्पत्तिरभ्युपेतातइष्यते ॥ ५६ ॥**

यद्यपिवैशेषिकैर्ज्ञानस्यज्ञानांतरवेद्यत्वमिष्यतेतदप्ययुक्तमनवस्थाप्रसंगादित्याह ॥स्यान्मालेति ॥अयमर्थः येनात्मनःसंयोगेनप्रथमंज्ञानंजायतेतदन्येनसंयोगांतरेणतद्विषयंज्ञानांतरंजायते किंवातेनैवसंयोगेन आद्येदोषमाह ॥ स्यादिति ॥ ज्ञानंचेज्ज्ञेयतांव्रजेत्तदापऽरिहार्याज्ञानमालापरंपरास्याज्ज्ञानानवस्थास्यादित्यर्थः ॥ विषयावभाससमये यदिज्ञानंनावभासेततदाविषयःस्वयमेवभासतेज्ञानाधीनतयावेतिविवेक्तुमशक्यत्वात्तदैवज्ञानभानंज्ञानांतरमेष्टव्यंतस्याप्यभानेपूर्वज्ञानस्यज्ञानांतरभास्यत्वासिद्धेस्तज्ज्ञानायज्ञानांतरमितिदुर्निवारानवस्थास्यादितिभावः ॥ तुशब्दश्चार्थः ॥ तेनचप्रथमज्ञानोत्पत्त्यनंतरंमनसिक्रिया ततोविभागस्ततः पूर्वसंयोगनाशस्ततःसंयो

गान्तरन्ततोज्ञानान्तरमितिवहुक्षणविलंबेनोत्पद्यमानमुत्तरज्ञानम्पूर्वज्ञानावभासनं कथंकुर्यात्तस्यतदानीमभावादित्यादियुक्त्यंतरंसमुच्चीयते ॥ अथद्वितीयंकल्पमनूद्यातिप्रसंगेनदूषयति ॥ युगपद्वेति ॥ अपिचानवस्थादोषपरिजिहीर्षयापूर्वोत्तरज्ञानयोरेकस्मादेवसंयोगाद्युगपद्वोत्पत्तिरभ्युपेताचेदित्यनुपज्यतेतदातोऽस्मादेवसंयोगाद्युगपत्संनिकृष्टरूपरसगंधशब्दस्पर्शज्ञानानामपितदैवोत्पत्तिरिष्यतांतदासंस्कारोद्बोधसन्निपातेसहकारिलाभात्तदर्थस्मृतीनामप्युत्पत्तिरिष्यतामतोनज्ञानस्यज्ञानांतरवेद्यत्वकल्पनायुक्तिमतीतिस्थितमित्यर्थः ॥ ५६ ॥

**अनवस्थांतरत्वाच्च बंधो नात्मनि विद्यते ॥ नाशुद्धिश्चाप्यसंगत्वादसंगो हीति च श्रुतेः ॥ ५७ ॥**

किंचात्मनश्चैतन्यंस्वरूपलक्षणमुच्यतेतटस्थलक्षणंवा आद्येपृथिव्यादौगंधादिवत्सनातनत्वात्तस्यचस्वरूपानतिरेकादनित्यज्ञानआत्मेत्युक्तोपोमृषैवस्यात् द्वितीयेतुस्वरूपलक्षणमन्यदनात्मासाधारणंवक्तव्यंतच्चचेतनातिरिक्तंनकिमपिसंभावितमस्त्यतोदेहादिजडविलक्षणमात्मानमभ्युपगछतासदानिर्विशेषचिद्रूपःकूटस्थएवात्माभ्युपेतव्योऽन्यथाविकारिणोऽनित्यत्वनियमाद्बंधमोक्षान्वय्येकआत्माभवतीतिदुःसंपादमित्येतत्सर्वमभिप्रेत्याह ॥ अनवस्थांतरत्वाच्चेति ॥ नास्त्यवस्थांतरंयस्यसोनवस्थांतरंतस्यभावोनवस्थांतरत्वंतस्मादितिविग्रहः ॥ आत्मनइतिशेषः॥ तथाचात्मनःकूटस्थत्वात्तस्मिन्नात्मनिबंधोविशेषगुणवत्वलक्षणः परमार्थतोनविद्यते ॥ चकारात्तन्निवृत्तिरूपोमो

क्षोपिनविद्यतइतियोज्यं ॥ तस्मान्नित्यशुद्धएवात्मेत्यत्रप्रमाणंव दन्परकल्पनानिराकरणफलमाह ॥ नाशुद्धिश्चापीति ॥ स्वगत धर्मकृतबंधाभाववदन्यसंसर्गकृताशुद्धिरपिनचास्त्यसंगत्वादि त्यर्थः ॥ ५७ ॥

सूक्ष्मैकागोचरेभ्यश्च न लिप्यत
इतिश्रुतेः ॥ ५८ ॥

॥ इतश्चनात्मनःपारमार्थिकोबंधइत्याह ॥ सूक्ष्मेति सूक्ष्म त्वंमनोवागगम्यत्वमेकत्वमद्वितीयत्वमगोचरत्वंनिर्विशेषत्वमे तेभ्यश्चहेतुभ्योनित्यशुद्धएवात्मानलिप्यतेलोकदुःखेनवाह्यइ तिश्रुतेरित्यर्थः ॥ यथासर्वगतंसौक्ष्म्यादाकाशंनोपलिप्यते ॥ सर्वत्रावस्थितोदेहेतथात्मानोपलिप्यतेइतिभगवद्वचनंचात्रोदा हर्त्तव्यं ॥ अर्धश्लोकः ॥ ५८ ॥

एवं तर्हि न मोक्षोस्ति बंधाभावा
त्कथंचन ॥ शास्त्रानर्थक्यमेवस्या
न्न बुद्धेर्भ्रांतिरिष्यते॥बंधो मोक्षश्च
तन्नाशः स यथोक्तो न चान्यथा५९

एवमात्मनोनित्यशुद्धबुद्धमुक्तस्वभावत्वंसाधयतोवेदांतिन आत्मोपदेशशास्त्रानर्थक्यमित्याक्षिपंतिपूर्ववादिनः ॥ एवंत र्हीति ॥ यदीत्यध्याहार्यं ॥ यद्येवंनित्यशुद्धआत्मातर्हिकथं चनकेनापिरूपेणबंधाभावान्मोक्षोपिनास्तिबंधपूर्वकत्वान्मोक्ष स्यतदभावेऽभावात्तथाचमोक्षोपायोपदेशशास्त्रानर्थक्यमेवस्या

दिति ॥ उत्तरमाह ॥ नबुद्धेरित्यादिना ॥ बुद्धेर्भ्रांतिःबंधइष्य
तइत्यन्वयः ॥ तन्नाशोभ्रांतिनाशोमोक्षइतिचेष्यतेनपरमार्थत
इत्यर्थः ॥ सबंधोयथापूर्वमुक्तोऽज्ञानंकल्पनामूलंसंसारस्यनि
यामकमिति तथैवनचान्यथातथाचाज्ञानकल्पितबंधभ्रमनिवृ
त्त्यर्थत्वादुपदेशशास्त्रस्यनवैयर्थ्यप्रसंगइत्यर्थः ॥ ५९ ॥

बोधात्मज्योतिषा दीप्ता बोधमात्म
नि मन्यते ॥ बुद्धिर्नान्योस्ति बो
द्धेति सेयं भ्रांतिर्हि धीगता ॥ ६० ॥

अज्ञानमूलबुद्धिधर्माध्यासलक्षणोबंधश्चिदात्मनिइत्युक्तमु
पपादयति ॥ बोधात्मेति ॥ बोधरूपस्यात्मनोयज्ज्योतिःप्रकाश
श्चिदाभासस्तेनदीप्ताऽव्याप्ताप्रकाशिताबुद्धिरात्मनिस्वस्यांबोधंचै
तन्यंमन्यते अन्योबोद्धासाक्षीनास्तिअहमेवबोद्धेतिसाभासाबु
द्धिःप्रकाशतेतदविवेकादहमेवबद्धोकर्तेत्यादिरात्मानिसंसारोधी
गताभ्रांतिरेवेत्यर्थः ॥ ६० ॥

बोधस्यात्मस्वरूपत्वान्नित्यं तत्रो
पचर्यते ॥ अविवेकोप्यनाद्योयं
संसारो नान्य इष्यते ॥ ६१ ॥ ॥

बुद्धेरेवबोधात्मत्वंयथाप्रतीतिपरमार्थंकिंनस्यादितिचेन्नेत्याह
बोधस्येति॥बुद्धेरागंतुकत्वेनबोधव्यभिचाराद्बोधस्यचविनापिबु
द्धिंसुषुप्तेसद्भावादात्मस्वरूपत्वात्तत्रबुद्धौसउपचर्यतेऽध्यस्यतेऽध्य
स्यतेऽविवेकादित्यर्थः ॥ तर्हिसोऽविवेकःसादिरनादिर्वेतिवी

क्षायामाह ॥ अविवेकोपीति ॥ यद्यविवेकएवानाद्यज्ञान कृतत्वादनादिस्तर्हितस्यैवब्रह्मात्मज्ञानान्निवृत्तिःस्यान्नसंसार स्येतिभ्रमंवारयति संसारोनान्यइष्यते ॥ कर्त्रादिधर्मकबुद्ध्य विवेकएवसंसारइत्यर्थः ॥ ६१ ॥

मोक्षस्तन्नाश एव स्यान्नान्यथानु पपत्तितः ॥ येषां वस्त्वंतरापत्तिर्मो क्षो नाशस्तु तैर्मतः ॥ ६२ ॥ ॥

बंधस्याज्ञानात्मकत्वेफलितमाह ॥ मोक्षइतिज्ञानादज्ञाननि वृत्त्यातत्कार्यबंधनिवृत्तिरेवमुक्तिर्नान्यथाहेयस्योपादेयस्यवा मोक्षस्यानुपपत्तितोनुपपत्तेरित्यर्थः ॥ अनुपपत्तिमेवद्रढयन्नप क्षांतरंनिराकरोति ॥ येषामिति ॥ येषांवादिनांस्वरूपादन्य वस्त्वंतरापत्तिरात्मनोमोक्षइतिमतंतैरात्मनाशएवमोक्षइतीष्टः स्यात्स्थितस्यनष्टस्यवान्यस्यान्यत्वासंभवाद्वस्त्वंतरापत्तिशब्दे नयदिमाप्तिर्विवक्ष्यतेतथापिसंयोगाविप्रयोगांताइतिन्यायेनकृ तकस्यानित्यत्वव्याप्तेश्चानित्योमोक्षःस्यादित्यर्थः ॥ ६२ ॥

अवस्थांतरमप्येवमविकारान्न यु ज्यते ॥ विकारोऽवयवित्वं स्यात्त तो नाशो घटादिवत् ॥ ६३ ॥ ॥

यथावस्त्वंतरापत्तिर्मोक्षइतिपक्षेऽनुपपत्तिरनित्यत्वापत्तिश्च तथात्मनोवस्थांतरापत्तिमोक्षपक्षेपिसदोषस्तुल्यइत्याह ॥ अ वस्थांतरमप्येवमिति ॥ अविकारित्वादात्मनोवस्थांतरमपिन

गुज्यतेयदि पुनर्विकारोप्यभ्युपगम्येततथासतिसावयवत्वमा त्मनःस्यात्ततःसावयत्वान्नाशएवघटादिवदपरिहार्यःस्यादतो भ्रांतिनिवृत्तिमात्रएवमोक्षोनान्यथासंभवतीत्यर्थः ॥ ६३ ॥

तस्माद् भ्रांतिरतोऽन्या हि बंधमो
क्षादिकल्पनाः॥ सांख्यकाणादबौ
द्धानां मीमांसाहतकल्पनाः॥६४॥

वेदांतसिद्धांतादन्याःबंधमोक्षादिकल्पनाःवादिभिरुत्प्रेक्षिताःश्रुतिस्मृतिन्यायबाधितत्वान्नादरणीयामुमुक्षुभिरित्युपसंहरति ॥ तस्मादितिद्वाभ्यां भ्रांतिरेवपरिशेषादात्मनिबंधमोक्षप्रतिभासइतिकल्पनाश्रुत्याद्यविरुद्धा अतोन्याबंधमोक्षादिकल्पनाः आदिशब्दात्तद्धेतुकल्पनाचनादर्तव्याःकदाचनेतिसंबंधः ॥ अतोस्मात्सिद्धांतादन्याबंधमोक्षादिकल्पनाहियस्माद्भ्रांतिःप्रमाणशून्यातस्मान्नादर्तव्येतिवान्वयः ॥ केषांवाकल्पनानादर्तव्याइत्यतआह ॥ सांख्येति ॥ मीमांसाहताविचारविरुद्धाविचारासहावाकल्पनामीमांसाहतकल्पनाइत्यर्थः॥६४

शास्त्रयुक्तिविहीनत्वान्नादर्तव्याः
कदाचन ॥ शक्यंते शतशो वक्तुं
दोषास्तासां सहस्रशः ॥ ६५॥ ॥

अनादरेहेतुमाह ॥ शास्त्रेति ॥ शास्त्रयुक्तिविरुद्धाश्चताःकल्पनाइत्याह ॥ शक्यंतइति ॥ ६५ ॥

अपि निंदोपपत्तेश्च यान्यतोन्या

नि चेत्यतः ॥ त्यक्त्वातोऽन्यशा
स्त्रोक्तीर्मतिं कुर्याद्दृढां बुधः ॥६६॥

इतश्चसांख्यादिकल्पनानादर्तव्याइत्याह ॥ अपिनिंदोपप त्तेरिति यान्यतोन्यानिशास्त्राणिपृथिव्यांविविधानिवैशंकनी यानिविद्वद्भिर्धर्मशुद्धिमभीप्सुभिः ॥ यावेदबाह्याःस्मृतयोयाश्च काश्चकुदृष्टयः सर्वास्तानिःफलाःप्रेत्यतमोनिष्ठाहिताःस्मृताइ त्यादिनिंदावचनान्नादर्तव्याइत्यर्थः ॥अतोन्यशास्त्रोक्तीस्त्यक्त्वा दृढांमतिंबुधःकुर्यादित्यन्वयः ॥ ६६ ॥

श्रद्धाभक्ती पुरस्कृत्यहित्वा सर्वम
नार्जवं ॥ वेदांतस्यैव तत्त्वार्थे व्या
सस्याभिमतौ तथा ॥ ६७ ॥ ॥

कथंमतिंकुर्यात्कुत्रवेत्याकांक्षायामाह ॥ श्रद्धेति ॥ श्रद्धाश्रु त्युक्तेर्थेविश्वासोभक्तिस्तत्परतातेपुरस्कृत्यादरेणावलंब्येत्यर्थः सुगममन्यत् ॥ ६७ ॥

इतिप्रणुन्नाद्वयवादकल्पना निरा
त्मवादाश्च तथाहि युक्तितः ॥ व्यपे
तशंकाः परवादतः स्थिरा मुमुक्ष
वो ज्ञानपथे स्युरित्युत॥६८॥ ॥

एवमुक्तंपरपक्षनिराकरणंसंक्षिप्यतत्प्रयोजनंकथयति ॥ इतीति॥इतिइत्थंयुक्तितःप्रणुन्नाःनिराकृताःद्वयवादकल्पनाःभे

दवादकल्पनाःसांख्यादिकल्पनाइतियावंत् ॥ तथानिरात्मवादाःबौद्धवादाश्चयुक्तितःप्रणुन्नाइत्यर्थः ॥ किमर्थंतदाह ॥ व्यपेतेति ॥ मुमुक्षवः परवादतः परशास्त्रेभ्योव्यपेतशंकास्तत्प्रामाणिकत्वशंकारहिताःसंतोज्ञानपथेवेदांतोक्तज्ञानमार्गेस्थिराःस्युर्भवेयुरित्युतअपीतियोजना ॥ ६८ ॥

**स्वसाक्षिकं ज्ञानमतीव निर्मलं विकल्पनाभ्यो विपरीतमद्वयं॥ अवाप्य सम्यग्यदि निश्चितो भवेन्निरन्वयो निर्वृतिमेति शाश्वतीं॥६९॥**

वेदान्ताविहितब्रह्मात्मज्ञानस्यैवपुरुषार्थसाधनत्वमितितत्स्वरूपकथनपूर्वकंमुमुक्षूणांतन्निष्ठत्वमावश्यकमितिदर्शयतिस्वसाक्षिकमिति ॥ अद्वयमखंडवस्तुमात्राकारमित्यर्थः ॥ निरन्वयोनिरस्ताज्ञानतत्कार्यसंबंधःसन्नित्यर्थः ॥ शाश्वतीनिर्वृतिरखंडानंदानुभवस्वरूपाविर्भावः ॥ ६९ ॥

**इदं रहस्यं परमं परायणं व्यपेतदोषैरभिमानवर्जितैः ॥ समीक्ष्य कार्यामतिरार्जवे सदा न तत्त्वदृक्स्वान्यमतिर्हि कश्चन ॥ ७० ॥**

यथोक्तज्ञानाधिकारिणंसंक्षिप्तविशेषणसारंकथयंस्तत्त्वनिष्ठालक्षणमाह ॥ इदंरहस्यमितियदवाप्यशाश्वतींनिर्वृतिमेति तदिदंरहस्यमुपदेशैकगम्यं ॥ परमंपरमात्मतत्त्वप्रकाशत्वा

त्सर्वोत्तमं परायणंनिरवधिकसर्वाश्रयं परमगतिरूपमितिया वत् ॥ एवंविधमात्मज्ञानंसमीक्ष्यसम्यगालोच्यदृढीकृत्येति यावत् ॥ व्यपेतदोषैरपगतेंद्रियबहिर्मुखैरभिमानवर्जितैःपां डित्यादिनिमित्तचित्तदोषरहितैःशांतैर्दांतैश्चेतियावत् ॥ एवंवि धैरधिकारिभिरार्जवेऋजुभावेसर्वसमेब्रह्मात्मतत्त्वेमतिर्निष्ठास दाकार्याब्रह्मात्मतत्त्वमेवऋजुसर्वदासर्वत्रैकरूपत्वात्तत्स्वरूपमे वार्जवंनामतस्यनिर्विशेषत्वादितिद्रष्टव्यं॥ तथाचब्रह्माभेदेनात्म ज्ञाननिष्ठातत्त्वनिष्ठेत्युक्तंभवतिएतदेवव्यतिरेककथनेनविशद यति ॥नतत्त्वदृगिति॥यःकश्चन॥ स्वान्यमतिःप्रत्यगात्मनोन्य स्मिन्ब्रह्मणिमतिर्यस्यसस्वान्यमतिः॥ सनतत्त्वदृक्तत्त्वदृष्टिर्न भवतीत्यर्थः॥ तदेवब्रह्मत्वंविद्धिनेदंयदिदमुपासते॥अथयोन्यां देवतामुपास्तेन्योसावन्योहमस्मीतिनसवेदेतिश्रुतेः ॥ ७० ॥

अनेकजन्मांतरसंचितैर्नरो विमु
च्यतेऽज्ञाननिमित्तपातकैः ॥ इदं
विदित्वा परमं हिपावनं न लिप्यते
व्योम इवेह कर्मभिः ॥ ७१ ॥ ॥

एवमतियत्नलभ्येनज्ञानेनकिंफलंसाध्यतेतदाह ॥ अनेके तिस्पष्टार्थः ॥७१॥

प्रशांतचित्ताय जितेंद्रियाय च प्र
हीणदोषाय यथोक्तकारिणे ॥ गु
णान्वितायानुगताय सर्वदा प्रदेय

मेतत् सततं मुमुक्षवे ॥ ७२ ॥

इदंज्ञानमाचार्येणकस्मैदातव्यमित्यपेक्षायांविस्तृतविशेषण मधिकारिणमाह ॥ प्रशांतेति ॥ प्रशांतचित्तायशांतिगुणयुक्ताय जितेंद्रियायदांताय प्रहीणदोषायअनेकजन्मानुष्ठितयज्ञादिपरितोषितेश्वरप्रसादहतसमस्तकल्मषाय ॥ यथोक्तकारिणे शास्त्रोक्तस्वधर्मस्ययथाशास्त्रमनुष्ठात्रे ॥ गुणान्वितायविद्याविनयार्जवादिगुणयुक्ताय ॥ सर्वदादीर्घकालंसततंचनैरंतर्येणानुगताय गुरुमनुसृतायएवंविधायमुमुक्षवेमोक्षमात्रेच्छावते एतदात्मज्ञानंगुरुणादेयंप्रतिपादयितव्यमित्यर्थः ॥ ७२ ॥

परस्य देहे न यथाभिमानिता पर
स्य तद्वत्परमार्थमीक्ष्य च ॥ इदं हि
विज्ञानमतीव निर्मलं संप्राप्य मु
क्तोथ भवेच्च सर्वतः ॥ ७३ ॥

एवंविधःशिष्योमहावाक्येनावगमितमात्मतत्त्वंकथमवगच्छतिकिंवाफलंप्राप्नोतीत्यपेक्षायामाहपरस्येतियथापरस्यान्यस्य देहपरस्यनाभिमानिताअहंममेत्यभिमानित्वंनसंभवति तद्वत् स्वदेहापिपरमार्थमीक्ष्यदेहातिरिक्तमात्मतत्त्वमीक्ष्यालोच्याभिमानरहितःसन्निितियावत् ॥ चकारात्तत्प्रतिपादकवेदांतवाक्यान्यालोच्येतिगृह्यते ॥ एवंविधंइदंविज्ञानंपूर्वोक्तसाक्षात्कारंसंप्राप्याथतदैवसर्वतोमुक्तोभवेन्निरस्ताज्ञानतत्कार्यसंस्कारपरमानंदानुभवब्रह्मात्मस्वरूपोभवेदित्यर्थः ॥ ७३ ॥

न हीह लाभोऽभ्यधिकोस्ति कश्चन
स्वरूपलाभात्स इतो हि नान्यतः॥
न देयमैंद्रादपि राज्यतोधिकं स्वरू
पलाभं त्वपरीक्ष्य यत्नतः ॥ ७४॥

किमितिगुणविशेषवच्छिष्यपरीक्षणंगुरोर्यस्मैकस्मैचिच्छि
ष्यायकस्माद्विद्यानदीयतेतत्राह॥ नहीति ॥ स्वरूपमात्मतत्त्वं
लभ्यतेनेनेतिस्वरूपलाभस्तत्त्वज्ञानंतस्मादभ्यधिकोलाभःक
श्चनकोपीहदेवमनुष्यादिभवपरंपरायांनास्तिआत्मालाभान्नप
रंविद्यतइतिस्मृतेः सलाभःइतएववेदांतवाक्यान्नान्यतोन्यस्मा
च्छास्त्रांतरान्नभवति हियस्मात्तस्माद्यत्नतःशिष्यमपरीक्ष्यस्व
रूपलाभंतुज्ञानंनदेयं ॥ ऐंद्रादपिराज्यतोराज्यात्प्रधिकमितिवि
शेषणेन प्राणाप्यायचांतेवासिनेनान्यस्मैकस्मैचनयद्यप्य
स्माइमामद्भिःपरिगृहीतांधनस्यपूर्णांदद्यादेतदेवततोभूय इति
श्रुतिंप्रमाणयति ॥७४॥ इतिपार्थिवप्रकरणंषोडशंविवृतं ॥१६॥

आत्मा ज्ञेयः परो ह्यात्मा यस्माद
न्यन्न विद्यते॥सर्वज्ञः सर्वदृक् शुद्ध
स्तस्मै ज्ञेयात्मने नमः॥ १ ॥ ॥

परपक्षनिराकरणमुखेनोक्तंमोक्षसाधनंज्ञानंस्वप्रक्रियया
पिव्यक्तीकर्तुंप्रकरणांतरमारभमाणोदेवताभक्तेर्विद्याप्राप्त्यंतरं
गत्वंद्योतयन्प्रकरणप्रतिपाद्यार्थंनमस्कारव्याजेनसंक्षिप्याह॥
आत्माज्ञेयइति ॥ आत्मास्वरूपंज्ञेयःस्वरूपतोऽवधार्यःकिंघ

टादिवद्विषयत्वेननेत्याह ॥ परोह्यात्मेति ॥ हियस्मादात्मास र्वज्ञेयात्परोज्ञेयत्वधर्मरहितः ॥ तत्कुतस्तत्राह ॥ यस्मादन्यं नविद्यतइति ॥ यस्मादात्मनःस्वरूपादन्यत्परमार्थतःपृथग्भूतं तद्धर्मोवानाविद्यते ॥ तथाचरूपादिहीनतयाचक्षुराद्यगोचरत्वात् स्वसमानजातीयप्रत्यक्षव्यक्त्यंतराभावाद्व्याप्तिग्रहाभावेसत्य नुमानार्थापत्तिग्राह्यत्वाभावात्सदृशवस्त्वंतराभावेनोपमानाग्रा ह्यत्वात्षष्ठीजातिगुणक्रियादिधर्मराहित्येनशब्दागोचरत्वात् ज्ञातुःस्वरूपत्वादेवनास्तीत्यभ्युपगंतुमशक्यत्वात्पारिशेषाद्विष यभूतदेहेंद्रियांतःकरणप्रत्याख्यानेनान्विष्यंतत्साक्षितयाविष यत्वेनस्वयंप्रकाशआत्माज्ञेयइत्यर्थः ॥ एवंत्वंपदार्थंपरिशोध्य तस्यतत्पदार्थात्मकत्वंवाक्यार्थंकथयितुंतत्पदार्थमाह ॥ सर्व ज्ञइति ॥ सामान्यतःसर्वंजानातीतिसर्वज्ञोविशेषतःसर्वंपश्य तीतिसर्वदृक्सर्वज्ञत्वमुपलक्षणमुक्त्वातस्यस्वरूपलक्षणमाह ॥ शुद्धइति ॥अनृतजडपरिछिन्नदुःखादिप्रपंचसंसर्गरहितः स त्यज्ञानानंतानंदरूपइत्यर्थः ॥ वाक्यार्थंतत्त्वंपदार्थैक्यमाह ॥ तस्माइति ॥ पूर्वोक्तप्रकारेणज्ञेयश्चासावात्माचज्ञेयात्मातस्मै ज्ञेयात्मनेतस्मैसर्वज्ञत्वाद्युपलक्षितायसत्यादिस्वरूपायनमःप्र ह्वीभावोस्तु तद्भेददृष्टिविलयएवेहनमः शब्दार्थः ॥ १ ॥

**पदवाक्यप्रमाणज्ञैर्दीपभूतैः प्रका शितं ॥ ब्रह्म वेदरहस्यं यैस्तान्नित्यं प्रणतोस्म्यहं ॥ २ ॥ ॥ छ ॥**

देवताभक्तिवद्गुरुभक्तेरपिविद्याप्रात्यंतरंगत्वं यस्यदेवेपराभ

क्तिर्यथादेवेतथागुरौ ॥ तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनइ तिश्रुतिसिद्धंद्योतयन्गुरुपरंपरांप्रमाणयतिपदवाक्येति ॥ यैर्गु रुभिर्वेदरहस्यंब्रह्मप्रकाशितंतान्नित्यंप्रणतोस्म्यहमितिसंबंधः प दानांवाक्यानांचशक्तितात्पर्यमर्यादयाप्रमाणज्ञैःपदवाक्यप्रमाण ज्ञैः ॥ यद्वापदवाक्येप्रसिद्धेप्रमाणमनुमानादितज्ज्ञैरित्यर्थः ॥ दीपभूतैरयत्नेनसर्वार्थप्रकाशकैर्यैरितिसंबंधः ॥ २ ॥

**यद्वाक्सूर्यांशुसंपातप्रनष्टध्वांतक**
**ल्मषः ॥ प्रणम्य तान् गुरून्वक्ष्ये**
**ब्रह्मविद्याविनिश्चयं ॥ ३ ॥ ॥छ॥**

सामान्येनाचार्यपरंपरांनमस्कृत्यविशेषेणस्वगुरुप्रणामपूर्व कमुद्देश्यं प्रतिजानीते ॥ यद्वागिति॥ब्रह्मविद्याविनिश्चयोयस्मा न्न्यायविशेषाद्भवतितंन्यायविशेषंवक्ष्यइत्यर्थःसुगममन्यत् ॥ ३

**आत्मलाभात्परो नान्यो लाभःक**
**श्च न विद्यते ॥ यदर्था वेदवादाश्च**
**स्मार्ताश्चापि तु याः क्रियाः ॥४॥**

किमर्थंब्रह्मविद्याविनिश्चयोवक्ष्यतेतदाह ॥ आत्मलाभादि ति ॥ आत्मलाभस्यपरमत्वेप्रमाणंसूचयति ॥ यदर्थाइति ॥ वे दवादावेदवचनानिस्मार्ताश्चवादाःस्मृतिवचनानिसाक्षाज्ज्ञाना र्थावेदवादाःस्मृतिवादाश्चयदर्थाःअपितुयाःक्रियाःकर्मपरवेद स्मृतिविहिताःताश्चचित्तशुद्धिपरंपरयायदर्थास्तस्मादात्मलाभा दितिसंबंधः ॥ ४ ॥

आत्मार्थोपि हि यो लाभः सुखा येष्टो विपर्ययः ॥ आत्मलाभः प रः प्रोक्तो नित्यत्वाद्ब्रह्मवेदिभिः ५

पुत्रादिलाभापेक्षयाआत्मलाभस्यपरमत्वंप्रामाणिकमित्युक्तमुपपादयति ॥ आत्मार्थोपीति ॥ योपिलाभःपुत्रधनादिविषयोलोकेसुखायेष्टःसोप्यात्मार्थआत्मसुखार्थइतिहिप्रसिद्धमितियोजना ॥ तर्हिपुत्रादिलाभेनैवात्मसुखसिद्धेःकिमित्यात्मज्ञानमात्मलाभायेष्टव्यंविशेषाभावादित्यतआह ॥ विपर्ययइति ॥ सुखविपर्ययःदुःखायापिसलाभःस्यात्कदाचित्कस्यचित्पुत्रादेरेवदुःखहेतुत्वदर्शनादित्यर्थः ॥ तस्माल्लाभांतरापेक्षयाआत्मलाभःपरमोलाभइतितदर्थंसर्वपरित्यागेनात्मज्ञानंसंपादनीयमित्यभिप्रेत्याह ॥ आत्मेति ॥ विपर्ययप्रसंगस्तत्रनास्तीत्याह ॥ नित्यत्वादिति ॥ तथाचश्रुतिःतदेतत्प्रेयःपुत्रात्प्रेयोवित्तात्प्रेयोन्यस्मात्सर्वस्मादंतरतरंयदयमात्मासयोन्यमात्मनःप्रियंब्रुवाणंब्रूयात्प्रियंत्वांरोत्स्यतीतीश्वरोहंतथैवस्यादात्मानमेवप्रियमुपासीतसयआत्मानमेवप्रियमुपास्तेनहास्यप्रियंप्रमायुकंभवतीति ॥ ५ ॥

स्वयं लब्धस्वभावत्वाल्लाभस्तस्य नचान्यतः ॥ अन्यापेक्षस्तु यो लाभः सोन्यदृष्टिसमुद्भवः ॥६ ॥

आत्मसुखलाभस्यनित्यत्वमुक्तंसाधयति ॥ स्वयमिति ॥

तस्यात्मनोलाभोनचान्यतोन्यनिमित्तकोनभवतिकुतःस्वयंल ब्धस्वभावत्वात्साधनसाध्यत्वाभावान्नित्यत्वमित्यर्थः पुत्रादि लाभस्यसाधनाधीनत्वेनानित्यत्वंसाधयति ॥ अन्यापेक्षइति ॥ अन्यदृष्टेःसकाशात्समुद्भवोयस्यसतथाअन्याधीनस्यतदप गमेपगमादनित्यत्वमित्यर्थः ॥ ६ ॥

**अन्यदृष्टिस्त्वविद्या स्यात्तन्नाशो मोक्ष उच्यते ॥ ज्ञानेनैव तु सोपि स्याद्विरोधित्वान्न कर्मणा ॥ ७ ॥**

॥ केयमन्यदृष्टिःकावातदुद्भवस्यान्यपुत्रादिलाभस्यअनि त्यत्वेहानिरित्यतआह ॥ अन्यदृष्टिस्त्विति ॥ अन्यस्मिन्अ नात्मनिदृष्टिःप्रतीतिर्यस्याःसाअन्यदृष्टिः साअविद्याभवतीत्य र्थः ॥ ततश्चात्माऽविद्याकृतभ्रांतिनिबंधनत्वात्पुत्रादिलाभ प्रीतिस्तस्याश्चस्वप्नतुल्यत्वान्नित्यात्मप्रियहानिःस्यादितिभावः ॥ तथाचाविद्यानिवृत्तिमंतरेणात्मस्वरूपनित्यसुखलाभाभावा त्तासंपाद्येत्याह ॥तन्नाशइति॥ मोक्षोनित्यनिरतिशयपरमानं दाविर्भावोऽज्ञानहानिलक्षणस्तत्प्राप्त्युपायमाह ॥ ज्ञानेनैवेति ॥ सोप्यज्ञाननाशलक्षणोमोक्षोज्ञानेनैवस्यात्तस्यैवाज्ञानविरो धित्वान्नकर्मणा तस्याज्ञानविरोधित्वाभावात्तस्मात्सर्वकर्मपरि त्यागेनात्मज्ञानंसर्वथासंपादनीयमेवमुमुक्षुणेत्यर्थः ॥ ७ ॥

**कर्मकार्यस्त्वनित्यः स्यादविद्या कामकारणः ॥ प्रमाणं वेद एवात्र ज्ञानस्याधिगमे स्मृतः ॥ ८ ॥ ॥**

ननुविरोधाभावात्सकार्याविद्यानिवृत्तिरूपोमोक्षःकर्मणामा भूत्तथापितेननित्यपुरुषार्थोभविष्यत्यतःकिंज्ञानेनेति नेत्याह ॥ कर्मकार्यस्त्विति ॥ तत्रहेतुगर्भंविशेषणंअविद्येति ॥ मिथ्याप्रत्ययमूलरागप्रयुक्तकर्मसाध्यत्वादित्यर्थः ॥ कर्मसाध्यंफलमनित्यंज्ञानसाध्यंतुनित्यमित्यत्रकिंप्रमाणमितिचेद्वेदएवेत्याह प्रमाणमिति ॥ तद्यथेहकर्मजितोलोकःक्षीयतएवमेवामुत्रपुण्यजितोलोकःक्षीयते ब्रह्मविदाप्नोतिपरं तरतिशोकमात्मविदित्यादिवेदएवकर्मसाध्यमनित्यंज्ञानसाध्यंनित्यंमोक्षरूपमित्यत्रज्ञानस्यविवेकस्यअधिगमेप्रमाणंविद्वद्भिःस्मृतमित्यर्थः ॥८॥

**ज्ञानैकार्थपरत्वात्तं वाक्यमेकं ततो विदुः ॥एकत्वं ह्यात्मनो ज्ञेयं वाक्यार्थप्रतिपत्तितः ॥ ९ ॥ ॥ ॥**

किंचवेदस्यसर्वस्याध्ययनविध्युपपादितत्वादपुरुषार्थेपर्यवसानायोगात्परमपुरुषार्थपर्यवसानायात्मैक्यज्ञानपरत्वमेष्टव्यं ततोनकर्मसुतस्यमहातात्पर्यंलभ्यतइत्यभिप्रेत्याह ॥ ज्ञानैकार्थेति ॥ ज्ञानमेवैकोर्थःप्रयोजनंपरंप्रतिपाद्यंयस्यवेदस्यसतथातस्यभावस्तत्त्वंतस्मात्तंवेदमेकंवाक्यंविदुःवाक्यप्रमाणकोविदाइतिशेषः॥ किंतस्यज्ञेयमित्यपेक्षायामाह॥ एकत्वंहीति॥ततोज्ञानादात्मनएकत्वमेवज्ञेयमित्यन्वयः ॥ हिशब्दोवधारणार्थःज्ञानप्रकारमाह॥वाक्यार्थप्रतिपत्तितइति ॥ सत्यंज्ञानमनंतमित्याद्यवांतरवाक्यार्थप्रतिपत्तिद्वारेणतत्त्वमस्यादिमहावाक्यैरात्मनोब्रह्मैकत्वंज्ञेयमित्यर्थः ॥ आत्मतत्त्वज्ञानस्यैवपरमपुरुषार्थहे

तुतायाःश्रुतत्वात्कर्मकांडमपितत्त्वज्ञानापेक्षितचित्तशुद्धिहेतुकर्मविधानद्वारापारंपर्येणपरमपुरुषार्थसाधनभावंभजतइतियुक्तमेकार्थपर्यवसानेनैकवाक्यत्वंवेदवाक्यस्येतिभावः ॥ ९ ॥

वाच्यभेदात्तु तद्भेदः कल्प्यो वाच्यो हि तच्छ्रुतेः॥ त्रयं त्वेतत्ततःप्रोक्तं रूपं नाम च कर्म च ॥ १०॥

नन्वात्मनोब्रह्मणश्चैकत्वज्ञानमनुपपन्नंतयोरपर्यायशब्दवाच्यत्वेनभेदादित्याशंक्यमैवमन्योन्याश्रयापत्तिरित्याह ॥ वाच्यभेदादिति॥ तद्भेदोऽपर्यायशब्दभेदोवाच्यभेदात्कल्प्यस्त्वयावाच्योपितच्छ्रुतेरपर्यायशब्दभेदश्रवणाद्भिन्नःकल्प्यः ॥ तथाचसिद्धेवाच्यजीवब्रह्मभेदेतद्वाचकशब्दयोरपर्यायत्वसिद्धिस्तत्सिद्धावितरसिद्धिरित्यन्योन्याश्रयःस्यादित्यर्थः॥स्वरूपतोभेदकल्पनायांप्रमाणाभावादितिभावः॥ भेदस्याप्रामाणिकत्वादेकत्वज्ञानमुपपन्नमित्युक्तेभेदस्यापिप्रमाणसिद्धत्वंपूर्ववादीशंकते ॥ त्रयंत्वेतादिति ॥ त्रयंवाइदंनामरूपंकर्मेतिश्रुत्याततआत्मनोतिरिक्तंरूपंनामचकर्मचप्रोक्तमतोनैकत्वमेववेदार्थइत्यर्थः॥ सिद्धांतीदूषयति॥असदेतादिति॥ हियस्मादेतत्त्रयमन्योन्येनकल्पितंअन्योन्यसापेक्षसिद्धिकंतस्मादसदित्यन्वयः अन्योन्याश्रयग्रस्ततयाभेदस्यप्रमातुमशक्यतयाप्रामाणिकत्वाभावाद्यथाकथंचिल्लोकसिद्धोमिथ्याभेदःश्रुत्यानूद्यतेकेवलंवैराग्यायातोनाद्वैतज्ञानविरोधितेतिभावः॥ अथवाकथंसर्वस्यवेदस्यैकार्थज्ञानपरत्वेनैकवाक्यत्वंनियंतुंशक्यतेऽपुनरुक्तशब्दभेदवशात्तत्रतत्रा

र्थभेदस्यप्रतीयमानत्वादितिचेत्सत्यं ॥ तथापिनतत्रतात्पर्यंयु क्तंप्रमाणयुक्तिबाधितत्वाद्वैतस्येत्यभिप्रेत्याह ॥ वाच्यभेदादि ति ॥ वाच्यभेदेप्रामाणिकेसतितद्विषयतात्पर्यवच्छब्दभेदादने कवाक्यतासिध्यतितथातद्भेदोवाच्यभेदोपितद्वतेर्नवाचकशब्द भेदश्रुतेःश्रवणात्कल्प्यः ॥ प्रकारांतरेणवाच्यभेदासिद्धेः ॥ न हिशब्दाधीनोर्थतत्त्वनिश्चयः ॥ आरोपितविषयेपिशब्ददर्शना त् ॥ नाप्यर्थाधीनःशब्दनिश्चयः ॥ एकस्मिन्नपिपुरुषेपिताभ्रा तामातुलोजामातापितृव्यइत्युपाधिभेदव्यतिरेकेणवस्तुभेदोवि द्यते ॥ तथाचानाद्यविद्याकल्पितोनेकोपाधिभेदावच्छिन्नानेकक र्त्रादिकारकभेदानुवादेनज्ञानापेक्षितान्तःकरणशुद्धिसाधनकर्म विधिपरत्वात्कर्मकांडस्यात्मतत्त्वज्ञानवाक्यैकवाक्यत्वोपपत्ते र्निरतिशयानन्दात्यंतिकदुःखनिवृत्तिफलस्यसर्वेषांस्वरसतोभि लाषगोचरस्यात्मतत्त्वज्ञानादन्यतोसम्भवादविद्याविद्यावस्थो पाधिभेदेनाधिकारिभेदप्रयोगभेदयोश्चोपपत्तेरेकपुरुषापेक्षितै कपरमपुरुषार्थैकसाधनप्रकाशत्वेनैकवाक्यतावेदस्ययुक्तेतिभा वः ॥ एवंद्वैतस्याविद्याकल्पितत्वेयुक्तिमभिधायप्रमाणमाभि धत्ते ॥ त्रयंत्विति ॥ यतोयमनिरूपिताकारभेदःप्रपंचस्ततोहेतो रेतत्सर्वंदृश्यंरूपंनामचकर्मचेतित्रयंराशीकृत्यश्रुत्याप्रोक्तमिति योजना ॥ त्रयंवाइदंनामरूपंकर्मेत्यस्मिन्ब्राह्मणेहेतूक्तिपूर्वकं शब्दविशेषाणांवाङ्मात्रत्वं ॥ रूपविशेषाणांचक्षुर्मात्रत्वं कर्म विशेषाणांशरीरमात्रत्वमितिविशेषप्रविलापनेनतत्सामान्यत्रि त्वमभिधायतदेतत्त्रयंसदेकमयमात्मात्माएकःसन्एतत्त्रयमित्यै कात्म्यंसर्वस्यजगतउपसंहृतमतोनतत्त्वभेदोस्तीत्यर्थः ॥१०॥

असदेतत्त्रयं तस्मादन्योन्येन हि

कल्पितं ॥ कृतो वर्णो यथाशब्दा
च्छुतोन्यत्र धिया बहिः ॥ ११ ॥

उपसंहरति ॥ असदेतदिति ॥ उक्तार्थमेतत् ॥ अन्योन्या पेक्षयावगम्यमानस्यमिथ्यात्वेदृष्टांतमाह ॥ कृतइतिशब्दाछु तोवर्णइंद्रादिरूपाविशेषःसहस्राक्षवज्रबाहुत्वादिःधियापत्यूह्या न्यत्रबहिःकुड्यादौचित्ररूपेणकृतोयथाकल्पितोमिथ्येतियोज नानहिचित्रेदृश्यमेवंरूपमिंद्रस्यवाभवति ॥ तथाचमिथ्यार्थ गोचरःशब्दइत्यर्थः ॥ ११ ॥ ॥छ॥ ॥ ॥

दृष्टं चापि यथारूपं बुद्धेः शब्दाय
कल्पते ॥ एवमेतज्जगत्सर्वं भ्रांति
बुद्धिविकल्पितं ॥ १२ ॥ ॥ ॥

शब्दान्मिथ्यार्थकल्पनामुदाहृत्यमिथ्यार्थाच्छब्दकल्पनामुदा हरति॥दृष्टंचापीति भित्तिपटादौदृष्टंदेवतारूपंतथातद्देवबुद्धेस्त द्दर्शनसंस्कृतायाआगत्यशब्दायशब्दव्यपदेशायकल्पते इति योजना ॥ दार्ष्टांतिकमाह ॥ एवमिति ॥ एतत्सर्वंजगदेवंयथा दृष्टांतमेवंभ्रांतबुध्याशुक्तौरजतमिवात्मनिविविधंकल्पितंनव स्तुसदस्तीत्यर्थः ॥ १२ ॥ ॥ ॥ ॥ ॥

असदेतत्ततो युक्तं सच्चिन्मात्रं न
कल्पितं ॥ वेदश्चापि स एवाद्यो वे
द्यंचान्यत्तु कल्पितं ॥ १३ ॥ ॥

जगतोमिथ्यात्वेफलितमाह ॥ असदेतत्ततइति ॥ सर्वंक
ल्पितंचेच्छून्यवादापत्तिरित्याशंकानकार्येत्याह ॥ सच्चिदिति ॥
निरधिष्ठानकल्पनानुपपत्तेःसर्वकल्पनास्पदंसच्चिन्मात्रंमत्यक्त
त्वेनकल्पितंसर्वसाक्षित्वात्तस्यसर्वकल्पनायाः प्रागेवसिद्धत्वा
दित्यर्थः ॥ वेदाचार्यादेरात्मतत्त्वप्रतिपत्तिहेतुत्वादकल्पितत्वम
स्तीतिकथंसच्चिन्मात्रमकल्पितमित्युच्यतेतत्राह ॥ वेदश्चापी
ति ॥ सएवाद्यःपूर्वसिद्धआत्मावेदोपिवेदनहेतुःश्रुत्याचार्यरूपे
णमाययाप्रथतेर्थप्रकाशनशक्तेरन्यत्रजडेऽसंभवात् ॥ नह्यग्निग
तप्रकाशनशक्तिव्यतिरेकेणदीपादेरपराप्रकाशनशक्तिरस्ति वे
द्यंचतत्त्वंसएवाद्यइतिसंबंधः ॥ अन्यत्तुविशेषमात्रंकल्पितं त
थाचकल्पितविशेषानुगतत्वेनात्मनएवबोधकत्वंसर्वकल्पनाप
वादावधितयातस्यैवबोध्यत्वंचोपपद्यतइत्यर्थः ॥ १३ ॥

**येन वेत्ति स वेदः स्यात्स्वप्ने सर्वं**
**तु मायया ॥ येन पश्यति तच्चक्षुः**
**शृणोति श्रोत्रमुच्यते ॥ १४ ॥**

कथंसएवाद्योवेद्यंचेत्याशंक्यस्वप्नदृष्टांतेनव्युत्पादयति ॥
येनेति ॥ स्वप्नेस्थितआत्मायेनस्वाप्नंविषयजातंवेत्तिसएववे
दःस्यान्नहिस्वप्नेचिदात्मव्यतिरिक्तंभासकमस्ति ॥ आदित्या
दिज्योतिषांतदोपरमात्स्वयंज्योतिष्ट्वश्रुतेश्चयत्तुतत्रसर्वंवेद्यंतद
पिमाययासएव नहिस्वप्नेबाह्यंविषयजातमस्तितत्रानवकाशा
न्नतत्ररथाइत्यादिश्रुतेश्च ॥ तथाचसएवात्मास्वसाक्ष्यमायाकृ
तोपाधिभेदावच्छिन्नसदात्मनावेद्यस्तदनुस्यूतचिदात्मनावेदन
रूपश्चेतिवेद्यवेदितृभावोमायिकइत्यर्थः ॥ चक्षुरादींद्रियाणा

मुपरमात्स्वप्नगतआत्मायेनपश्यतिरूपमुपलभते तदेवचक्षुरि तियोजना ॥ स्वप्नेरूपाकारसंस्कृतमनोवस्थचिन्निष्ठाविद्या त्मकंरूपंप्रकाशयन्पश्यतीत्युच्यतेएवंश्रोत्रादावप्यूह्यं ॥ १४ ॥

येन स्वप्नगतो वक्ति सा वाग् घ्राणं
तथैव च ॥ रसनस्पर्शने चैव मन
श्चान्यत्तथेंद्रियं ॥ १५ ॥ ॥

येनस्वप्नगतइति ॥ येनस्वप्नगतोजिघ्रतितत् घ्राणमित्यादिय थायोगंयोज्यं ॥१५॥

कल्प्योपाधिभिरेवैतद्भिन्नं ज्ञानम
नेकधा ॥ आधिभेदाद्यथा भेदो म
णेरेकस्य जायते ॥१६॥

कथमेकरूपंचैतन्यंवेद्यवेदकचक्षुरादिरूपेणाभिद्यतेतत्राह ॥ कल्प्योपाधिभिरिति ॥ स्वप्नकल्प्योपाधिभेदादेकमेवेदंज्ञानम नेकधाभिन्नमित्यत्रदृष्टांतमाह ॥ आधिभेदादिति ॥ मणेःस्फ टिकादेराधिभेदान्नीलपीताद्युपाधिभेदात्तथाज्ञानमेकमनेकधा जायतइत्यर्थः ॥१६ ॥

जाग्रतश्च यथा भेदो ज्ञानस्यास्य
विकल्पितः ॥ बुद्धिस्थं व्याकरो
त्यर्थं भ्रांत्या तृष्णोद्भवक्रियः॥१७॥

यथास्वप्नेनिर्भेदस्यज्ञानस्यकल्पितोपाधिभेदादशेषव्यवहा

रास्पदत्वंदृष्टमेवंजागरितेप्यशेषव्यवहारास्पदत्वंतस्योपपन्नमि तिदार्ष्टांतिकमाह ॥ जाग्रतश्चेति ॥ कथंचिद्रूपस्यज्ञानस्या स्यजाग्रतिविकल्पितत्वंतदाह ॥ बुद्धिस्थमितिआत्माखल्वज्ञा नकंचुकःप्रथमंबुद्धिंपरिकल्प्यततस्तत्कंचुकः संस्तदविवेकाद्वां त्याबुद्धिस्थमेवार्थंव्याकरोतिस्वात्मगततयाकल्पयन्व्यवहरति ततश्च भ्रांतिप्रयुक्ततृष्णाख्यकामोद्भूताक्रियाहानोपादानव्यव हाररूपायस्यसतथा अविद्याप्रत्युपस्थापितांतःकरणपरिणामा वस्थामवभासयस्तदविवेकादनेकरूपप्रपंचमात्मनिकल्पयन्व्य वहरतीत्यर्थः ॥ १७ ॥

**स्वप्ने तद्वत्प्रबोधे यो बहिश्चांतस्त थैव च ॥ आलेख्याध्ययने यद्वत्तद न्योन्यधियोद्भवं ॥१८॥**

स्वप्नदृष्टांतसिद्धमनूद्यदार्ष्टांतिकंनिगमयत्यर्द्धेन ॥ स्वप्नेतद्व दिति ॥ यद्वत्स्वप्नेव्यवहारस्तद्वत्प्रबोधेपिव्यवहारः ॥ यथैवस्व प्नेतर्बहिर्भावंतथैवप्रबोधेप्यंतर्बहिर्भावइतियोजना ॥ अंतर्बहि र्भावेनप्रथमानोव्यवहारः ॥ स्वप्नवत्कल्पितइत्युक्त्वातत्रैवदृष्टां तांतरमाह ॥ आलेख्येति ॥ यथाआलेख्यापेक्षयाध्ययनंश्लो कादेरध्ययनापेक्षयाचपत्रादौपुनरालेखनंमिथैवसर्वगतानांनि रवयवानांवर्णानांलेखनासंभवादित्यर्थः ॥ एषाक्षरयोजनाआ लेख्यंच अध्ययनंचालेख्याध्ययनेतदुभयंयथान्योन्यधियोद्भव मंतर्बहिर्भावेनपरस्परापेक्षबुद्धिजन्यंबहिरेखाविशेषाकारेणानु भूतमपेक्ष्यांतर्बुद्धौसंस्काररूपेणाधीयतेतदपेक्ष्यचबहिःशब्द व्यवहारापालिख्यतइत्यक्षरेषुदृष्टयोरन्योन्यापेक्षत्वेनालेख्या

ध्ययनयोरवस्तुत्वंयद्वत्तद्वदात्मन्यप्यंतर्बहिर्भावेनदृश्यमानःसर्वोऽव्यवहारोनवस्तुसन्निति ॥ १८ ॥

यदायं कल्पयेद्भेदं तत्कामः सन् यथाक्रतुः ॥ यत्कामस्तत्क्रतुर्भूत्वा कृतं यत्तत्प्रपद्यते ॥ १९ ॥ ॥

बुद्धिनिष्ठमर्थंव्याकुर्वन्भ्रांत्यातृष्णोद्भवक्रियइत्युक्तंप्रपंचयति ॥ यदायमिति ॥ अयमात्मापूर्वभ्रांतिसंस्कारवशाद्यदाबुद्धिकंचुकारूढः सन्नविद्ययाभेदंकल्पयेत्तदातत्कामः शोभनत्वेनाध्यस्तविषयभेदेभिलाषवान्सन्यथाक्रतुर्यथाकामंकृतसंकल्पो भवति ॥ क्रतुःसंकल्पइदमहंसाधयिष्यइत्यध्यवसायरूपः ततश्चयत्कामःतत्क्रतुर्भूत्वायत्कामसाधनंकर्मकृतंतन्निष्पादितंतत्फलावस्थंप्रपद्यतेप्राप्नोतिपुनस्तत्संस्कारसचिवोभेदंपरिकल्प्यकामक्रतुपूर्वकंकर्मानुष्ठायफलभागित्येवमन्योन्यधियाहेतुफलात्मनापरिकल्पितंसंसारमनुभवतीत्यर्थः ॥ तथाचश्रुतिः ॥ अथोखल्वाहुःकाममयएवायंपुरुषइतिसयथाकामोभवतितथाक्रतुर्भवतितत्कर्मकुरुतेयत्कर्मकुरुतेतदभिसंपद्यतइति १९

अविद्याप्रभवं सर्वमसत्तस्मादिदं जगत् ॥ तद्वता दृश्यते यस्मात्सुषुप्ते न च गृह्यते ॥ २० ॥ ॥

उक्तंदृश्यमिथ्यात्वंसोपपत्तिकमुपसंहरति ॥ अविद्याप्रभवमिति ॥ तद्वताविद्यावतायस्माद्दृश्यतेतदभावेसुषुप्तेनचनैवगृह्य

ते ॥ तस्मात्सर्वमिदंजगदविद्याप्रभवंमिथ्याज्ञानाविजृंभितम सदपरमार्थमितियोजना ॥ २० ॥

विद्याविद्ये श्रुतिप्रोक्ते एकत्वान्य
धियौ हि नः ॥ तस्मात्सर्वप्रयत्ने
न शास्त्रे विद्या विधीयते ॥ २१ ॥

तर्हिजगद्धेतुरविद्याकीदृशीतन्निवर्तिकाविद्यावाकीदृशीके नवाविद्याविद्येज्ञायेतेइत्याकांक्षायामाह ॥ विद्याविद्येति ॥ एकत्वान्यधियौविद्याविद्येब्रह्मात्मैकत्वधीर्विद्यातद्भेदधीरविद्येति स्वरूपोक्तिः श्रुतिप्रोक्तेइतिज्ञापकोक्तिः अथयोन्यांदेवतामि तिश्रुत्याभेदधियोऽविद्यात्वंलोकानुभवसिद्धभेदानुवादरूपतयो क्तं ॥ किमुतद्ब्रह्मोविदित्याक्षेपपुरःसरंब्रह्मवाइदमग्रआसीत्तदा त्मानमेवावेदहंब्रह्मास्मीतिप्रवृत्ताप्रमाणभूताऽप्रसिद्धार्थबोधिनी श्रुतिरेकत्वज्ञानस्यविद्यात्वंज्ञापयतिनोस्माकमित्यर्थः॥ यस्मा दविद्यावद्विद्यालोकस्यानुभवसिद्धानभवति तस्मात्सर्वप्रयत्ने नाध्यारोपापवादप्रबंधनिर्माणेनशास्त्रेविद्याविधीयतेप्रतिपाद्यत इतिमुमुक्षुःशास्त्रतस्तत्परोभवेदित्यर्थः ॥ २१ ॥

चित्ते ह्यादर्शवद्यस्माच्छुद्धे विद्या
प्रकाशते ॥ यमैर्नित्यैश्च यज्ञैश्च
तपोभिस्तस्य शोधनम् ॥ २२ ॥

शास्त्रेचेत्सर्वप्रयत्नेनाविद्याव्युत्पाद्यतेकिमितितर्हिसर्वोपिशा स्त्रेनप्रवर्तते प्रवर्तमानोवाकथंविद्यांनप्राप्नोतीत्यपेक्षायांचित्त

शुद्ध्यभावादित्यभिप्रेत्याह चित्तेहीति ॥ तस्माच्चित्तशुद्धिः कर्त्तव्येतिशेषः तर्हिकैरुपायैःचित्तशोधनमित्यपेक्षायामाह ॥ यमैरिति ॥ अहिंसाब्रह्मचर्यादयोयमास्तैर्नित्यैःशौचादिभिर्नियमैरित्यर्थः ॥ यज्ञैःस्वाश्रमाविहितधर्मैरीश्वरसात्कृतैःतपोभिश्चतस्यचित्तस्यशोधनंकार्यमित्यर्थः ॥ २२ ॥ ॥ ॥

शारीरादि तपः कुर्यात्तद्विशुद्ध्यर्थ मुत्तमम् ॥ मनआदिसमाधानं त त्तद्देहविशोषणम् ॥ २३ ॥

तपःशब्दार्थमाह ॥शारीरादीति ॥ तस्यस्वरूपंभगवतोक्तम्॥ देवद्विजगुरुप्राज्ञपूजनंशौचमार्जवं ॥ ब्रह्मचर्यमहिंसाचशारीरंतपउच्यते ॥ अनुद्वेगकरंवाक्यंसत्यंप्रियहितंचयत् ॥ स्वाध्यायाभ्यसनंचैववाङ्मयंतपउच्यते ॥ मनःप्रसादःसौम्यत्वंमौनमात्मविनिग्रहः॥भावसंशुद्धिरित्येतत्तपोमानसमुच्यतइति ॥ एतान्यपिसात्त्विकान्यनुष्ठेयानि नराजसतामसानि ॥ तत्रसात्त्विकतपोलक्षणम् ॥ श्रद्धयापरयातप्तंतपस्तत्त्रिविधंनरैः ॥ अफलाकांक्षिभिर्युक्तैःसात्त्विकंपरिचक्षतेइति ॥ एतदुक्तमुत्तममिति॥तद्विशुद्ध्यर्थंचित्तविशुद्ध्यर्थं मनआदीत्यादिपदाद्बाह्येंद्रियनिग्रहः समाधानंनैश्चल्यं तत्रतत्रेत्यस्मिन्नर्थेतत्तच्छब्दः तेषुतेष्वृतुषुदेहविशोषणशीतोष्णवर्षवातसहनेनकृशीकरणमित्यर्थः ॥ २३ ॥ ॥ ७ ॥ ॥ ७ ॥

मनसश्चेंद्रियाणां च ह्यैकाग्र्यं परमं तपः ॥ तज्ज्यायः सर्वधर्मे

भ्यः स धर्मः पर उच्यते ॥ २४॥

एवमारादुपकारकंतपउक्त्का श्रवणादौसन्निपत्योपकारकंत पोविशेषंस्मृतिवचनपाठेनाह ॥ मनसश्चेति ॥ ऐकाग्र्यंश्रुत्युक्तवस्तुनिमननद्वारास्थिरीकरणं एतस्यावश्यकर्तव्यत्वायस्तुतिःक्रियतेतज्ज्यायइति ॥ २४ ॥

दृष्टं जागरितं विद्यात्स्मृतं स्वप्नं तदेव तु ॥ सुषुप्तं तदभावं च स्वमात्मानं परं पदं ॥ २५ ॥

एवमुक्तैःसाधनैःसंशुद्धचित्तःश्रवणादिपरःसन्नवस्थात्रयात्तत्साक्षिणंविविच्यवाक्यात्ब्रह्मात्मत्वेनजानीयादित्याह ॥ दृष्टमिति ॥ दृष्टंदर्शनंबाह्येंद्रियैर्बाह्यार्थोपलंभनंजागरितंविद्यात्॥ तदेवतुदृष्टशब्दवाच्यमेवस्मृतं संस्कारवशान्निद्रादशायांभातंस्वप्नंविद्यात्तदभावंतयोर्दृष्टस्मृतयोरभावोयस्मिंस्तत्सुषुप्तंविद्यात् ॥ एवंदृश्यत्रयंपृथक्कृत्यतत्साक्षिणंस्वंस्वरूपभूतमात्मानंपरंपदंसत्यज्ञानादिलक्षणंब्रह्माहमस्मीतिविद्यादित्यर्थः ॥२५ ॥

सुषुप्त्याख्यं तमोज्ञानं बीजंस्वप्नप्रबोधयोः ॥ स्वात्मबोधप्रदग्धं स्याद्बीजं दग्धं यथाभवं ॥ २६ ॥

नन्ववस्थात्रयहेतावज्ञानेसतिकथंतद्विविक्ततयाप्रत्यगात्मनोब्रह्मत्वमुपपद्यतइतितत्राह ॥ सुषुप्त्याख्यमिति ॥ तमइतिविशेषणेनाज्ञानस्यभावरूपत्वमुच्यतेततोबीजत्वमुपादानत्वमु

पद्यते तदज्ञानंस्वात्मनःसम्यग्बोधाग्निनाप्रकर्षेणनिर्लेपंदग्धं स्याद्यथादग्धंबीजमभवंभवशून्यंकार्योत्पादकंनभवतितथात त्वज्ञानाग्निदग्धमज्ञानंपुनरवस्थाप्ररोहकरंनभवतीतियुज्यते॥ एवंप्रतीचोब्रह्मत्वमित्यर्थः ॥ २६ ॥

**तदेवैकं त्रिधा ज्ञेयं मायाबीजं पु नः क्रमात् ॥ मायाव्यात्माऽविका रोपि वहुधैको जलार्कवत् ॥२७॥**

अज्ञानस्यावस्थाबीजत्वमुक्तमुपपादयन्नज्ञाननिवृत्त्यैवसर्व संसारोपाधिनिवृत्तिर्नयत्नांतरसाध्येतिदर्शयति ॥ तदेवैकमि ति ॥ तदेवैकंमायाख्यंबीजंत्रिधाभिन्नंक्रमात्सुषुप्त्यादिक्रमेणे त्यर्थः ॥ पुनरित्यत्रवीप्सादष्टव्या ॥सुषुप्तिमारभ्य जागरितपर्यं तंतदारभ्यसुषुप्तिपर्यंतमहरहस्त्रिधाविक्रियतइत्यर्थः एतदुक्तं भवति ॥ चिन्मात्राश्रयविषयमेकमेवाज्ञानमनाद्यनिर्वचनीय मनेककार्यविक्षेपसंस्कारोपेतंचैतन्याभासखचितंस्वाश्रयेआ त्मन्यध्यात्माधिदैवतभेदेनप्राज्ञेश्वरोपाधिविशिष्टसुषुप्तिमलया वस्थाकारंजायते तथातैजसहिरण्यगर्भोपाधिसंभिन्नस्वप्नसृ ष्ट्यवस्थात्मकंभवति तथापुनर्विश्ववैश्वानरोपाधिखचितजाग्र त्स्थित्यवस्थारूपमापद्यते तत्रापिदेवतिर्यङ्मनुष्यस्थावरादि भेदेननानाविधशरीरेंद्रियांतःकरणोपाध्याकारंसत्प्रत्यक्ब्रह्म चिदात्मन्यनंतजीवभेदव्यवहारनिर्वाहकंभवति॥यथैकंवटादि बीजंमृदाश्रितंसत्तस्यामेवमृदिअंकुरकांडविटपशाखापत्रपुष्प फलादिभावमापद्यपुनर्बीजभावंचापद्यतेतथेदमपीतिदष्टव्यं ॥ तदेववृक्षाकारंवस्तुमूलदाहेसतितत्रैवमृद्भावमापद्यपुनर्नभव

तियथातथासंसारवृक्षमूलाज्ञानस्यतत्त्वज्ञानाग्निनादाहेस्वाश्र यचिदेकात्मनाविलीनत्वात्पुनर्नदर्शनयोग्योभवतिसंसारइत्य ज्ञानदाहायैवतत्त्वज्ञानेयतितव्यमिति ॥ तदेवैकंत्रिधेत्युक्तेत मोबीजस्यस्वातंत्र्येणप्रवृत्तिशंकास्यात्तथासतिसांख्यसिद्धांता पातइत्यतस्तमसोपेक्षितमाश्रयंदर्शयाति ॥ मायावीति ॥ आ त्मानिरूपचरितव्याप्तिमान्स्वप्रकाशचिदेकरसोमायावीमाया दिशब्दवाच्याज्ञानाश्रयइत्यर्थः ॥ मायाश्रयश्चेदात्मातर्हित स्यमायाविक्षिप्तानंतोपाधिष्वनेकधाविक्षिप्यमाणस्यकथंकूट स्थत्वमित्याशंक्यदृष्टांतेनमत्याचष्टे अविकारइति॥एकएवात्मा स्वगतविकाररहितोपिबहुधाविभाव्यमानोभवतिजलार्कवत् ॥ यथैकएवार्कोजलभेदोपाधिष्वनेकधाविभाव्यमानोपिनानेको भवतिनवाजलोपाधिविकारेणविक्रियतेतथायमपीत्यर्थः ॥२७

**बीजं चैकं यथा भिन्नं प्राणस्वप्ना दिभिस्तथा ॥ स्वप्नजाग्रच्छरीरेषु तद्वच्चात्मा जलेंदुवत् ॥ २८ ॥**

उक्तमेवदृष्टांतदार्ष्टांतिकरूपंप्रपंचयति ॥ बीजंचेति॥प्राणइ त्यव्याकृतावस्थोक्तिःस्वप्नादिभिरितिजाग्रदवस्थामूर्छावस्थाच गृह्यते यथैकमविद्यामायाख्यंबीजमव्याकृताद्यवस्थाभेदेनभि न्नंतथास्वप्नजाग्रच्छरीरेषुसमष्टिव्यष्टिस्थूलसूक्ष्मशरीरेषुजलेंदु वच्चिदाभासोपिभिन्नोभवति ॥ तदातदधिष्ठानभूतश्चिदात्माचो पाधिगताभासाविवेकात्तद्वद्भिन्नोविभाव्यते तैजसहिरण्यगर्भवि श्ववैश्वानरादिभेदेनप्रकाशतइत्यर्थः ॥ २८ ॥

मायाहस्तिनमारुह्य मायाव्येको यथा व्रजेत् ॥ आगच्छंस्तद्वदेवा त्मा प्राणस्वप्नादिगोचलः ॥२९॥

ननुयद्यात्मनोमायाकल्पितेषूपाधिषुबहुत्वंतर्हितत्रव्यापारवत्वमपिस्यादितिकथंकूटस्थतेत्याशंक्यदृष्टांतेननिराकरोति ॥ मायाहस्तिनमिति ॥ यथैवएकोमायावीस्वमायानिर्मितंहस्तिनमारुह्यव्रजेदिष्टंदेशमागच्छंश्चभवतिगमनागमनेआचरन्निवभासमानोप्यचलएवतद्वत्तथैवात्माप्राणस्वप्नादिगतत्वेनविभाव्यमानोप्यचलःकूटस्थएवेत्यर्थः ॥ २९ ॥

न हस्ती न तदारूढो मायाव्यन्यो यथास्थितः ॥ न प्राणादि न तद्द्रष्टा तथा ज्ञोन्यः सदादृशिः ॥३०॥

प्राणाद्युपाधिसंबंधमात्मनोंगीकृत्योक्तमिदानींसोपिनास्तिवस्तुतइत्याह ॥ नहस्तीति ॥ निगदव्याख्यातंपद्यम् ॥३०॥

अबद्धचक्षुषो नास्ति माया मायाविनोपि वा ॥ बद्धाक्षस्यैव सा माया मायाव्येव ततो भवेत् ॥३१॥

वस्तुतःप्राणाद्युपाधिसंबंधाभावेपिमायासंबंधोऽपरिहार्यइत्यतआह ॥ अबद्धेतिनबद्धंचक्षुर्यस्यसोऽबद्धचक्षुस्तस्यलौकिकस्ययथामायानास्तिमायाविनोपितथाचक्षुर्बंधाभावान्मायाना

स्तिवाशब्दइवार्थः॥अपिशब्दादवस्तुत्वनिश्चयादपिमायावीन व्यामुह्यतीत्यर्थः॥व्यतिरेकमुक्त्वान्वयमाह॥बद्धाक्षस्यैवेतिसा मायाबद्धाक्षस्यैवभयहेतुहस्त्यादिरूपाभासतइत्यर्थः॥ततस्त स्मादमायाव्येवमायोपलक्षितएवभवेत्पुमान्मायाधारइत्यर्थः॥ अयमेवश्लोकोदार्ष्टांतिकेपियोज्यः॥ अबद्धचक्षुषोमायानावृत चित्स्वभावस्यमायाविनोपिमायावित्वेनविभाव्यमानस्यापिमा यानास्ति व्यामोहहेतुर्हिमाया साहमस्मिपरंब्रह्मेतिप्रकाशमान आत्मनिविरोधादेवनभवतीत्यर्थः॥ वाशब्दोलोकप्रसिद्धमाया विद्दष्टांतार्थः॥ तथाचज्ञानावस्थायांकदाचित्प्राणाद्याकारां मायांपश्यन्नप्यज्ञानावस्थायामिवनव्यामुह्यतिकिंतुसुषुप्तवन्नि र्विकारएवभवतीत्यर्थःसमानमन्यत्॥३१॥

**साक्षाद्देवःसविज्ञेयः साक्षादात्मेति च श्रुतेः॥ भिद्यते हृदयग्रंथिर्नचे दित्यादितःश्रुतेः॥३२॥॥**



तस्मात्साक्षाद्ब्रह्मात्मज्ञानादमायावीमायातत्कार्यसंबंधवि निर्मुक्तोभवतीत्ययमर्थःश्रुतिसिद्धः श्रद्धेयोमुमुक्षुणेत्याह॥ साक्षाद्देवइति॥ ससर्वविकारसाक्षीकूटस्थआत्मासाक्षाद्देवो विज्ञानमानंदंब्रह्मेत्युक्तलक्षणोविज्ञेयः॥ यत्साक्षादपरोक्षाद्ब्र ह्मयआत्मासर्वांतरइतिब्रह्मात्मैकत्वश्रुतेरित्यर्थः॥ एवंविज्ञाने लाभमविज्ञानेहानिंचश्रुत्यादर्शयति॥भिद्यतेइति॥ नचेदिहावे दीर्महतीविनष्टिरित्यादितइत्यादिशब्दादेकधैवानुद्रष्टव्यंमृत्योः समृत्युमाप्नोतियइहनानेवपश्यतीत्यादिश्रुतयोगृह्यंते॥३२॥

अशब्दादित्वतो नास्य ग्रहणं चेंद्रियैर्भवेत् ॥ सुखादिभ्यस्तथान्यत्वाद्बुद्ध्या वापि कथं भवेत् ॥ ३३ ॥

साक्षादात्मविज्ञानमुक्तमाक्षिपाति॥अशब्दादित्वतइति॥बाह्यांतःकरणाग्राह्यत्वादात्मनःकथंसाक्षाद्विज्ञानंस्यादित्यर्थः॥३३॥

अदृश्योपि यथा राहुश्चंद्रे बिंबं यथांभसि ॥ सर्वगोपि तथैवात्मा बुद्धावेव स गृह्यते ॥ ३४ ॥

परिहरति॥अदृश्योपीति॥यथास्वरूपेणादृश्योपिराहुश्चंद्रेचंद्रमंडलेउपरक्तोदृश्यते॥यथावांभसिजलेचंद्रादेर्बिंबंदृश्यतेतथैव चक्षुराद्यगोचरोपिसपरमात्मासर्वगोपिसर्वत्रवर्त्तमानोपितत्त्वमस्यादिमहावाक्योत्थबुद्धावेवप्रतिबिंबितःसन्गृह्यतेतत्रप्रतिबिंबिततयास्वतः स्फुरणमेवग्रहणंनविषयीभावइत्यर्थः ॥ शास्त्रैकगम्यस्यापिप्रत्यक्षत्वेराहुदृष्टांतःसर्वसन्निहिततयाभासमानस्यसर्वत्रयथावदस्फुरतोप्युपाधिविशेषेयथावत्स्फुरणे प्रतिबिंबदृष्टांतइतिविवेकः ॥ ३४ ॥

भानोर्बिंबं यथा चौष्ण्यं जले दृष्टं नचांभसः ॥ बुद्धौ बोधो न तद्धर्मस्तथैव स्याद्द्विधर्मतः ॥ ३५ ॥

बुद्धौबोद्धात्मागृह्यतेचेद्बुद्धिधर्मोबोधइतिशंकांदृष्टांतेनप्रत्या चष्टेभानोरिति ॥ यथाजलेदृष्टंबिंबमौष्ण्यंचभानोरेवनचांभसो जलस्यधर्मस्तस्यशैत्यस्वाभाव्यात्तथैवबुद्धौस्फुरन्बोधोनबुद्धिध र्मःस्यात्कुतोविधर्मतोविपरीतधर्मतोबुद्धेर्जाड्यधर्मत्वनिश्चया दित्यर्थः ॥ ३५ ॥

**चक्षुर्युक्ता धिया वृत्तिर्या तां पश्य न्न लुप्तदृक् ॥ दृष्टेर्द्रष्टा भवेदात्मा श्रुतेः श्रोता तथा भवेत् ॥ ३६ ॥**

नकेवलंशास्त्रीयबुद्धावेवचिद्धातुःपरमात्मास्फुरतिकिंतुलौ किकीष्वपिविषयाकारबुद्धिवृत्तिष्वात्मास्वतोऽपरोक्षःसाक्षित यास्फुरतीत्याह ॥ चक्षुरिति चक्षुर्द्वारिकारूपाकारायाधियोवृ त्तिस्तांपश्यन्नवभासयन्नात्माऽलुप्तदृगकुंठितज्ञानशक्तिर्दृष्टेर्द्रष्टा भवेत् ॥ एवमुत्तरत्रापियोज्यं ॥ ३६ ॥

**केवलां मनसो वृत्तिं पश्यन्मंता मतेरजः ॥ विज्ञाताऽलुप्तशक्तित्वा त्तथा शास्त्रं नहीत्यतः ॥ ३७ ॥ ॥**

केवलामिति ॥ चक्षुरादिद्वाराबहिरप्रवृत्तामंतरेवविषयाका रामित्यर्थः ॥ अजोविकाररहितइत्यर्थः ॥ अलुप्तचिच्छक्तित्वा दित्यर्थः ॥ अलुप्तशक्तित्वेश्रुतिमुदाहरति ॥ तथाशास्त्रमिति ॥ एतदित्यस्मिन्नर्थेतःशब्दःतसेःसार्वविभक्तिकत्वांगीकारात् सप्तम्यर्थेयंतसिरितिकेचित् ॥ नहिद्रष्टुर्दृष्टेरित्यारभ्यनहिवि

ज्ञातुर्विज्ञातेर्विपरिलोपोविद्यतइतिश्रुतेरित्यर्थः ॥ दृष्टेर्द्रष्टेत्या दौचनदृष्टेर्द्रष्टारंपश्यन्नश्रुतेःश्रोतारंशृणुयान्नमतेर्मंतारंमन्वीथा नविज्ञातेर्विज्ञातारंविजानीयाएषतआत्मासर्वांतरइतिश्रुतिरु दाहार्या ॥ ३७ ॥

ध्यायतीत्यविकारित्वं तथा लेला
यतीत्यपि ॥ अत्र स्तेनेति शुद्धत्वं
तथानन्वागतं श्रुतेः ॥ ३८ ॥ ॥

द्रष्टृत्वादिव्यपदेशाद्विकारित्वाशुद्धत्वप्रसक्तिमाशंक्याह ॥ ध्यायतीति ॥ श्रुताविवशब्दाद्ध्यानचलनयोराभासत्वमुच्यते ॥ अतोऽविकारित्वंसिद्धमित्यर्थः ॥ अत्रस्तेनोऽस्तेनोभवतिभ्रू णहेति ॥ अनन्वागतंपुण्येनानन्वागतंपापेनेतिचश्रुतेःशुद्ध त्वंसिद्धमित्यर्थः ॥ ३८ ॥

शक्त्यलोपात्सुषुप्ते ज्ञस्तथा बोधे
ऽविकारतः ॥ ज्ञेयस्यैव विशेषस्तु
यत्र वेति श्रुतेर्वचः ॥ ३९ ॥

ननुसुषुप्तेज्ञानाभावाज्जाग्रत्स्वप्नयोश्चतद्भावादात्मनःकथ मविकारित्वमित्यतआह॥शक्त्यलोपादिति सुषुप्तेप्यात्माज्ञएव शक्त्यलोपादितियोजना यद्वैतंनपश्यतिपश्यन्वैतन्नपश्यतीत्या दिश्रुतेरित्यर्थः॥तथाबोधेबोधदशायांजाग्रत्स्वप्नयोरितियावत्॥ ज्ञोज्ञानस्वरूपएवात्मानिरवयवत्वेनाविकारतोविकारानुपपत्ते रित्यर्थः अवस्थात्रयेपिनिर्विशेषचिद्रूपश्चेदात्माकथंतर्हिनाज्ञा

सिषमितिसुषुप्तिपरामर्शोबोधावस्थायांच कथंजानामीत्यनुभवइत्याशंक्यविषयोपरमानुपरमोपाधिनिबंधनंतदुभयंनस्वरूपनिबंधनंतथैवश्रुत्योक्तत्वादित्याह ॥ ज्ञेयस्येति ॥ यत्रवाअन्यदिवस्यात्तत्रान्योन्यत्पश्येदित्यादिकायत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदित्यादिकाचोदाहरणं ॥ ३९ ॥

**व्यवधानाद्धि पारोक्ष्यं लोकदृष्टेर नात्मनः ॥ दृष्टेरात्मस्वरूपत्वात्प्रत्यक्षं ब्रह्म तत्स्मृतं ॥ ४० ॥ छ ॥ ॥**

एवंनित्यचैतन्यस्वरूपत्वान्नित्यापरोक्षोनिर्विकारश्चात्मेत्युक्तंप्रपंचयति ॥ श्लोकत्रयेण ॥ व्यवधानाद्धीति ॥ अनात्मनोघटादेर्विषयस्यग्राहिकायालोकदृष्टेस्तद्ग्राहकचक्षुरादिदृष्टेर्देशतःकालतोवाव्यवधानादसन्निकर्षात्पारोक्ष्यंहिप्रसिद्धमित्यर्थः ॥ नतथात्मनोदृष्टिव्यवधानमस्तिदृष्टेरात्मस्वरूपत्वादात्मनएवब्रह्मत्वातद्ब्रह्मस्वतएवसदाप्रत्यक्षंस्मृतंब्रह्मविद्भिरितियोजना ॥४०॥

**नहि दीपांतरापेक्षा यद्वद्दीपप्रकाशने ॥ बोधस्यात्मस्वरूपत्वान्न बोधोन्यस्तथेष्यते ॥ ४१ ॥ ॥**

स्वरूपप्रकाशस्यानन्यापेक्षत्वंदृष्टांतेनस्फुटयति ॥ नहीतिस्फुटं ॥ ४१ ॥

**विषयत्वं विकारित्वं नानात्वं वा न हीष्यते ॥ न हेयो नाप्युपादेय आ**

त्मा नान्येन वा ततः ॥ ४२ ॥छ॥

एवमपरोक्षत्वंविशदीकृत्याविकारित्वंविशदीकुर्वन्नात्मनोनिर्विशेषत्वमाह ॥ विषयत्वमिति ॥ नहीष्यतेश्रुतिविरोधादितिशेषःअन्यस्यासत्त्वात्जडत्वाच्चेतिहेतुरनुसंधेयःवाशब्दात्स्वेनापीत्यर्थः ॥४२॥

सबाह्याभ्यंतरो जीर्णो जन्ममृत्यु
जरातिगः ॥ अहमात्मेति यो वेत्ति
कुतोन्वेव बिभेति सः ॥ ४३ ॥

नन्वेवमपिकुतआत्मनोनिर्विकारत्वंनरकपातादिभयदर्शनादित्याशंक्याह ॥ सबाह्याभ्यंतरइति ॥ सम्यक्पदार्थशोधनपूर्वकंयआत्मतत्त्वंजानातिसकुतोन्वेवबिभेति ॥ भयहेतोर्द्वितीयस्यबाधितत्वादित्यर्थः ॥४३॥

प्रागेवैतद्विधेःकर्म वर्णित्वादेरपोह
नात् ॥ तदस्थूलादिशास्त्रेभ्यस्तत्त्व
मेवेति निश्चयात् ॥ ४४ ॥ ॥

तथापियावज्जीवादिश्रुतिविहितत्वात्कर्मणांतदकरणेप्रत्यवायभयंविदुषोप्यस्तीतितत्परिहारायानुष्ठानंस्यादितिचेन्नेत्याह ॥ प्रागेवेति ॥ अस्थूलादिशास्त्रेभ्योवर्णित्वादेःकर्माधिकारहेतोरपोहनात्तत्त्वमेवेतिवाक्येनब्रह्मस्वरूपत्वनिश्चयादेतद्विधेरेतदात्मतत्त्वविधानात्प्रतिपादनात्प्रागेवपूर्वमेवतद्यावज्जीवादी

शास्त्रविहितंकर्मनोर्ध्वमितियोजना ॥ अनधिकारिणोऽकरणे प्रत्यवायासंभवान्नानुष्ठानप्राप्तिरितिभावः ॥ ४४ ॥

पूर्वदेहपरित्यागे जात्यादीनां प्रहाणतः ॥ देहस्यैव तु जात्यादिस्तस्याप्येवं ह्यनात्मता ॥ ४५ ॥ ॥

आत्मनोऽध्यासंविनानवर्णित्वाद्यस्तीत्यत्रयुक्तिमाह ॥ पूर्वेति ॥ देहपरित्यागेतदनुरक्तजातेरपिपरित्यागादागमापायित्वेननजात्यादेरात्मधर्मत्वंकिंतुदेहस्यैवजात्यादिर्धर्मः ॥ तर्हिदेहएवात्मास्त्वित्यत आह ॥ तस्यापीति ॥ एवमागमापायित्वादेवदेहस्याप्यनात्मतेत्यर्थः ॥ देहस्यजात्यादेश्चवर्णित्वादिनाप्रकारेणकर्माधिकारहेतोरभावादात्मनोनस्वभावतःकर्मकर्तृत्वमुपपद्यतइतिभावः ॥ ४५ ॥

ममाहं चेत्यतोऽविद्या शरीरादिष्वनात्मसु ॥ आत्मज्ञानेन हेया स्यादसुराणामिति श्रुतेः ॥ ४६ ॥ ॥छ

शरीरादिषुआत्मीयाभिमानस्यप्रसिद्धत्वेनहेयत्वायोगमाशंक्याह ॥ ममाहमिति ॥ यतआत्मन्यागमापायाभ्यामनात्मत्वंदेहादेर्निश्चितमतोहेतोःशरीरादिष्वनात्मसुममाहंचेत्यभिमानोऽविद्यामिथ्याप्रत्ययःसात्मज्ञानेनात्मतत्त्वब्रह्मात्मानुसंधानेनहेयास्याद्राध्यास्यादेहात्मदृष्टेरासुरत्वेनानिंदाश्रुतेश्चेत्याह ॥ असुराणामिति ॥ असुराणांह्येषोपनिषदितिश्रुतेरित्यर्थः ॥ ४६॥

दशाहाशौचकार्याणां पारिव्राज्ये निवर्तनं ॥ यथा ज्ञानस्य संप्राप्तौ तद्वज्जात्यादिकर्मणां ॥ ४७ ॥

तत्त्वज्ञानादूर्ध्वंनकर्मनवातत्प्रयोजकंजात्याद्यात्मनोस्तीत्ये तद्दृष्टांतेनसाधयति ॥ दशाहेति ॥ पारिव्राज्येसातिसपिंडता भिमानाभावात्संन्यासिनोयथाऽऽशौचादेरननुष्ठेयतातथाब्रह्मा त्मज्ञानस्यसंप्राप्तौजात्याद्यभिमानाभावाद्विदुषःकर्मानुष्ठाना भावइत्यर्थः ॥ ४७ ॥

यत्कामस्तत्क्रतुर्भूत्वा कृतं त्वज्ञः प्रपद्यते ॥ यदा स्वात्मदृशः कामाः प्रमुच्यंतेऽमृतस्तदा ॥ ४८ ॥

यस्मादेवमात्मनोब्रह्मात्मत्वाज्ञानमूलोदेहाद्यध्यासनिबंध नःसंसारस्तस्मात्तत्त्वज्ञानात्प्राक्कामादियुक्तोधर्माधर्मद्वारासंसर ति ॥ ब्रह्मात्मज्ञानेचसतिकामादेरभावान्मुक्तोभवेदित्याह ॥ यत्कामइति ॥ स्वेस्वरूपेब्रह्मण्येवात्मदृष्टिर्यस्यसस्वात्मदृक् तस्यस्वात्मदृशइतिविग्रहः ॥ यदासर्वेप्रमुच्यंतेकामायेस्यहृ दिश्रिताः ॥ अथमर्त्योऽमृतोभवतीतिश्रुतेःहृदय्याःकामाःहृ दयाध्यासबाधनेनबाधिताःसंतोयदाप्रकर्षेणमुच्यंतेतदाप्रवृत्ति बीजाभावात्स्वात्मसंस्थआत्माऽमृतोमुक्तसंसारबंधनोभवती त्यर्थः ॥ ४८ ॥

आत्मरूपविधेः कार्यं क्रियादि

भ्यो निवर्तनं ॥ न साध्यं साधनं वात्मा नित्यतृप्तः स्मृतेर्मतः॥४९॥

एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतिनित्यतृप्तो निरंजनइत्यादिश्रुतेरात्मनोनित्यतृप्तत्वावगमात्तस्यसाध्यसाधनविलक्षणत्वेनस्वतः क्रियादिसंस्पर्शित्वाभावादध्यासमूलत्वं क्रियातत्कारकयोगस्येतिनिश्चित्यात्मतत्त्वावबोधनेनैव क्रियादित्याज्यमित्याह ॥ आत्मरूपेति ॥ विधिर्विधानंतत्स्वरूपावधारणं ॥ ४९ ॥

उत्पाद्याप्यविकार्याणि संस्कार्यं च क्रियाफलं॥ नातोन्यत्कर्मणा कार्यं त्यजेत्तस्मात्ससाधनं॥५०॥

यद्यपिविज्ञातात्मतत्त्वस्यक्रियाहेत्वभावात्तदभावस्तथापि जिज्ञासोर्मुमुक्षोर्मोक्षायक्रियानुष्ठानंस्यादित्याशंक्यमोक्षस्यक्रियाफलविलक्षणत्वान्नतस्यापिक्रियासंभवइत्याह॥ उत्पाद्येति॥ ससाधनंजायापत्यवित्तशिखायज्ञोपवीतादिसाधनसहितकर्मविधिलक्षणंत्यजेन्मुमुक्षुरितिशेषः ॥ कृतकस्यानित्यत्वान्मोक्षस्यचनित्यात्मस्वरूपावस्थानरूपत्वान्नमुमुक्षोरपिकर्मणाकृत्यमस्तीतिभावः ॥ ५० ॥

तापांतत्वादनित्यत्वादात्मार्थत्वाच्च या बहिः ॥ संहृत्यात्मनि तां प्रीतिं सत्यार्थी गुरुमाश्रयेत्॥५१॥

किंससाधनकर्मत्यागमात्रेणमुक्तिसिद्धिःकिंवान्यत्किमपिकृत्यमस्तीत्यपेक्षायामात्मतत्त्वज्ञानायगुरूपसत्तिःकर्तव्येत्याह ॥ तापांतेति ॥ यद्वा यस्मात्सर्वकर्मनिबंधनाप्रीतिरनित्यादुःखांतास्वार्थप्रयुक्ताच तस्मात्तन्निमित्तांप्रीतिमनात्मविषयामात्मन्येवोपसंहृत्यानित्यपुरुषार्थीगुरुंसंश्रयेतेतिमुमुक्षुंशिक्षयति ॥ तापांतत्वादिति ॥ याबहिरात्मनोन्यत्रजायापुत्रादौप्रीतिस्तांप्रीतिमात्मन्युपसंहृत्यात्मसात्कृत्वेत्यर्थः ॥ ५१ ॥

**शांतं प्राज्ञं तथा मुक्तं निष्क्रियं ब्रह्म**
**णि स्थितं ॥ श्रुतेराचार्यवान्वेद त**
**द्विद्धीति स्मृतेस्तथा ॥ ५२ ॥ ॥**

उपगंतव्यंगुरुंविशिनष्टि ॥ शांतमिति शांतमक्षुब्धचित्तंप्राज्ञंमेधाविनंयथापरित्यक्तबंधसजातीयेनपुनर्बंधोनभवातितथामुक्तंनिष्किंचनमित्यर्थः ॥ निष्क्रियमैहिकामुष्मिकार्थप्रवृत्तिरहितंब्रह्मणिस्थितंस्वस्वरूपानंदानुभवेनसर्वत्रोदासीनमित्यर्थः ॥ गुरोराश्रयणीयत्वेप्रमाणमाह ॥ श्रुतेरिति ॥ आचार्यवान्पुरुषोवेदेतिचश्रुतेः॥ तद्विद्धिप्रणिपातेनपरिप्रश्नेनसेवया॥ उपदेक्ष्यंतितेज्ञानंज्ञानिनस्तत्त्वदर्शिनइतिस्मृतेश्चेत्यर्थः॥ ५२॥

**स गुरुस्तारयेद्युक्तं शिष्यं शिष्यगु**
**णान्वितं ॥ ब्रह्मविद्याप्लवेनाशु स्वां**
**तध्वांतमहोदधिं ॥ ५३ ॥ छ ॥ छ**

उक्तप्रमाणानुसारेणोक्तविशेषणगुरूपगमनेफलंनिरतिशयं

दर्शयति ॥ सगुरुरिति ॥ युक्तंसमाहितंशिष्यगुणाःप्रशांतचित्तायजितेंद्रियायेत्यत्रोक्तागुणाअमानित्वादयश्चभगवद्गीतोक्तास्तैरन्वितमित्यर्थः ॥ ब्रह्मविद्यैवप्लवोब्रह्मविद्याप्लवस्तेनेत्यर्थः ॥ स्वांतमंतःकरणंउपाधिवचनेनोपाधीयमानोजीवोलक्ष्यते तस्यध्वांतमात्मस्वभावावरणानात्मविक्षेपलक्षणमनाद्यनिर्वाच्याज्ञानंतदेवमहानुदधिरपर्यंतत्वात्तमित्यर्थः ॥ ५३ ॥ ॥

दृष्टिः स्पृष्टिः श्रुतिर्घ्रातिर्मतिर्विज्ञातिरेव च ॥ शक्तयोन्याश्च भिद्यंते चिद्रूपत्वेप्युपाधिभिः ॥ ५४ ॥ छ॥

कथमुक्तलक्षणोगुरुरुक्तलक्षणंशिष्यंसम्यग्ज्ञानेनसद्यःसंसारसागरंतारयेदित्यपेक्षायां प्रथमंपदार्थविवेकंकारयित्वावाक्यार्थज्ञानोपदेशेनेत्यभिप्रेत्य संक्षेपतःपदार्थविवेकमाह ॥ दृष्टिःस्पृष्टिरिति॥ अन्याश्चरसयतिवक्तिगत्याद्याश्चशक्तयइत्यर्थः ॥ एताद्दष्ट्यादिशक्तयोयद्यप्यखंडचिद्रूपाएवतथापितत्तदिंद्रियद्वारकबुद्धिवृत्तिभेदोपाधिभिर्भिद्यंतेनवस्तुतोभेदोस्तीतितत्तद्वृत्त्यंशपरित्यागेनसर्ववृत्तिसाक्षितयानुगतप्रकाशस्वभावएवात्मात्वंपदार्थइतिप्रथमंग्राहयेदित्यर्थः ॥ ५४ ॥

अपायोद्भूतिहीनाभिर्नित्यं दीप्यन रविर्यथा ॥ सर्वज्ञः सर्वदृक् शुद्धः सर्वं जानाति सर्वदा ॥ ५५ ॥

कथमुपाधिभिरेवचिच्छक्तिभेदःस्वरूपतएवभेदोयथानुभव

मस्त्वितिचेन्नैवमात्मनोविकारित्वापत्तेःकल्पनागौरवाच्चेत्यभि
प्रेत्यदृष्टांतेनाखंडरूपतांसाधयति ॥ अपायेति ॥ यथारविरपा
योद्भूतिहीनाभिर्विनाशजन्मशून्याभिःस्वरश्मिभिःसर्वंब्रह्मांडंदी
प्यनुप्रकाशयन्नेकएवाविकृतोवर्त्ततेतथात्माप्यपायोद्भूतिहीना
भिरेवस्वरूपभूताचिच्छक्तिभिस्तत्तद्बुद्धिवृत्त्युपाधिभेदाद्भिन्नाभिः
सर्वंविषयजातंविशेषतोजानातिसर्वदासर्वदृक्सामान्येनापिस
र्वंपश्यन्नास्तेयतःसर्वगतःसर्वदृश्याधिष्ठानत्वेनसर्वाव्यभिचारी
तस्माच्छुद्धोनिर्विकारइतियोजना ॥ ५५ ॥

अन्यदृष्टिःशरीरस्थस्तावन्मात्रो
ह्यविद्यया ॥ जलेंद्वाद्युपमाभिस्तु
तद्धर्मा च विभाव्यते ॥ ५६ ॥ छ

यद्येवमुक्तलक्षणआत्माकथंतस्यसंसारोपलब्धृतापरिच्छेद
प्रतिभासश्चेत्यतआह ॥ अन्यदृष्टिरिति ॥ अविद्ययाशरी
रस्थःस्थूलसूक्ष्मशरीरयोरेवोपलभ्यमानत्वात्तत्रवर्त्तमानस्ताव
न्मात्रःशरीरं यावत्तावन्मात्रोहमितिमन्यमानोन्यदृष्टिर्देहबाह्ये
ष्वपोव्यावृत्तात्मदृष्टिस्तद्गतधर्मैरात्मनोधर्मवत्त्वदृष्टिरपिसन्परि
च्छिन्नःसंसारीवचावभासतइत्यर्थः ॥ एतदेवदृष्टांतेनस्पष्टयति
॥ जलेंद्वादीति ॥ यथाचंद्रादिर्जलेप्रतिबिंबितोजलोपाधिभेदा
द्भेदवानिवजलकंपादिनाकंपादिमानिवचाविवेकादेवविभाव्य
तेतथैताभिरुपमाभिस्तद्धर्मेत्याद्युक्तार्थम् ॥ ५६ ॥

दृष्ट्वा बाह्यं निमील्याथ स्मृत्वा त
त्प्रविहाय च ॥ अथोन्मील्यात्म

नो दृष्टिं ब्रह्म प्राप्नोत्यनध्वगः॥५७॥

तदेवमुपाधिपरामर्शमंतरेणात्मनिभेदसंसारादेरनुपलंभादुपाधीनांचात्मनोबहिः स्वातंत्र्येणसत्तायांप्रमाणाभावादविद्यामयत्वेसतिनित्यशुद्धःपरिपूर्णएवचिदात्मेत्यवांतरवाक्यैरवधारितआत्मैवसत्यज्ञानादिलक्षणम्ब्रह्मेतिमहावाक्येनाचार्यादवगतात्मतत्त्वो मुमुक्षुरवस्थात्रयात्मकस्यैव सर्वदृश्यत्वात्तदपोहेन तत्साक्षितयातदधिष्ठानतयाचाव्यभिचारिचिदेकरसंब्रह्मात्मेतिस्वानुभवमापादयन्मुच्यतइत्यभिप्रेत्यानुसंधानप्रकारमाह ॥ दृष्ट्वेति ॥ बाह्यंजागरितंपंचीकृतपंचमहाभूततत्कार्यात्मकंसमष्टिव्यष्टिरूपंसर्वंविषयजातंदृष्ट्वा द्रष्टृदृश्यान्वयव्यतिरेकाभ्यांकार्यकारणान्वयव्यतिरेकाभ्यांचालोच्याथनिमील्यदृश्यंतत्सर्वंद्रष्टृमात्रत्वेनकार्यंसर्वंकारणभूततन्मात्रत्वेनविलाप्येत्यर्थः ॥ अथानंतरंस्मृत्वाजाग्रद्दृष्टवासनाकार्यंस्वप्नदर्शनंस्मृतिस्तांस्मृत्वाविश्ववैश्वानरसहितंस्थूलोपाधिं तद्वासनामयेलिंगे सूक्ष्मभूतसहितेप्रविलाप्यवासनामयंस्वप्नमात्रमेवतादित्यनुसंधायेत्यर्थः ॥ तदपिलिंगशरीरंवासनामयंप्रविहायचवासनासहितस्यमनःप्राणेंद्रियसंघातस्यापितत्कारणप्रपंचतन्मात्रादनतिरेकात्तावन्मात्रेणप्रविलाप्यतेषांचोत्पत्तिक्रमवैपरीत्येनतत्कारणसाभासाज्ञानमात्रत्वेनप्रविलाप्यावस्थानंतद्धानंतत्कृत्वेत्यर्थः ॥ अथानंतरंसुषुप्तौबीजात्मकमज्ञानमात्रंयद्दुर्वारंतंतदपिसदसत्त्वभिन्नाभिन्नादिप्रकारनिरूपणासहत्वाद्दिवांधपरिकल्पितांधकारवद्यत्किंचिदितिविवेकेनबाधित्वात्मनःसर्वावस्थासाक्षितयानुस्यूतसच्चिदानंदमात्रस्यदृष्टिंज्ञानप्रकाशस्वरूपामुन्मील्य निरुपाधिकांकृत्वास्थितोब्रह्मप्राप्नोति सत्यज्ञानादिलक्षणंब्रह्मैवभवतीति

यावत् अनध्वगोर्चिरादिकमध्वानंनप्राप्नोतिब्रह्मणआत्मत्वान्नगत्यायत्ताब्रह्मप्राप्तिरित्यर्थः ॥ ५७ ॥

**प्राणाद्येवं त्रिकं हित्वा तीर्णोऽज्ञान**
**महोदधिं ॥ स्वात्मस्थो निर्गुणः शु**
**द्धो बुद्धो मुक्तः स्वतो हि सः॥५८॥**

अनध्वगोब्रह्मप्राप्नोतीत्युक्तमेवविशदयन्निरुपचरितैवास्यमुक्तिर्नोपासकस्येवापेक्षिकीतिद्योतयति प्राणादितिद्वाभ्यां सुषुप्त्यादीत्यर्थः ॥ स्वात्मस्थोनार्चिरादिमार्गस्थः तथानिर्गुणः स्वात्मनिप्रविलापितसकलगुणइत्यर्थः ॥ शुद्धोनिरुपाधिकोऽतःस्वतःस्वभावतएवमुक्तइत्यर्थः ॥ ५८ ॥

**अजोहं चामरोऽमृत्युरजरोऽभय ए**
**व च॥ सर्वज्ञः सर्वदृक् शुद्ध इति बु**
**द्धो न जायते ॥ ५९ ॥ ॥**

अजोहमिति॥एवंविधोऽहंब्रह्मास्मीतियोबुद्धोऽज्ञाननिद्राया निर्गतःसनजायते पुनःशरीरंनगृण्हातीत्यर्थः॥ ५९ ॥

**पूर्वोक्तं यत्तमोबीजं तन्नास्तीति**
**विनिश्चयः ॥ तदभावे कुतो जन्म**
**ब्रह्मैकत्वं विजानतः ॥ ६० ॥**

प्रबुद्धस्यपुनर्जन्माभावेहेतुमाह॥पूर्वोक्तमिति ॥ सुषुप्त्याख्यं तमोऽज्ञानमित्यादिनायत्पूर्वोक्तमज्ञानंतत्कालत्रयेपिनास्तीति

निश्चयःकस्मिन्नपिकालेसतोज्ञानमात्रात्तिरोधानासंभवादस्यतु ज्ञानोदयमात्रएवतिरोधानाच्छुक्तिरजतवदित्यर्थःतदभावइति कारणाभावात्कार्याभावइत्यर्थः॥६०॥

क्षीरात्सर्पिर्यथोद्धृत्य क्षिप्तं तस्मि न्नपूर्ववत्॥ बुद्ध्यादेर्ज्ञस्तथाऽसत्या न्न देही पूर्ववद्भवेत् ॥ ६१ ॥ ॥

अहंब्रह्मास्मीत्यात्मानंसाक्षात्पश्यतोपिपूर्ववद्व्यवहारदर्शना त्तत्कृतधर्माधर्मनिबंधनंपुनःशरीरग्रहणंस्यादित्याशंक्यबाधि तानुवृत्तिमात्रत्वात्ज्ञानिनोऽव्यवहारस्यनतन्निबंधनःपुनःशरीर ग्रहणादिसंसारइतिदृष्टांतपूर्वकमाह ॥ क्षीरादिति ॥ य थासर्पिर्नवनीतंक्षीरादुपायेनोद्धृत्यतस्मिन्नेवनिःसारीकृतेक्षीरे क्षिप्तंनपूर्ववदविविक्तंभवतितथाऽसत्याद्बुध्यादेःसंघातात्प्रथम मात्माविविक्तोज्ञानमात्ररूपेणोद्धृतोब्रह्माहमस्मीतिवाक्यादवग तब्रह्मभावःपूर्ववत्पुनर्देहीदेहद्वयसंघाताभिमानवान्तस्मिन्वि द्यमानोपिनभवेदित्यर्थः ॥ साहंकारस्यहिकर्मबंधहेतुर्ननिरहं कारस्य तथाचोक्तंभगवता ॥ यस्यनाहंकृतोभावोबुद्धिर्यस्यन लिप्यते ॥ हत्वापिसइमांल्लोकान्नहंतिननिबध्यतइति ॥ ६१ ॥

सत्यं ज्ञानमनंतं च रसादेःपंचका त्परं ॥ स्यामदृश्यादिशास्त्रोक्तमहं ब्रह्मेति निर्भयः ॥ ६२ ॥ ॥

पदार्थशोधनपूर्वकंवाक्यादहंब्रह्मास्मीतिप्रतिबुद्धस्यपुनःसंसा

रभयशंकानास्तीत्युक्तेर्थेआनंदंब्रह्मणोविद्वान्नबिभेतिकुतश्चने तिश्रुतिमर्थतःपठति ॥ सत्यंज्ञानमिति॥रसादेरन्नमयप्राणमय मनोमयविज्ञानमयानंदमयाख्यकोशपंचकात्परंतदाधारभूतंब्र ह्मपुच्छंप्रतिष्ठेतिनिर्दिष्टंयत्तदेवादृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽ भयंप्रतिष्ठांविंदतेइतिशास्त्रोक्तंब्रह्माहंस्यामस्मीतिपश्यन्निर्भयो भवतीतियोजना ॥ ६२ ॥

यस्माद्भीताः प्रवर्तंते वाङ्मनः पा
वकादयः ॥ तदात्मानंदतत्त्वज्ञो न
बिभेति कुतश्चन ॥ ६३ ॥ ॥

भयंकराणामपिभयंकरब्रह्मात्मभूतस्यकुतोभयशंकावकाशइ तिब्रह्मज्ञस्यपुनःसंसाराभावमुक्तंद्रढयति ॥ यस्मादिति ॥ यदि वाग्विनोपावकादयइतिपाठस्तदाइनःसूर्यः आदिपदादिंद्रमृत्यू गृह्येतेतथाचश्रुतिः॥ भीषास्माद्वातःपवतेभीषोदेतिसूर्यः ॥ भी षास्मादग्निश्चेंद्रश्चमृत्युर्धावतिपंचमइति ॥वाङ्मनःपावकादयइ तिपाठेऽध्यात्मंवागादयोऽधिदैवमग्न्यादयश्चयस्माद्भीताःप्रवर्तं तइत्यर्थः ॥ तथाचश्रुतिः ॥ केनेषितंतंयततिप्रेषितंमनः केन प्राणःप्रथमःप्रैतियुक्तः केनेषितांवाचमिमांवदंति चक्षुःश्रोत्रंक उदेवोयुनक्ति भयादस्याग्निस्तपतिभयात्तपतिसूर्यः ॥ भयादिंद्र श्चवायुश्च मृत्युर्धावतिपंचमइति ॥ ६३ ॥

नामादिभ्यः परेभूम्नि स्वाराज्ये चे
त्स्थितोऽद्वये॥ प्रणमेत्कं तदात्मज्ञो

न कार्यं कर्मणा तदा ॥ ६४ ॥

ननुविदुषोपिहरिहरहिरण्यगर्भादीनांनमस्कार्यत्वात्तदतिक्रमेभयसंभवात्कार्यशेषोविद्यतेइतिचेन्नेत्याह ॥ नामादिभ्यइति नामवाक्मनआदिप्राणांतेभ्यउत्तरोत्तरभूयस्त्वेनश्रुतेभ्यःपरेपरस्मिन्भूम्निसर्वव्यवहारातीतेऽमृतेसुखरूपेऽद्वयेस्वेमहिम्निस्वराजिचेदहमस्मिभूमाब्रह्मेतिव्यवस्थितआत्मज्ञोविद्वांस्तदा तस्यान्यंप्रतिगुणभावाभावात्कंप्रणमेत्प्रणम्यानामात्मभूतत्वादतःपरिपक्वज्ञानस्यकृतकृत्यत्वान्नकर्मणाकिमपिकार्यमस्तीत्यर्थः ॥ ६४॥

विराड्वैश्वानरो बाह्यः स्मरन्नंतः प्रजापतिः॥प्रविलीने तु सर्वस्मिन्प्राज्ञोऽव्याकृतमुच्यते ॥ ६५ ॥ ॥

भूम्नोनामादिभ्यःपरत्वेपिकथमद्वयत्वमित्याशंक्यनामादेरवस्थात्रयरूपस्याध्यस्तत्वेनमिथ्यात्वात्तत्साक्षिणस्तुरीयस्यभूम्नोऽद्वयत्वमितिवक्तुमवस्थात्रयमनुवदति॥ विराडिति॥ अध्यात्माधिदैवतयोरभेदाभिप्रायेणविराड्वैश्वानरइत्युक्तंविश्ववैश्वानरइत्यर्थःबाह्योबहिःप्रज्ञइत्यर्थः ॥ अतःस्मरन्निति स्वप्नेवासनामयविषयदर्शीप्रजापतिर्हिरण्यगर्भस्तैजसइतियोज्यं ॥ अव्याकृतमायोपाधीश्वराख्यंतत्त्वंप्राज्ञउच्यतइत्यर्थः ॥६५॥

वाचारंभणमात्रत्वात्सुषुप्तादि त्रिकंत्वसत् ॥ सत्यो ज्ञश्चाहमित्ये

वं सत्यसंधो विमुच्यते ॥ ६६ ॥

एतदवस्थात्रयात्मकंजगदपोह्यतत्साक्षिणोवस्तुभूतस्याहंब्र ह्मेतिसम्यग्ज्ञानान्मुक्तोभवतीत्याह ॥ वाचेति ज्ञःसाक्षीसत्यः परमात्मासोहमेवेत्येवंसत्यसंधोऽनायासेनमुच्यतइत्यर्थः॥६६

भारूपत्वाद्यथा भानोर्नाहोरात्रे त थैव च ॥ ज्ञानाज्ञाने न मे स्यातां चिद्रूपत्वाविशेषतः ॥ ६७॥ ॥

आत्मतत्त्वाज्ञानाध्यस्तःसंसारस्तज्ज्ञानान्निवर्ततइत्युक्तेज्ञा नाज्ञानयोरात्मधर्मत्वंस्यादित्याशंक्यदृष्टांतेनप्रत्याह ॥ भारूप त्वादिति ॥ ज्ञानाज्ञानयोरपिसाक्ष्यत्वात्कल्पितत्वेसतिनात्मध र्मत्वमितिभावः॥६७॥

शास्त्रस्यानतिशंक्यत्वाद्ब्रह्मैव स्या महं सदा ॥ ब्रह्मणो मे न हेयं स्या द्ग्राह्यं वेति च सं स्मरेत्॥ ६८ ॥

आत्मनोनिर्विशेषत्वादेःशास्त्रप्रामाण्यादेवसिद्धेर्नात्रयुक्तिक ल्पनयामनःखेदनीयमित्यभिप्रेत्याह शास्त्रस्येति ॥ ६८ ॥

अहमेव च भूतेषु सर्वेष्वेको नभो यथा ॥ मयि सर्वाणि भूतानि प श्यन्नेवं न जायते ॥ ६९ ॥ ॥

किंतद्ब्रह्मपरंशास्त्रंकिंवासर्वदाहेयानुपादेयब्रह्मात्मज्ञाननिष्ठस्यफलमित्यपेक्षायांयस्तुसर्वाणिभूतानीत्यादिमंत्रार्थमुदाहरतिअहमेवेतिस्पष्टं ॥ ६९ ॥

न बाह्यं मध्यतो वांतर्विद्यतेन्य
त्स्वतः क्वचित् ॥ अबाह्यांतःश्रुतेः
किंचित्तस्माच्छुद्धःस्वयंप्रभः ७०

आत्मनोऽद्वितीयब्रह्मरूपत्वेशास्त्रमर्थतउदाहृत्यनिर्विशेषब्रह्मरूपत्वेउदाहरति ॥ नबाह्यमिति ॥ तदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्ममयमात्माब्रह्मसर्वानुभूरितिश्रुतेरित्यर्थःसर्वानुभूरित्यस्यार्थःस्वयंप्रभइति ॥ ७० ॥

नेतिनेत्यादिशास्त्रेभ्यः प्रपंचोपश
मोद्वयः ॥ अविज्ञातादिशास्त्राच्च
नैव ज्ञेयो ह्यतोन्यथा ॥ ७१ ॥ ॥

सामान्येनसर्वप्रपंचसंस्पर्शरहितत्वेश्रुतिमुदाहरति ॥ नेतीति ॥ प्रपंचनिषेधद्वारेणैवात्माविज्ञेयोनपुनर्विषयतयासप्रपंचतयावेत्यत्रान्यदेवतद्विदितादथोअविदितादधि ॥ यस्यामतंतस्यमतंमतंयस्यनवेदसः ॥ अविज्ञातंविज्ञात्रित्यादिशास्त्रमुदाहरति ॥ अविज्ञातादीति ॥७१॥

सर्वस्यात्माहमेवेति ब्रह्म चेद्विदितं
परं ॥ स आत्मा सर्वभूतानामात्मा

ह्येषामिति श्रुतेः ॥ ७२ ॥ ॥

तस्मादेषांतन्नप्रियंयदेतन्मनुष्याविद्युरितिश्रुतिरेवमद्वयादिलक्षणमात्मानंजानतोदेवाःफलप्राप्तिंविघ्नंतीतिचेन्मैवं ॥ देवानामप्यात्मभूतत्वाद्विदुषोविघ्नश्रुतेरविद्वद्विषयत्वादित्यभिप्रेत्याह ॥ सर्वस्येति ॥ तस्यहनदेवाश्चनाभूत्याईशतआत्माह्येषांसंभवतीतिश्रुतेरित्यर्थः ॥ ७२ ॥

जीवश्चेत्परमात्मानं स्वात्मानं देव मंजसा ॥ देवोपास्यः स देवानां पशुत्वाच्च निवर्तते ॥ ७३ ॥ ॥

एवंब्रह्मात्मज्ञानवतोदेवैरप्युपास्यत्वसिद्धेर्नतस्यदेवपशुत्वशंकापीत्यतोनकुतश्चिद्भयमस्तीत्यत्रश्रुतिमर्थतःपठति ॥ जीवश्चेदिति ॥ यदैवमनुपश्यत्यात्मानंदेवमंजसाईशानंभूतभव्यस्यनतदाविजुगुप्सते ॥ सर्वेस्मैदेवाबलिमावहंतितमेवंविद्वानमृतइहभवति ॥ इतिचश्रुतिभ्यइत्यर्थः ॥ ७३ ॥

अहमेव सदात्मज्ञः शून्यस्त्वन्यैर्यथांबरं ॥ इत्येवं सत्यसंधत्वादसद्धाता न बध्यते ॥ ७४ ॥ ॥

यदुक्तंसत्यसंधोविमुच्यतइतितत्स्फुटयत्यहमेवेति ॥ सदात्माचासौज्ञश्चेतिसदात्मज्ञःतत्सत्यंसआत्मेतिश्रुतिरिहोदाहरणं ॥ अन्यैःशून्यइतिवाचारंभणश्रुत्यर्थोदर्शितः॥ यथांबरमिति ॥ दृश्यसंसर्गशून्यत्वाच्छुद्धइत्यत्रदृष्टांतोक्तिः॥ असद्धाताऽ

नृताभिसंधिरहितोतस्करइवनबध्यतेबंधानर्थहीनोभवतिसय थातत्रनदह्यतेऐतदात्म्यमिदंसर्वमित्यादिश्रुतिरिहोदाहार्या४७

कृपणास्तेन्यथैवातो विदुर्ब्रह्म परं हि ये ॥ स्वराड्योनन्यदृक् स्वस्थ स्तस्य देवा असन्वशे ॥ ७५ ॥

एवंविधज्ञानाभावादितरेपशुभूताःशोच्याभवंतीतिदर्शयन्नथये न्यथातोविदुरन्यराजानस्तेऽक्षय्यलोकाभवंतीतिश्रुत्यर्थमाह॥ कृपणाइति ॥ येपरंब्रह्मातोन्यथैवोक्तवैपरीत्येनानात्मभूततया विदुस्तेहिकृपणाःशोच्याएवेतियोजना॥अभेददर्शीतुनकृपणइ त्याह॥स्वराडिति॥ एवंविजानन्नात्मरतिरात्मक्रीडआत्ममिथुन आत्मानंदःसस्वराड्भवतीतिश्रुतिरिहोदाहरणंतस्यसर्वेषुलोके षुकामचारोभवतीतिश्रुत्यर्थःमंत्रभागोदाहरणेनात्मरतिंद्योतय ति॥तस्येति॥ आसान्नित्यर्थेअसन्नितिछांदसंयस्त्वेवंब्राह्मणोवि द्यात्तस्यदेवाअसन्वशेइतिमंत्रोस्यायमर्थः॥यस्त्वेवंब्राह्मणोब्रह्म निष्ठएवंवेदाहमेतंपुरुषंमहांतमित्युक्तप्रकारेणब्रह्मात्मानंविद्या त्तस्यविदुषोदेवावशगाभवंतीति ॥ ७५ ॥

हित्वा जात्यादिसंबंधान्वाचोन्याः सह कर्मभिः॥ ओमित्येवं सदात्मा नं सर्वं शुद्धं प्रपद्यथ ॥ ७६ ॥ ॥

यस्माद्यथोक्तात्मज्ञानादेवकृतकृत्यतातस्मान्मुमुक्षुभिस्तद र्थंयत्नवद्भिर्भवितव्यमितिताञ्छिक्षयन्नाह॥हित्वेति॥यस्मिन्द्यौः

पृथिवीचांतरिक्षमोतंमनःसहप्राणैश्चसर्वैस्तमेवैकंजानथ आत्मानमन्यावाचोविमुंचथामृतस्यैषसेतुःओमित्येवंध्यायथ आत्मानमितिचवाक्यद्वयमत्रोदाहरणं॥अन्यावाचोऽनात्मविषयाः प्रवृत्तिपराःसर्वंसर्वाधारभूतंशुद्धंविविक्तंनिर्विशेषमित्यर्थः॥७६॥

सेतुं सर्वव्यवस्थानामहोरात्रादिव
र्जितं ॥ तिर्यगूर्ध्वमधः सर्वं सकृ
ज्ज्योतिरनामयं ॥ ७७ ॥

तमेवप्रतिपत्तव्यमात्मानंश्रुत्यंतरेणविशिनष्टि ॥ सेतुमिति सर्वव्यवस्थानांवर्णाश्रमादिमर्यादानांसेतुंविधारकं ॥ अथय आत्माससेतुर्विधृतिरेषांलोकानामसंभेदायनैनंसेतुमहोरात्रेतरतःसकृद्विभातोह्येवैषब्रह्मलोकइतिश्रुतिरत्रोदाहरणं ॥ ७७ ॥

धर्माधर्मविनिर्मुक्तं भूतभव्यात्कृता
कृतात् ॥ स्वमात्मानं परं विद्याद्वि
मुक्तं सर्वबंधनैः ॥ ७८ ॥ ॥

पुनःकिंलक्षणमात्मानंप्रपद्यतेइत्यपेक्षायामन्यत्रधर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतादन्यत्रभूताच्चभव्याच्च यत्तत्पश्यसितद्वदेतिश्रुत्यर्थमाह ॥ धर्माधर्मेति ॥ कृताकृतात्कार्यकारणादित्यर्थः ॥ ७८ ॥

अकुर्वन् सर्वकृच्छुद्धस्तिष्ठन्नत्येति
धावतः ॥ मायया सर्वशक्तित्वाद

जः सन् बहुधा मतः ॥ ७९ ॥ ॥

ननुकथंसर्वबंधनैर्मुक्तआत्मातस्यकर्तृत्वादिश्रवणादित्याशंक्याकर्तृत्वादेरपिसहैवश्रवणाद्विरुद्धोभयस्वभावस्यैकस्मिन्नयोगात्स्वभावप्राप्तंकर्तृत्वादिकंमायामयंप्रमाणावधेयमकर्तृत्वादिकमात्मस्वभावइतिविशेषमभिप्रेत्यविरुद्धधर्मवादिनीःश्रुतीरुदाहराति ॥ अकुर्वन्निति ॥ अनेजदेकंमनसोजवीयइतिमंत्रभागार्थोऽकुर्वन्सर्वकृदित्युक्तः शुद्धमपापविद्धमित्यस्यार्थःशुद्धइति ॥ तद्धावतोन्यानत्येति॥तिष्ठन्नित्यस्यार्थमाह ॥ तिष्ठन्निति ॥ धावतोवेगतोऽन्यान्मनःप्राणादीनत्येति ॥अतीत्यगच्छतियत्रमनःप्राणादिगच्छतितत्रसर्वत्रात्मचैतन्यस्याभिव्यक्तिनियमादात्मातिष्ठन्नपिगच्छतीवभासतइत्यर्थः ॥ अजायमानोबहुधाविजायतेइतिमंत्रार्थमाह ॥ अजःसन्बहुधामतइति॥सर्वत्रहेतुर्मायासर्वशक्तित्वादिति ॥ नहिमायायामसंभावनीयमस्तीतिभावः ॥ ७९ ॥

राजवत्साक्षिमात्रत्वात्सान्निध्याद्भ्रामको यथा ॥ भ्रामयन् जगदात्माहं निःक्रियोऽकारकोऽद्वयः ॥ ८० ॥ ॥

अक्रियस्यापिक्रियावत्त्वोपचारमुक्तंदृष्टांतेनप्रपंचयाति ॥ राजवदिति ॥ स्पष्टं ॥ ८० ॥

निर्गुणं निःक्रियं नित्यं निर्द्वंद्वं यन्निरामयं ॥ शुद्धं बुद्धं तथा मुक्तं तद्ब्रह्मा

स्मीति धारयेत् ॥ ८१ ॥ ॥

यस्मादेवमात्मास्वतोनित्यशुद्धत्वादिस्वभावःशास्त्रन्याया भ्यामवगतस्तस्मात्तंतथैवजानीयान्नान्यथेत्युपसंहरति ॥ निर्गुणमिति ॥ नैतेषुश्लोकेषुपुनरुक्तंदोषावहं यतःप्रतिपाद्यवस्तुनोदुर्बोधत्वान्मुमुक्षूपकारायकारुणिकआचार्यःक्वचिच्छास्त्रतःक्वचित्फलकथनेनक्वचिद्विद्वदनुभवाभिनयनेनपुनःपुनःप्रतिपादयति ॥ भूयोपिपथ्यंवक्तव्यमितिन्यायात् ॥ ८१ ॥

बंधं मोक्षं च सर्वं यत इदमुभयं हेयमेकं द्वयं च ज्ञेयं ज्ञेयाभ्यतीतं परममधिगतं तत्त्वमेकं विशुद्धं ॥ विज्ञायैतद्यथावच्छ्रुतिमुनिगदितं शोकमोहावतीतः सर्वज्ञः सर्वकृत्स्याद्भवभयरहितो ब्राह्मणोऽवाप्तकृत्यः ८२

उक्तंप्रकरणार्थंप्रतिपत्तिसौकर्यार्थंसंक्षिप्यकथयति ॥ बंधं मोक्षमिति॥ बंधंमोक्षंचसर्वंयथावद्विज्ञायभवभयरहितः स्यादित्यन्वयः बंधःप्रमातृत्वकर्तृत्वादिप्रतिभासलक्षणोमोक्षोब्रह्मस्वरूपावस्थानंसर्वमितिनिःशेषंपूर्वोक्तप्रकारमित्यर्थः ॥ इदमुभयंबंधंमोक्षंचयतोहेतोरज्ञानाज्ज्ञानाच्चभवतः तेअपिविज्ञायेतिसंबंधः ॥ तथाएकमनुवृत्तंकारणंद्वयंव्यावृत्तंकार्यंचयज्ज्ञेयंविषयभूतंतत्सर्वंहेयंबाध्यंविज्ञायेत्यन्वयः ॥ ज्ञेयाभ्यतीतंद्वयात्सम्यक्पृथक्कृतंपरमंनिरतिशयंविशुद्धंएकंब्रह्मयद्वेदांतेष्व

धिगतंतत्त्वंपरमार्थंतदपियथावद्विज्ञायात्मत्वेनोपादायकिंलक्षणंश्रुतिमुनिगादितंश्रुतिवाक्येनमुनिनागुरुणोपदिष्टमित्यर्थः ॥एवमात्माऽनात्मतत्त्वंज्ञात्वाऽनात्मापोहेनात्मतत्त्वनिष्ठःशोकमोहावतीतःस्यात्तत्रकोमोहःकःशोकएकत्वमनुपश्यतइतिश्रुतेः ॥ सर्वंहिब्रह्मतज्जानन्सर्वज्ञःस्यात्सर्वंस्वात्मन्येकंकरोतीतिसर्वकृत्स्यात्तथाचमुक्तविषयाश्रुतिः॥ अहंविश्वंभुवनमभ्यभवामितिदैर्घ्यंगानार्थंअभ्यभवमभिभूतवानात्मसात्कृतवानस्मीतिश्रुत्यर्थः ॥ भवभयरहितःनबिभेतिकुतश्चनेतिश्रुतेःब्राह्मणोमुख्ययावृत्त्याब्राह्मणशब्दाभिधेयः ॥ अमौनंचमौनंचनिर्विद्याथब्राह्मणइति॥ अथयएतदक्षरंगार्गिविदित्वास्माल्लोकात्प्रैतिसब्राह्मणइतिचश्रुतेः ॥ अवाप्तकृत्यःप्राप्तसर्वक्रियाफलइत्यर्थःसोश्नुतेसर्वान्कामान्सहब्रह्मणाविपश्चितेतिश्रुतेरित्यर्थ ः॥ ८२ ॥

**न स्वयं स्वस्य नान्यश्च नान्यस्यात्मा च हेयगः॥उपादेयो न चाप्येवमिति सम्यङ्मतिः स्मृता॥८३॥**

एवमात्मानंजानतःकृतकृत्यत्वमुक्तंप्रकटयति ॥ नस्वयमिति ॥ स्वयमात्मास्वस्यनहेयगस्त्यक्तव्यकोटौपतितोनवाप्युपादेयःएकस्मिन्कर्मकर्तृत्वासंभवात्स्वरूपस्यास्थितौनाशेवास्वविषयहानोपादानयोरसंभवाच्च तथान्यश्चनस्वस्यहेयगोऽद्वैतेन्यस्यैवाभावान्नाप्युपादेयोऽतएवतथान्यस्यापिस्वयमुपादेयोहेयगोवानभवत्यात्मांतराभावादनात्मनश्चबाधितत्वादचैतन्याच्चेतियोजना इत्येवंयानिष्ठासासम्यङ्मतिःसम्यग्ज्ञानंस्मृताब्रह्मविद्भिरित्यर्थः ॥ ८३ ॥

**आत्मप्रत्यायिका ह्येषा सर्ववेदांत गोचरा ॥ ज्ञात्वैतां हि विमुच्यंते सर्वसंसारबंधनैः॥ ८४ ॥ ॥**

कूटस्थचैतन्यैकरसेपूर्णेवस्तुनिहानाद्यसंभवान्निरायासंपरं ब्रह्मैवास्मीत्येवंविधायाधियःसम्यक्कृतित्वेहेतुमाह ॥ आत्म प्रत्यायिकेति ॥ आत्मानंब्रह्मत्वेनप्रत्याययतीतिआत्मप्रत्यायि काहियस्मादेषामतिःस्वानुभवसिद्धेतिवासर्ववेदांतगोचरेतिप्र माणमूलत्वमस्यादर्शयति ॥ एतांज्ञात्वालब्ध्वासर्वसंसारबंध नैर्विमुच्यंतेकृतकृत्याभवंतीत्यर्थः ॥ तथाचभगवद्वचनं इतिगु ह्यतमंशास्त्रमिदमुक्तंमयाऽनघ एतद्बुद्ध्वाबुद्धिमान्स्यात्कृतकृत्य श्चभारतेति ॥ ८४ ॥

**रहस्यं सर्ववेदानां देवानां चापि यत्परं ॥ पवित्रं परमं ह्येतत्तदेतत्सं प्रकाशितं ॥ ८५ ॥ ॥ ॥**

प्रकरणोक्तंज्ञानमिदानींप्रशंसन्नस्योपादेयत्वंद्रढयति ॥ र हस्यमिति ॥ रहस्यमुपदेशव्यतिरेकेणाविज्ञेयंआचार्यवान्पु रुषोवेदसर्वेवेदायत्पदमामनंतीतिचश्रुतेः ॥ देवैरत्रापिविचिकि त्सितंपुरानहिसुविज्ञेयमणुरेषधर्मइतिश्रुतेर्देवानांचापिरहस्य मित्यर्थः ॥ परंसर्वोत्तमंपवित्रंपावनंक्षीयंतेचास्यकर्माणि एवं विदिपापंकर्मनश्लिष्यतेइत्यादिश्रुतेः ॥ हियस्मात्परमंपरमपुरु षार्थरूपंनिरतिशयानंदप्रकाशमितियावत्यदेवंरूपंसम्यग्ज्ञा

नंतदेतत्सम्यक्प्रकाशितंप्रकटीकृतमस्मिन्प्रकरणेइत्यर्थः॥८५

नैतद्देयमशांताय रहस्यं ज्ञानमुत्त
ममू॥विरक्ताय प्रदातव्यं शिष्यायाा
नुगताय च ॥ ८६ ॥ ॥ ॥

एतस्यगोपनीयत्वंसूचयति ॥ नैतदिति ॥ यद्वाऽस्यदुर्विज्ञे यत्वेनदुर्धरत्वात्तद्धारणसमर्थमधिकारिणंविशिष्यन्ननधिकारिभ्योविवेचयति ॥ नैतद्देयमिति ॥ ८६ ॥

ददतश्चात्मनोज्ञानं निःक्रियोऽन्यो
नविद्यते ॥ ज्ञानमिच्छंस्तरेत्तस्मा
द्युक्तः शिष्यगुणैः सदा ॥ ८७ ॥

यस्मादेवंलक्षणज्ञानदआचार्यःकृतकृत्योनप्रलोभादिना ज्ञानंप्रयच्छतितस्मान्मुमुक्षुरमानित्वादिशिष्यगुणयुक्तःस्याद्य थाचार्यःकृपयाविद्यांदद्यादित्येतदर्थमाह ददतश्चेति नविद्यतेय स्मादितियोज्यंतस्माच्छिष्यगुणैःसदायुक्तोज्ञानमिच्छन्संपाद यंस्तरेत्संसारमितिशेषः ॥ ८७ ॥

ज्ञानं ज्ञेयं तथा ज्ञाता यस्मादन्यं
न विद्यते॥ सर्वज्ञः सर्वशक्तिर्यस्त
स्मै ज्ञानात्मने नमः ॥८८ ॥

आदाविवोपसंहारेपिदेवताचार्यनमस्कारौ तद्भक्तेर्विद्याप्र त्यंतरंगत्वख्यापनायकार्यावितिदर्शयतिश्लोकद्वयेन ॥ ज्ञानमि

त्यादिना ॥ ज्ञानात्मनेचित्सदानंदरूपायेत्यर्थः ॥ ८८ ॥

विद्यया तारिताः स्मो यैर्जन्ममृत्यु महोदधिं ॥ सर्वज्ञेभ्यो नमस्तेभ्यो गुरुभ्योऽज्ञानसंकुलं ॥ ८९ ॥

विद्ययेति ॥ अज्ञानसंकुलमितिच्छेदः ॥ ८९ ॥ ॥

इतिसम्यङ्मतिप्रकरणंसप्तदशमंविवृतं ॥ १७ ॥

येनात्मना विलीयंते उद्भवंति च वृत्तयः॥ नित्यावगतये तस्मै नमो धीप्रत्ययात्मने ॥ १ ॥

पूर्वस्मिन्प्रकरणेब्रह्मात्मविषयमपरोक्षज्ञानंमोक्षसाधनंवेदांतेभ्योभवतीत्युक्तंतदयुक्तं वेदांतानामपिस्वर्गकामादिवाक्यवत्परोक्षज्ञानजनकत्वादतोऽपरोक्षज्ञानायप्रसंख्यानमेष्टव्यमिति केचित्प्रतिपेदिरेतन्मतनिराकरणेनपूर्वोक्तंसर्वंस्वसिद्धांतंश्रौतमुपपत्तितःस्फुटमुपादयितुंप्रकरणांतरमारभमाणोदेवतानमस्कारव्याजेनांतःकरणवृत्तिभावाभावसाक्षिणंकूटस्थचिदेकतानमेवात्मानंनित्यापरोक्षंवेदांताः ब्रह्मेतिप्रतिपादयंतोनपरोक्षंब्रह्मसमर्पयंतीतिसूचयन्प्रकरणप्रतिपाद्यंदर्शयति ॥ येनेति वृत्तयोधीपरिणामाः अलातचक्रमिवाद्यात्मनायेनचैतन्यज्योतिःस्वरूपेणविलीयंतेसुषुप्तौअवस्थांतरेउद्भवंतिचचिदात्मव्याप्ताइत्यर्थः ॥ धीप्रत्ययाः साभासबुद्धिवृत्तयस्तेषामात्मनेतदध्यासाधिष्ठानायेत्यर्थः ॥ नित्यश्चासाववगतिश्चेतिविग्रहः ॥ १ ॥

प्रमथ्य वज्रोपमयुक्तिसंभृतैः श्रुतेर
रातीन् शतशो वचोसिभिः ॥ ररक्ष
वेदार्थनिधिंविशालधी र्नमो यतींद्रा
य गुरोर्गरीयसे ॥ २ ॥ ॥

इदानींस्वोक्तेर्थेमुमुक्षूणांविश्वासार्थंस्वाचार्यगुणोपवर्णनपूर्वकंसंप्रदायशुद्धिंकथयाति ॥ प्रमथ्यवज्रेति ॥ संभृतैरभेद्यतया घटितैः श्रुतेर्वचोसिभिर्वेदांतवाक्यरूपनिस्त्रिंशैररातीन्भेदतत्त्वारण्यवासिनोऽद्वैतरत्नापहारिणः शत्रून्प्रमथ्यसमूलमुन्मूल्ययोविशालधीरप्रतिहतदीर्घबुद्धिर्वेदांतार्थनिधिंवेदांतमंजूषागतंनिधिंनिधीयतेस्मिन्निितिसर्वमितिनिधिरद्वयंब्रह्मात्मतत्त्वंतंररक्षतस्मैयतींद्रायगुरोर्गरीयसेपरमगुरवेनमइतियोजना ॥ २॥

नित्यमुक्तः सदेवास्मीत्येवं चेन्न भवे
न्मतिः ॥ किमर्थं श्रावयत्येव मातृ
वच्छ्रुतिरादरात् ॥ ३ ॥ ॥

एवंनमस्कारव्याजेनप्रकरणार्थंस्वसंप्रदायशुद्धिंचोक्त्वातत्त्वमस्यादिवाक्यादेवापरोक्षज्ञानमात्मनीतिप्रकरणसिद्धांतंतावदाह नित्यमुक्तइति ॥ सदेवाहमहमेवसदस्मिनित्यमुक्तइत्येवंचेत्तदपरोक्षामतिर्वेदांतवाक्यान्नभवेत्तर्ह्येवंसिद्धवन्निर्देशेनतत्त्वमसीतिश्रुतिः किमर्थंकस्मादादृता आदरवतीपुनः पुनर्मातेवपुत्रहितैषिणीश्रावयेदित्यर्थः ॥ ३ ॥

सिद्धादेवाहमित्यस्माद्युष्मद्धर्मो नि
षिध्यते॥ रज्ज्वामिवाहिधीर्युक्त्या
तत्त्वमित्यादिशासनैः ॥ ४ ॥ ॥

नित्यापरोक्षस्वभावात्मस्वरूपत्वाद्ब्रह्मणोवाक्यादेवापरोक्ष ज्ञानमारोपितानर्थनिवृत्तिफलमुत्पद्यतइत्याह ॥ सिद्धादेवेति ॥ अहमित्यत्राहंशब्दलक्ष्यादपरोक्षतयास्वतःसिद्धादात्मनःसका शाद्युष्मद्धर्मःपरागर्थोहंकारादिस्तत्त्वमित्यादिशासनैर्युक्त्यास हितैःशोधितार्थैरितियावन्निषिध्यतेभ्रमगृहीतपारोक्ष्यसद्वयत्वा कारविलपनेनात्मतत्त्वंप्रतिपाद्यतइत्यर्थः ॥ तत्रदृष्टांतार्थः स्पष्टः ॥ ४ ॥

शास्त्रप्रामाण्यतो ज्ञेया धर्मादेरस्ति
ता यथा ॥विषापोहो यथा ध्याना
द् न्हुतिः स्यात्पाप्मनस्तथा ॥५॥

तन्निवृत्तिंदृष्टांताभ्यांस्पष्टयति ॥ शास्त्रेति ॥ यद्वा नित्या परोक्षात्मैवब्रह्मतदवगमश्चानर्थनिवृत्तिहेतुरित्यतक्रमेणदृष्टांता भ्यांसाधयति ॥ शास्त्रेति ॥ तथाब्रह्मणएवात्मत्वेनास्तिता अनेनजीवेनात्मनानुप्रविश्यतत्त्वमसीतिशास्त्रप्रामाण्यतोज्ञेये तिदार्ष्टांतिकंयोज्यं ॥ ध्यानाद्गरुडादिमंत्रबीजस्मरणाद्विषापोहः सद्योविषनिवृत्तिस्तथापाप्मनोऽविद्याद्यनर्थरूपस्यवाक्यादा त्मतत्त्वावगममात्रेणसद्यएवन्हुतिर्बाधरूपानिवृत्तिःस्यादित्य र्थः ॥ ५ ॥

सद्ब्रह्माहं करोमीति प्रत्ययावात्म
साक्षिकौ ॥ तयोरज्ञानजस्यैव त्या
गो युक्ततमो मतः ॥ ६ ॥ ॥

ननुवाक्योत्थाहंब्रह्मास्मीतिप्रत्ययवदहंकरोमीत्यपिप्रत्ययो
ऽनुभवसिद्धस्तत्रकोहेतुरयमेवापरेणबाध्यतइत्यत्रेतिशंकते ॥
सद्ब्रह्माहमिति॥तत्रनियामकंहेतुंवदन्नुत्तरमाह ॥ तयोरिति ॥
युक्ततरइतितरपोयमर्थः ॥ यथापूर्वप्रवृत्तयागविनियोजकश्रु
त्यापश्चात्प्रवृत्तालिंगादयोऽप्राप्ताएवबाध्यंतेयथावापूर्वमेवप्रकृते
र्विकृतावतिदेशप्राप्तानामंगानांविकृतिगतविशेषोपदेशेनपाश्चा
त्येनबाधइतियुक्तत्वेप्यनियमोबाध्यबाधकयोः पूर्वापरीभाव
स्यनतथास्यन्यायस्येति युक्ततरइत्युक्तमिति ॥ ६ ॥

सदस्मीति प्रमाणोत्था धीरन्या त
न्निभोद्भवा ॥ प्रत्यक्षादिनिभा वा
पि बाध्यते दिग्भ्रमादिवत् ॥ ७ ॥

अत्रकःप्रमाणजःप्रत्ययःकोवाऽज्ञानजइतिवीक्षायांविवि
च्यदर्शयाति ॥ सदस्मीति ॥ धीस्तत्त्वमसीतिनिर्दुष्टवाक्यप्र
माणोत्थाअन्या कर्त्ताहमित्यादिधीस्तन्निभोद्भवाप्रमाणाभासस
मुद्भूताविवेकदोषास्कंदितत्वादित्यर्थः ॥ वाक्यजन्यज्ञानस्यापि
प्रत्यक्षाभासबाधनंदृष्टांतेनबुद्धिमारोहयाति प्रत्यक्षादीति ॥७॥

कुरुभोक्तेति यच्छास्त्रं लोकबुद्ध्य

नुवादि तत् ॥ सदस्मीति श्रुतेर्जा
ता बाध्यतेऽन्यैतयैव धीः ॥ ८ ॥

ननुब्रह्मास्मीतिबुद्धिवत्कर्तृत्वादिबुद्धेरपिसत्यंवदधर्मंचरसाहि कर्त्ताभोक्तेत्याहुर्मनीषिणइत्यादिवचनात् शास्त्रसिद्धत्वंतुल्यमि तिकथंतस्याःबाध्यत्वमित्याशंक्याह कुरुभोक्तेति ॥ शास्त्रान भिज्ञानांतदभिज्ञसंगातिहीनानामपि कर्त्ताभोक्ताऽहमस्मीतिधि यःसिद्धत्वात्कुर्वित्यादिशास्त्रंलोकसिद्धार्थानुवादिनाऽनधिगता र्थबोधकमित्यर्थः ॥ सदस्मीतिधीस्तुश्रुतेरन्यसिद्धार्थायाःसका शाज्जातेत्यर्थः ॥ तस्मादेतयैवनिरवकाशयासदस्मीतिश्रुति जातयाधियैवान्यासावकाशानुवादवाक्यजन्याबाध्यतेबाधतए वेतिवान्वयः ॥ ८ ॥

सदेव त्वमसीत्युक्ते नात्मनो मुक्त
तास्थिरा ॥ प्रवर्तते प्रसंचक्षामतो
युक्त्याऽनुचिंतयेत् ॥ ९ ॥ ॥

तदेवंवाक्यादेवापरोक्षज्ञानमात्मविषयमुत्पद्यतेतच्चनिरपेक्ष मेवानर्थनिवृत्तिहेतुःइतिस्वमतमुपन्यस्यस्वयूथ्यमतमुत्थापय ति ॥ सदेवेति ॥ प्रसंचक्षांप्रसंख्यानंशब्दावृत्तिंयुक्त्यासहाभ्य स्येदित्यर्थः ॥ ९ ॥

सकृदुक्तं न गृण्हाति वाक्यार्थज्ञो
पि यो भवेत्॥अपेक्षते त एवान्यद

वोचाम द्वयं हि तत् ॥ १० ॥ ॥

उक्तमेवसाधयति ॥ सकृदिति ॥ योपिवाक्यार्थज्ञःसकृदु क्तंनगृण्हातिनजानातिनसम्यक्प्रतिपद्यतेयतोतएवान्यत्सह कारिभूतमपेक्षतेयदपेक्षतेतद्द्वयंवाक्यानुचिंतनंयुक्त्यालोचनंच पूर्वश्लोकेव यमवोचामेत्यर्थः ॥१०॥

नियोगोऽप्रतिपन्नत्वात्कर्मणां स यथा भवेत् ॥ अविरुद्धो भवेत्ताव द्यावत्संवेद्यताऽद्दढा ॥ ११ ॥ ॥

ननुतत्त्वमस्यादिवाक्येषुविधिनोपलभामहेब्रह्मात्मभावस्य चस्वतएवसिद्धेर्मुमुक्षोर्नियोगोपिनघटतइत्याह ॥ नियोगइति वाक्यमात्रादैकात्म्यस्याप्रतिपन्नत्वात्साक्षात्कृतत्वाभावात्ताव न्नियोगोऽविरुद्धोभवेद्यावत्संवेद्यताब्रह्मात्मैकताऽदढाद्दढानमती यतइतियोजना सनियोगःकर्मणामग्निष्टोमादीनांयथाभवेद्वा क्यादवगतानामपिफलप्राप्तयइतिदृष्टांतार्थः ॥ ११ ॥

चेष्टितं च तथा मिथ्या स्वच्छंदः प्रतिपद्यते ॥ प्रसंख्यानमतः कार्यं यावदात्मानुभूयते ॥१२॥

किंचविधिमंतरेणचेद्ब्रह्मात्मैक्यंवाक्यात्स्वयमेवप्रतिपद्येतत दायमनियमादिकमनुष्ठीयमानंमिथ्यास्यादुपकार्याभावादित्या ह ॥ चेष्टितमिति चेष्टितमनुष्ठितंयमादिस्वच्छंदःस्वेच्छावान

नियुक्तइतियावत् ॥प्रतिपद्यतेचेदित्यध्याहारः ॥ आत्मानुभूयते साक्षात्क्रियतइत्यर्थः ॥ १२ ॥

सदस्मीति च विज्ञानमक्षजो बाधते ध्रुवं ॥ शब्दोत्थं दृढसंस्कारो दोषैश्चाकृष्यते बहिः ॥ १३ ॥ ॥

इतोपिप्रसंख्यानंविधितोनुष्ठेयमित्याहसदस्मीति ॥ सदस्मीतिविज्ञानमक्षजःप्रत्यक्षप्रत्ययः कर्ताभोक्तेत्येवमाद्याकारोबाधतेध्रुवंनिश्चितमेतत् ॥ अक्षजस्यप्राबल्येहेतुगर्भंविशेषणं दृढसंस्कारइति॥किंचतेनमुमुक्षुर्दोषैरागादिभिश्चबहिराकृष्यतेबहिर्मुखीक्रियतेऽतःप्रसंख्यानंदोषनिवृत्तयेचकार्यमित्यर्थः ॥ १३ ॥

श्रुतानुमानजन्मानौ सामान्यविषयौ यतः ॥प्रत्ययावक्षजो ऽवश्यं विशेषार्थौ निवारयेत् ॥ १४ ॥ ॥

नकेवलंचिरंनिरूढवासनाघटितत्वेनप्रत्यक्षप्राबल्यमपितुविशेषविषयत्वाच्चेत्याह श्रुतेति ॥ श्रुतःशब्दोनुमानंलिंगज्ञानंविप्रलिप्साभ्रांत्योरापितत्रसम्भाव्यमानत्वाद्दृत्यंतरसंभवाच्चप्रत्यक्षस्यतदभावाद्युक्तंबाधकत्वमित्यर्थः ॥ १४ ॥

वाक्यार्थप्रत्ययी कश्चिन्निर्दुःखो नोपलभ्यते ॥ यदि वा दृश्यते कश्चिद्वाक्यार्थश्रुतिमात्रतः ॥ १५ ॥

यदिवाक्यार्थज्ञानमात्रात्कृतकृत्यतांकस्यचिद्दृश्येततदाप्र संख्यानकल्पनमनर्थकंस्यान्नतुतथाकश्चिद्दृश्यतेअतःप्रसंख्या नमावश्यकमित्याह ॥ वाक्यार्थप्रत्ययीति ॥ तद्धैतत्पश्यन्नृ षिर्वामदेवःप्रतिपेदेतद्धास्यविजज्ञावित्यादौवाक्यार्थज्ञानमात्रा द्वामदेवादिःकृतकृत्योदृश्यतइतिचेत्तत्राह ॥ यदिवेति ॥ दृश्य तेनिर्दुःखइत्युत्तरश्लोकगतेनान्वयः ॥ १५ ॥ ॥ ॥

निर्दुःखोतीतदेहेषु कृतभावोऽनुमी यते ॥ चर्या नोशास्त्रसंवेद्या स्याद निष्टं तथासति ॥ १६ ॥ ॥

निर्दुःखोतीतेति ॥वाक्यार्थश्रवणमात्रात्कश्चिद्यदिनिर्दुःखो दृश्यतेश्रुतिपुराणादौसोतीतदेहेषुकृतभावोनुष्ठितप्रसंख्यानोनु मीयते निर्दुःखत्वलिंगेनेत्यर्थः ॥ किंचसकृद्विज्ञातवाक्यार्थ स्यविध्यनभ्युपगमेनोस्माकंचर्यापरमहंसाश्रमाचाराऽशास्त्रसं वेद्यास्यात् शास्त्रविहितानस्यात् तथासत्यनिष्टंस्यात् यत्याश्रम चर्यापरित्यागेप्यारूढपतिततानभवेदित्यनिष्टप्रसंगइत्यर्थः १६

सदसीति फलं चोक्त्का विधेयं सा धनं यतः ॥ न तदन्यत्प्रसंख्याना त्प्रसिद्धार्थमिहेष्यते ॥ १७ ॥ ॥

कस्तर्हिप्रसंख्यानविधिपक्षेसिद्धब्रह्मोपदेशस्यार्थःस्यादित्य तआह ॥ सदसीति ॥ त्वंसद्ब्रह्मासीतिवर्तमानोपदेशेनफलमि दंसाधनविधानार्थमुच्यते यतोयस्मात्सर्वत्रफलमुक्त्कासाधनंवि

धेयमतोब्रह्मात्मैक्यकामःप्रसंचक्षीतेति सार्थकोविधिर्भवेदित्य
र्थः ॥ प्रसंख्यानमेवकिमितिविधीयतेज्योतिष्टोमादिकस्माद्ब्रह्म
भावायनविधीयतेइत्यतआह ॥ नतदन्यदिति ॥ प्रसंख्याना
दन्यदिहवेदांतेषुप्रसिद्धार्थाभिव्यंजनसमर्थंसाधनंयत्तन्नेष्यते ॥
ज्योतिष्टोमादेर्व्यंजकत्वसामर्थ्याभावादित्यर्थः ॥ १७ ॥ ॥

तस्मादनुभवायैव प्रसंचक्षीत य
त्नतः ॥ त्यजन्साधनतत्साध्यवि
रुद्धं शममादिमान् ॥ १८ ॥ ॥

पूर्वपक्षमुपसंहरति तस्मादिति ॥ किंकुर्वन् साधनतत्सा
ध्यविरुद्धंत्यजन्साधनंप्रसंख्यानंतत्साध्यंतत्फलमात्मैक्यसा
क्षात्कारः तद्विरुद्धंकर्मनिष्ठत्वं शमनंशमआदिपदाद्दमोपरमौइ
त्यादिग्रहः ॥ शमादियुक्तश्चसन्नित्यर्थः ॥ १८ ॥

नैतदेवं रहस्यानां नेतिनेत्यवसान
तः ॥ क्रियासाध्यं पुरा श्राव्यं न
मोक्षो नित्यसिद्धतः ॥ १९ ॥ ॥

सिद्धांतमुपक्रमते नैतदेवमिति॥किंवेदांतेषुप्रसंख्यानंसाक्षा
द्विधीयते किंवावर्तमानोपदेशेनफलवचनानुपपत्त्याकल्प्यतइ
ति तत्रनाद्यइत्याह॥रहस्यानामिति ॥ उपनिषद्वाक्यानामित्य
र्थः ॥ नेतिनेतिदृश्यनिषेधद्वारातदवधिमात्रेब्रह्मात्मस्वरूपेपर्य
वसानदर्शनाद्वेदांतानांनविध्यर्थतेत्यर्थः द्वितीयंप्रत्याह क्रिया
साध्यमिति ॥ यत्क्रियासाध्यंफलंतत्पुरापूर्वकांडेश्राव्यंनोपनि

यत्सु अत्रश्रूयमाणोमोक्षोनक्रियासाध्यः कुतोनित्यसिद्धतोऽसाध्यत्वादित्यर्थः ॥ १९ ॥

## पुत्रदुःखं यथाध्यस्तं पित्रा दुःखेस्व आत्मनि ॥ अहंकर्ता तथाध्यस्तो नित्यदुःखे स्व आत्मनि ॥ २० ॥

तत्त्वमस्यादिवाक्यमपरोक्षाद्वितीयब्रह्मात्मज्ञानद्वारातदज्ञानंतदध्यस्तंचदुःखित्वादिसंसारंनिवर्तयतीतिवक्तुमज्ञानाध्यस्तंदुःखादीत्यत्रदृष्टांतमाह ॥ पुत्रेति ॥ अदुःखे ज्वरादिदुःखरहितइत्यर्थः ॥ दार्ष्टांतिकमाह ॥ अहंकर्तेति ॥ नित्यादुःखेसदादुःखादिसंसाररहिते स्वेस्वरूपे आत्मनिनिरुपाधिकेहंकर्त्ता साभासांतःकरणाविविक्तोदुःखादिधर्मकोऽविवेकलक्षणयाविद्ययातथाध्यस्तइत्यर्थः ॥ अहंकर्त्रीतिपाठेस्वआत्मनीत्यत्रादुःखादिरितिशेषः ॥ २० ॥

## सोऽध्यासो नेतिनेतीति प्राप्तवत्प्रतिषिध्यते ॥ भूयोध्यासविधिः कश्चित्कुतश्चिन्नोपपद्यते ॥ २१ ॥

आत्मनोब्रह्मस्वभावाज्ञानेनाध्यस्तःसंसारस्तत्स्वभावज्ञानमात्रान्नेतिनेतितत्त्वमसीतिचशास्त्रोत्थान्निवर्ततेतदात्मनःसर्वक्रियाधिकारनिवृत्तेःसुषुप्ताविवपुनरध्यासबीजाभावात्कृतकृत्यस्यनप्रसंख्यानविध्यवसरइति ॥फलितमाह सोध्यासइति॥प्राप्तवदितिवतिप्रयोगाद्वस्तुवृत्त्याप्राप्त्यभावादारोपितत्वंद्योतयति२१

**आत्मनीह यथा ऽध्यासः प्रतिषेध स्तथैव च॥ मलाध्यासनिषेधौ खे क्रियेते च यथाबुधैः ॥ २२ ॥ ॥**

नन्वविषयेब्रह्मात्मनिविषयधर्माणांदुःखित्वादीनांकथमध्यासःसंभाव्यते यतः पुरोऽवस्थितेविषयभूतेशुक्तिकादौरजताद्यध्यासोदृष्टइत्याशंक्यव्यभिचारान्नैवंनियमइत्याह ॥ आत्मनीति ॥ यथादेहव्यतिरिक्तात्मवादिनामात्मनीहपुरःस्थितेदेहजरामरणाद्यध्यासस्तत्प्रतिषेधश्चयथाचेंद्रियाविषयेपिखेमलाध्यासनिषेधावबुधैःक्रियेते तथैवचप्रत्यगात्मनिब्रह्मणयप्यविषयेसंसाराध्यासनिषेधौस्यातामित्यर्थः ॥ आत्मनीहितथाध्यासइति पाठेदृष्टांतदार्ष्टांतिकपरतयोत्तरार्द्धपूर्वार्धौस्पष्टार्थौ ॥ अधिष्ठानस्वरूपमात्रस्फुरणमध्यासेऽपेक्ष्यते नविषयत्वेनस्फुरणं तदिह स्वप्रकाशेआत्मानिस्वतःसिद्धमितिनानुपपत्तिरितिभावः ॥ २२॥

**प्राप्तश्चेत्प्रतिषिध्येत मोक्षोऽनित्यो भवेद्ध्रुवं ॥ अतोऽप्राप्तविषेधोयं दिव्यग्निचयनादिवत् ॥ २३ ॥**

प्राप्तवत्प्रतिषिध्यतइत्युक्तंप्रपंचयति ॥ प्राप्तश्चेदिति ॥ प्रमाणसिद्धश्चेत्संसारःप्राप्तवत्प्रतिषिध्येत तर्हिसंसारबंधनिवृत्तिरूपस्यमोक्षस्यागंतुकत्वाद्ध्रुवंनिश्चितंमोक्षोनित्योभवेत् परमार्थरूपात्मगतस्यबंधस्यपरमार्थतएवनिवृत्तौतस्यात्मनोवस्थांतरापत्त्याविकारित्वादनित्यत्वमावश्यकंतथाऽनादिभावरूपस्य

बंधस्यपरमार्थत्वेतन्निवृत्तिरेवासंभाविनीसादित्वाभ्युपगमेतुत स्यात्मनैवकृतत्वान्निवृत्तसजातीयस्यपुनस्तस्मिन्पूर्ववदुत्पत्त्यु पपत्तेरनित्योमोक्षःप्रसज्येतैवेति बंधस्याविद्यकत्वमवश्यमेष्ट व्यं ॥ तस्यचज्ञानादेवनिवृत्तेर्निरर्थकंप्रसंख्यानमित्यभिप्रेत्यो पसंहरति ॥ अतइति ॥ यथानांतरिक्षेनदिव्याग्निश्चेतव्यइति पृथिव्यामिवाग्निचयनमंतरिक्षादावारोप्याप्राप्तमेवप्रतिषिध्यते॥ तथासंसारबंधरहितएवात्मनितदारोपानिषेधावितिदृष्टांतेनाह॥ दिव्यग्नीति ॥ आदिपदादाकाशमालिंन्यंलौकिकंगृह्यते॥२३॥

**संभाव्योगोचरेशब्दः प्रत्ययो वा न चान्यथा॥ न संभाव्यौ तदात्मत्वा दहंकर्तुस्तथैव च ॥ २४ ॥**

आत्मनिबंधसंबंधबोधकप्रमाणाभावादपिनतत्रबंधस्यसत्यता प्राप्तिरस्तीत्याह॥संभाव्यइति॥अयमर्थः॥आत्मनिबंधसंबंधबो धकंप्रमाणंशब्दःप्रमाणांतरंवासर्वथापिनोपपद्यतइत्याह ॥ श ब्दःप्रत्ययोवेति॥प्रत्ययःप्रमाणांतरजन्यःशब्दोवाप्रत्ययोवालो केगोचरेविषयेसंभाव्यःसंभावनायोग्योनचान्यथाविषयत्वायो ग्ये तथाचषष्ठीजातिगुणक्रियादिशब्दप्रवृत्तिनिमित्तरहितस्या त्मनोनशब्दगोचरत्वंसंभाव्यतेयेनायमात्मासंसारीतिबोधःश ब्दादुत्पद्येतेति॥तथारूपादिहीनत्वान्नबाह्येंद्रियवर्गस्तस्मिन्क्रम तेऽतएवनतत्स्वरूपसंबद्धतयालिंगविशेषाग्रहणादनुमानार्था पत्तीतस्मिन्संभवतोऽवयवाद्यभावान्नोपमानंभावरूपत्वादेवना नुपलब्धिरपीतिप्रतीतिमात्रंपरिशिष्यतइतिनप्रमाणसिद्धोबंध संबंधइतियतोनसंभाव्यावात्मन्यपिशब्दप्रत्ययावितिति ॥ किं

चशब्दप्रत्ययपोः प्रमाणत्वाभिमतयोस्तथैवचाहंकर्तुः प्रमातृ त्वाभिमतस्यचतदात्मत्वाद्ब्रह्मात्मत्वान्नतद्गोचरत्वमुपपद्यते ॥ नह्यागंतुकयोःशब्दप्रत्यययोरहंकर्तुर्वाचिदात्मनःपृथक्स्वरूप मस्तिस्वात्मनितुक्रियानुपपत्तिरित्यर्थः ॥ २४ ॥

**अहंकर्त्रात्मनि न्यस्तं चैतन्येकर्तृ तादि यत् ॥नेति नेतीति तत्सर्वं सा हंकर्त्रा निषिध्यते ॥ २५ ॥**

तस्मादध्यस्तनिषेधएववक्तव्यइतिसिद्धमित्याह ॥ अहंक र्त्रेति ॥ चैतन्येचित्स्वरूपआत्मनियदहंकर्त्रासाभासांतःकरणा विवेकेनकर्तृत्वादिन्यस्तमारोपितंतत्सर्वंनेतिनेतीतिनिषिध्यते साहंकर्त्राअहंकर्त्रासहेत्यर्थः ॥ २५ ॥

**उपलब्धिः स्वयंज्योतिर्दृशिः प्रत्य क्सदक्रियः ॥ साक्षात्सर्वांतरः सा क्षीचेता नित्योऽगुणोऽद्वयः॥२६॥**

अध्यस्तनिषेधएवचेच्छास्त्रेणक्रियतेकथंतर्ह्यात्मनःस्वरूपोप लब्धिरित्यतआह ॥ उपलब्धिरिति ॥ अनुपलब्ध्यादिस्व रूपत्वेप्रमाणाभावादितरत्रचसाक्षादित्यादिनोत्तरार्द्धसूत्रितश्रु तीनांप्रमाणत्वात्स्वप्रकाशएवात्मासदास्वतःसिद्धइत्यर्थः॥२६॥

**सन्निधौ सर्वदा तस्य स्यात्तदाभो भिमानकृत्॥आत्मात्मीयं द्वयं चा**

तः स्यादहंममगोचरः ॥ २७ ॥

नन्वात्मात्मीयमितिचद्वयमहंममप्रत्ययगोचरत्वेनप्रसिद्धं तथासतिकथमात्मास्वतःसिद्धइत्याशंक्योपाधिवशात्तथाप्रसिद्धिरित्याह ॥ संनिधाविति ॥ अभिमानकृदहंकारस्तस्यचिदात्मनःसर्वदासंन्निधौसतितदाभश्चैतन्यप्रकाशयुक्ततयातदाकारःस्यादतोहेतोरात्मात्मीयंद्वंद्वंचस्यादहंममेतिव्यवहारगोचरइत्यर्थः ॥ तथाचसाभासांतःकरणतद्वृत्त्यविवेकादात्माहमितिममेतिचभासमानोपिस्वतःसिद्धएवस्वभावतइतिभावः ॥२७॥

जातिकर्मादिमत्वाद्धि तस्मिन् शब्दास्त्वंहकृति ॥ न कश्चिद्वर्तते शब्दस्तदभावात्स्व आत्मनि ॥ २८॥

एवमहंप्रत्ययादेरन्यविषयत्वोपपादनेनसंभाव्योगोचरेशब्द इतिश्लोकोक्तंप्रत्ययागोचरत्वमात्मनः प्रतिपादितमिदानींशब्दस्यापिविषयांतरंदर्शयंस्तदगोचरत्वमुपपादयति ॥ जातीति तस्मिन्नहंकृत्यहंकारेसाभासेहिनिश्चितं जातिकर्मादिशब्दप्रवृत्तिनिमित्तवत्वाच्छब्दाःप्रवर्तंते तदभावात्प्रवृत्तिनिमित्तजात्याद्यभावात्स्वेस्वरूपभूते आत्मनिनिरुपाधिकेकश्चिदपिशब्दोनवर्ततेतंविषयीकुर्वन्नित्यर्थःअतआत्मास्वतःसिद्धइतिभावः २८॥

आभासो यत्र तत्रैव शब्दाःप्रत्यग्दृशिं स्थिताः ॥ लक्षयेयुर्नसाक्षात्तमभिदध्युः कथं च न ॥ २९ ॥

स्वतःसिद्धस्वरूपआत्मनिप्रवृत्तिनिमित्तजात्याद्यभावात्क
श्चिदपिशब्दोनप्रवर्ततेचेत्कथंतस्यवेदांतवेद्यतयौपनिषदत्वमुद्
घुष्यतइत्यतआह ॥ आभासइति ॥ यत्राहंकारादावाभासश्चै
तन्यप्रतिबिंबोदयस्तत्रैवाभासाविविक्तेंतःकरणादौवाचकत्वेन
स्थिताआत्मादिशब्दाःप्रत्यक्दृशिंप्रत्यक्तयाभासमानंदृशिमा
त्मानंशुद्धंलक्षयेयुर्लक्षणयाज्ञापयेयुर्नतुतंसाक्षादभिदध्युःकथं
चनविशेषणादिप्रकारेणापीत्यर्थः ॥ अतोनौपनिषदत्वप्रसि
द्धिविरोधइतिभावः ॥ २९ ॥

**न ह्यजात्यादिमान्कश्चिदर्थः शब्दै**
**र्निरूप्यते ॥ ३० ॥**

कथंनाभिदध्युरित्यत्रहेतुमाह ॥ नहीत्यर्द्धेन ॥ ३० ॥

**आत्माभासो यथाहंकृदात्मशब्दै**
**स्तथोच्यते ॥ उल्मुकादौ यथाग्न्य**
**र्थाःपरार्थत्वान्न चांजसा ॥ ३१ ॥**

ननुलक्षणयापियत्रशब्दस्यतात्पर्यंसएवशब्दार्थः तथाचा
त्मादिशब्दानामहंकारातिरिक्तेप्रत्यगात्मनिचेद्वृत्तिःकथंतर्हिलो
काअहंकारादावात्मशब्दंप्रयुंजतेइत्यपेक्षायामुपचारादितिसदृ
ष्टांतमाह ॥ आत्माभासइतिश्लोकेन ॥ अहंकृदहंकारोवस्तु
तोऽनात्माप्यात्माभासआत्मवदस्मत्प्रत्ययालंबनोभासतेयथा
तथात्मादिशब्दैरपियथाप्रतिभासमुच्यतेवस्तुगत्यातुशब्दप्रत्य
ययोःशुद्धएवात्मनिपर्यवसानंयथाअग्न्यर्थाःशब्दादहत्यादयउ
ल्मुकंदहतिअपोदहतीत्युल्मुकादौप्रयुज्यमानाअंजसासाक्षा

दुल्मुकादौनचपर्यवस्यंति ॥ तेषांदाहाद्याश्रयत्वानुपपत्तेर्दह त्यादिशब्दानांपरार्थत्वात्तदभिव्यक्ताग्न्यर्थत्वात्तेऽग्नावेवपर्यवस्यं ति॥तथाहंकारस्यात्माभिव्यक्त्यर्थत्वात्तस्मिन्जडेपरिच्छिन्नेपरा धीनप्रकाशेआत्मादिशब्दाश्रितसदानंदानंताद्यर्था अनुपपद्यमा नाविचार्यमाणेशुद्धएवपर्यवस्यंतीतिसर्वमुपपन्नमित्यर्थः ॥३१

## मुखादन्यो मुखाभासो यथादर्शा नुकारतः॥ आभासान्मुखमप्येव मादर्शाननुवर्तनात् ॥ ३२ ॥

आभासोयत्रेतिश्लोकेसिद्धांतिनाऽऽभासोंगीकृतःसचभेदविप र्यासविशिष्टतयाभासमानःपरमार्थोपरमार्थो वेतिवादिविप्रतिप त्त्यासंशयेनपरमार्थतइतिसिद्धांतंवक्तुंदृष्टांतमाहमुखादन्यइति॥ यथामुखाभासोमुखप्रतिबिंबआदर्शानुकारतआदर्शभावाभा वयोरनुकारादादर्शान्वयव्यतिरेकानुविधायित्वादितियावत् ॥ मुखाद्ग्रीवास्थादनागमापायितयास्थितादन्योनपुनःस्वरूपेणे तियोज्यं ॥ तथासतिबिंबचेष्टयाविनापिप्रतिबिंबश्चेष्टेतेत्यर्थः आभासान्मुखमप्येवमन्यदेवकुतआदर्शाननुवर्त्तनादादर्शनि रपेक्षसत्तास्फुरणयोगादित्यर्थःतथाचग्रीवास्थस्यैवमुखस्याद र्शप्रतिबिंबितस्यादर्शस्थतावैशिष्ट्येनभासमानत्वमेवाभासत्वं तच्चनसत्यंमुखवियुक्तादर्शोतिर्यङ्भिरीक्ष्यमाणेवातस्मिन्नदर्शना त् ॥ नाप्यसदपरोक्षप्रतिभासात्तस्मादनिर्वचनीयएवाभासस्त स्माच्चान्यन्मुखमितिभावः ॥ ३२ ॥

## अहंकृत्यात्मनिर्भासो मुखाभासव

**दिष्यते॥मुखवत्स्मृत आत्मान्योऽ**
**विविक्तौ तौ तथैव च ॥ ३३ ॥**

दार्ष्टांतिकमाह ॥ अहंकृतीति ॥ अहंकृत्यहंकारेआत्मनिर्भासश्चेतनावत्त्वावभासोमुखाभासवन्मुखान्मुखप्रतिबिंबवच्छुद्धादात्मनोऽभिन्नइष्यतेआत्माशुद्धआभासादन्यःस्मृतोज्ञातःप्रतिबिंबान्मुखवदित्यर्थः ॥ मुखस्यमुखाभासस्यादर्शस्यचाभासाश्रयस्यप्रतीतितोभेदेपिवस्तुतोभेदाभाववदात्माभासतदाश्रयांतःकरणादीनांप्रतिभासतोभेदेपिवस्तुतोनात्मातिरिक्तंकिंचिदस्तीतिनपरमार्थोभेदइत्यभिप्रेत्याह ॥ अविविक्तौतौतथैवचेति ॥ तावात्मात्माभासौतथैवमुखमुखाभासाविववस्तुतोऽविविक्तौपरमार्थभेदरहिताविर्त्यर्थः ॥ चकारादाभासाश्रयांतःकरणंचनतद्विविक्तमितियोज्यं ॥ ३३ ॥

**संसारी च स इत्येक आभासो य**
**स्त्वहंकृतिः॥वस्तुछाया स्मृतेरन्य**
**न्माधुर्यादि च कारणं ॥ ३४ ॥**

एवंचिन्मात्रंतत्रानाद्यविद्यायांतत्कार्येचाहंकारादौप्रतिबिंबितंतदेवचिदात्मस्वरूपमुपाधिस्थतावैशिष्ट्याध्यासवशात्संसारीतिस्वमतमुक्त्वातद्दृढीकरणायैकदेशिमतंदूषयितुमुत्थापयति ॥ संसारीति ॥ यस्त्वहंकृत्याभासोऽस्माभिःपृथगुक्तःसएवसंसारीत्येकेमन्यंतेइत्यर्थः ॥ नन्वाभासस्यावस्तुत्वात्कथंतस्यबंधमोक्षभागितयासंसारित्वमित्याशंक्याभासशब्देनचिच्छायायाअभिप्रेतत्वात्तस्याश्चवस्तुत्वान्नानुपपत्तिरित्यभिप्रेत्याह वस्तु

छायेति ॥ छायावस्तुपरमार्थानाक्रमेत्कामतःछायांगुर्वादेरिति स्मृतेरितियोजना ॥ तथाचयाज्ञवल्क्यः ॥ देवर्त्विक्स्नातकाचार्यराज्ञांछायांपरस्त्रियःनाक्रमेद्रक्तविण्मूत्रष्ठीवनोद्वर्त्तनादिकमिति ॥ नकेवलंस्मृतिवचनादेवछायायावस्तुत्वावगमोस्त्यन्यत्कारणंमाधुर्यादिछायायामासीनस्यमुखेमाधुर्योपलब्धेःशैत्योपलब्धेश्चेत्यर्थः ॥ ३४ ॥

ज्ञैकदेशो विकारो वा तदभासाश्र
यः परे ॥ अहंकर्तैवसंसारी स्वतंत्र
इति केचन ॥ ३५ ॥ ॥

पुनरेकदेशिमतत्रयमाह ॥ ज्ञैकदेशइति ॥ ज्ञस्यचित्सदानंदपरमात्मनएकदेशःसंसारी ममैवांशोजीवलोकेजीवभूतःसनातनइतिस्मृतेरित्येके ॥ अग्निविस्फुलिंगदृष्टांतेनसर्वएतआत्मनोव्युच्चरंतीतिश्रुतेःपरमात्मनोविकारःसंसारीत्यपरेपरेतुतदभासाश्रयश्चिदात्माभासविशिष्टोऽहंकारएवसंसारीतन्मनोदिशंदिशंपतित्वेतिश्रुतेरित्याहुरित्यर्थः ॥ भाट्टादिमतमाह ॥ अहंकर्तैवेति ॥ स्वतंत्रोनपरमात्मांशादिरूपइत्यर्थः ॥ ३५ ॥

अहंकारादिसंतानः संसारी नान्व
यी क्वचित् ॥ इत्येवं सौगता आहु
स्तत्र न्यायो विचार्यतां ॥ ३६ ॥

बौद्धमतमाह ॥ अहंकारादीति ॥ संतानोविरलोदयतयाविच्छिन्नानिक्षणिकज्ञानान्येवात्मासंसारीनततःपृथगन्वय्येकोवि

ज्ञानोत्पत्तिविनाशदृष्टांऽस्तीत्येवंसौगता आहुरित्यर्थः ॥ एवमुक्तेषुपक्षेषुवस्तुविपयत्वाद्विरोधाच्चविकल्पसमुच्चययोरसंभवादन्यतमस्यैवकस्यचिदुपादेयत्वमथवास्मदुक्तस्यब्रह्मैवाविद्ययाहंकारादिगताभासाविवेकात्संसारीत्येतस्येतिनिर्धारणेन्यायो विचार्यतामित्याह ॥ तत्रेति ॥ ३६ ॥

संसारिणां कथा त्वास्तां प्रकृतं त्वधुनोच्यते ॥ मुखाभासो य अदर्शे धर्मो नान्यतरस्यसः॥ द्वयोरेकस्य चेद्धर्मो वियुक्तेऽन्यतरे भवेत् ॥ ३७ ॥

प्रासंगिकींसंसारिचिंतांहित्वाप्रकृतमाभासनिरूपणंप्रतिजानीतेसंसारिणामिति ॥ स्पष्टं ॥ प्रकृतमाभासमेवनिरूपयन्नादौमुखाभासंदृष्टांतत्वेनापरमार्थमुक्तंविशदयाति ॥ मुखाभासइति ॥ योयमादर्शेमुखाभासोदृश्यतेसकिंमुखादर्शयोरन्यतरस्यस्यकस्यचिद्धर्मः किंवा मुखस्यैवधर्मःअथवा द्वयोरपिधर्मोवस्त्वंतरंकिंचिदितिविकल्प्याद्यंनिराकरोति ॥ धर्मोनान्यतरस्य सइति ॥ एतदेवस्पष्टयति ॥ द्वयोर्मध्येएकस्यान्यतरस्यचेदाभासोधर्मः स्यात्तदावियुक्तेन्यतरेसातिदर्पणवियुक्तेमुखेतद्गतरूपादिवद्दर्शनगोचरोभवेत् ॥ मुखवियुक्तेवादर्पणेदृश्योभवन्नचैवमस्त्यतोनान्यतरस्यधर्मइत्यर्थः ॥ ३७ ॥

मुखेन व्यपदेशात्स मुखस्यैवेति चेन्मतं ॥नादर्शानुविधानाच्च मुखे

सत्यविभावतः ॥ ३८ ॥ ॥ ॥

कल्पांतरमुत्थापयति ॥ मुखेनेति ॥ दूषयति ॥नेति ॥ यद्यपिसुखाभास इतिमुखेनव्यपदिश्यतेतथापिनमुखधर्मआभासःआदर्शानुविधानात् ॥ मुखैकधर्मत्वेतदयोगात्किंचसत्यपि मुखेदर्पणवियुक्तेऽविभावतोऽदर्शनादित्यर्थः ॥ ३८ ॥

द्वयोरेवेति चेत्तन्न द्वयोरेवाप्यदर्शनात् ॥ अदृश्यस्य सतो दृष्टिः स्याद्राहोश्चंद्रसूर्ययोः ॥ ३९ ॥ ॥

तृतीयंकल्पमनूद्यप्रत्याह॥ द्वयोरेवेतिचेदिति ॥ द्वयोरप्यदर्शनादेवेतिसंबंधः नहिमुखादर्शयोर्वियुक्तयोराभासोदृश्यतेनापिसंयुक्तयोरयंधर्मोयथाकथंचनसंयुक्तयोरपि तद्दर्शनप्रसंगान्नतथा दृश्यतेतस्मान्नद्वयोर्धर्मइत्यर्थः ॥तर्ह्यस्तुपरमार्थवस्त्वंतरमेवाभासइतिचतुर्थंपक्षंदृष्टांतेनशंकतेअदृश्यस्येति ॥सतोविद्यमानस्यैवसर्वैः करणैरदृश्यस्यराहोश्चंद्रेसूर्येचोपाधौकदाचिद्दृष्टिर्दर्शनंयथातथामुखाभासस्यापि वस्तुभूतस्यसतोमुखसन्मुखवद्दर्पणोपाधौदर्शनंस्यादित्यर्थः ॥ ३९ ॥

राहोःप्रागेव वस्तुत्वं सिद्धं शास्त्रप्रमाणतः ॥ छायापक्षे त्ववस्तुत्वं तस्यस्यात्पूर्वयुक्तितः ॥ ४० ॥ ॥

वैषम्येणदूषयति ॥ राहोरिति ॥ चंद्राद्युपरागात्प्रागेवज्योतिः शास्त्रप्रमाणतः पुराणादिशास्त्रप्रमाणतोवाराहोःसैंहिकेय

स्यवस्तुत्वंसिद्धं निश्चितंनेहतथानिश्चायकंप्रमाणमस्तीतिशेषः ॥ नहिमुखदर्पणयोःसंबंधात्पूर्वमूर्ध्वंवातद्व्यतिरिक्तवस्तुतामुखाभासस्यकेनचित्प्रमाणेनक्वापिसंभावितेत्यर्थः ॥ राहोर्वस्तुत्वमंगीकृत्यदार्ष्टांतिकाननुगुणत्वमुक्तमिदानींतस्यापि नास्ति वस्तुत्वमित्याभासस्यवस्तुत्वेनायंदृष्टांतइत्याह ॥छायापक्षेत्विति ॥ भूम्यादिछायाराहुरितिकेषांचित्पक्षःतस्मिन्छायापक्षेतु तस्यराहोरवस्तुत्वंस्यान्मुखाभासोयआदर्श इत्यादौपूर्वोक्तयुक्तितोयुक्तिसंचारादित्यर्थः ॥ ४० ॥

छायाक्रांतेर्निषेधोयं नतु वस्तुत्व
साधकः ॥ न ह्यर्थांतरनिष्ठं सद्वा
क्यमर्थांतरं वदेत् ॥ ४१ ॥ ॥

वस्तुच्छायास्मृतेरित्यत्रछायायावस्तुत्वेस्मृतिःप्रमाणमित्युक्तमत्राह॥छायाक्रांतेरिति ॥नत्वित्यत्रछायायाइतिशेषः नतुछायालंघनप्रतिषेधपरमपिः वचनं तस्याःवस्तुत्वमपिबोधयिष्यतीतिचेत्तत्रवक्तव्यं ॥ साक्षादेवोतार्थादिति ॥ नाद्यइत्याहनहीति॥एकस्यवाक्यस्योभयार्थत्वेवाक्यभेदप्रसंगादित्यर्थः ॥ न द्वितीयोनिषेधस्यप्राप्तिमात्रसापेक्षत्वान्निषेधाविषयादेर्वस्तुत्वाभावेपिनिषेधानुपपत्तिरित्यत्रनियामकाभावादितिद्रष्टव्यं॥४१

माधुर्यादि च यत्कार्यमुष्णद्रव्या
द्यसेवनात्॥ छायाया न त्वदृष्टत्वा
दपामेव च दर्शनात् ॥ ४२ ॥ ॥

यद्यप्युक्तंमाधुर्यादिकार्यदर्शनादर्थक्रियाकारित्वेनछायावस्तु त्वमितितदप्यन्यथासिद्धमित्याहमाधुर्यादीति ॥ छायायामुप विष्टस्ययन्माधुर्यादिकार्यंदृश्यतेतदुष्णद्रव्याद्यसेवनान्निमित्ता न्नतुछायायाहेतुभूतायास्तन्माधुर्यादिकार्यंकुतोऽदृष्टत्वात्तातप्य मानशिलाकूटच्छायायांमाधुर्यादेरदर्शनादपामेवचदर्शनादयंध र्मस्तास्वेवाव्यभिचारादतः छायायामुपविष्टस्यनिवृत्तातपसंस र्गस्यस्वाभाविकस्योदकमाधुर्याभिव्यक्तौछायामधुरेति विभ्रम इत्यर्थः ॥ ४२ ॥

**आत्माभासाश्रयाश्चैवं मुखाभासा श्रया यथा ॥ गम्यंते शास्त्रयुक्ति भ्यामाभासासत्त्वमेव च ॥ ४३ ॥**

तदेवंयथामुखंतदाभासस्तदाश्रयश्चेत्येतेत्रयोऽव्यवहारदृ ष्ट्याविभक्ताअवभासंतेनपरमार्थदृष्ट्यातथात्मातदाभासस्तदा श्रयश्चेत्यर्थत्रयंमिथोविलक्षणंगम्यतेव्यवहारदृष्ट्येतिदार्ष्टांति कमाह ॥ आत्माभासाश्रयाश्चैवमिति ॥ आत्मात्वंपदल क्ष्यश्चिद्धातुस्तस्यानाद्यविद्यातत्कार्यप्रतिबिंबिततयातदुपाधि स्थत्वैशिष्ट्यंजीवत्वमाभासोऽविद्यातत्कार्योपाधिराश्रय इति त्वंपदार्थः ॥ शास्त्रयुक्तिभ्यामिति ॥ रूपंरूपंप्रतिरूपोबभूव ॥ इंद्रोमायाभिः पुरुरूपईयते अनीशयाशोचतिमुह्यमानइत्यादि श्रुतेरेकोवशीसर्वभूतांतरात्मैकंरूपंबहुधायः करोतीत्यादि श्रु तेश्चतथाबुद्ध्यादेर्विपर्यांतस्यागमापायिनोदृशस्यनित्यसिद्धसा क्ष्यात्मन्यध्यासव्यतिरेकेणस्फुरणसत्तयोरनुपपत्तेरित्यादियुक्ते

श्चप्रत्यगात्मनएकस्यैवसत्त्वमाभासादेरसत्त्वंपरमार्थसत्त्वाभा वश्चगम्यतेनिश्चीयतेइत्यर्थः ॥ ४३ ॥

**न दृशेरविकारित्वादाभासस्याप्य वस्तुतः ॥ नाचितित्वादहंकर्तुः क स्य संसारिता भवेत् ॥ ४४ ॥ ॥**

नन्वेवंसतित्वन्मतेसंसारमोक्षयोराश्रयाभावादनुपपत्तिरेवन ह्यात्मतदाभासतदाश्रयाणामन्यतमस्यमिलितानांवासंसारा द्याश्रयत्वंघटतइतिशंकतेनदृशेरिति ॥ संसारोनामज्ञातृत्वक र्तृत्वभोक्तृत्वादिलक्षणोविकाररूपउपचयस्तदात्यंतिकापचय श्चमोक्षस्तथाचताभ्यांक्रमेणसंबध्यमानोविकारीस्यात्तत्रदृशे श्चैतन्यैकरसस्यापिनसंसारिताभवेदितिसंबंधः ॥ तत्रहेतुरवि कारित्वादितिकूटस्थत्वादित्यर्थः ॥ तथाऽभासस्यापिनसंसारि ताभवेदिति ॥ पूर्वनकारमादायान्वयः ॥ तत्रहेतुरवस्तुतइति॥ पूर्वोक्तयुक्त्यातस्यावस्तुत्वनिश्चयादवस्तुनः शून्यस्यनकोप्य तिशयसंभवइत्यर्थः॥ अहंकर्तुरहंकारस्याभासाश्रयत्वेनाभिम तस्याचितित्वाज्जडत्वान्नसंसारिताभवेन्नहिज्ञातृत्वसुखदुःखा दिभोक्तृत्वस्वरूपस्यसंसारस्यजडाश्रयत्वसंभवोऽतस्त्वन्मते कस्यसंसारिताभवेन्मोक्षोवेतिचयोज्यं ॥ नकस्यापीतिवदतो ऽनुभवविरोधइत्यभिप्रायः॥४४॥

**अविद्यामात्र एवातःसंसारोस्त्ववि वेकतः॥ कूटस्थेनात्मना नित्यमा त्मवानात्मनीवसः॥४५॥ ॥**

सिद्धांतीयद्येवमनिरूपिताश्रयौसंसारमोक्षौतर्हिमाभूतांपर मार्थौकस्यापीतिपरिहरति॥ अविद्येति॥ यतएवमतःसंसारोऽ विद्यामात्रएवभ्रांतिमात्रएवस्वप्नवदस्तु अविवेकतआत्मस्वरू पाविवेकात्संसारआत्मनीवात्मधर्मइवावभासतइतियोजना॥ अवस्तुभूतस्यात्मन्यपरोक्षतयासदितिप्रतिभासेनिमित्तमाह॥ कूटस्थेनेति तत्राध्यस्तत्वात्तत्सत्तयासत्तावानित्यर्थः॥ नित्य मित्यन्याधीनात्मवतस्तत्राध्यस्ततांसूचयति॥ ४५॥

**रज्जुसर्पो यथा रज्ज्वा सात्मकः**
**प्राग्विवेकतः॥अवस्तुसन्नापि ह्येष**
**कूटस्थेनात्मना तथा॥४६॥**

आत्मसत्तयासत्तावानात्मधर्मइवभासतेसंसारइत्येतद्दृष्टांते नस्पष्टयति॥ रज्जुसर्पोयथेति॥ स्पष्टार्थः॥ ४६॥

**आत्माभासाश्रयश्चात्मा प्रत्ययैः**
**स्वैर्विकारवान्॥ सुखी दुःखी च**
**संसारी नित्य एवेति केचन॥४७॥**

मतांतरमाश्रित्यकल्पनालाघवेनशंकते॥ आत्माभासा श्रयइति॥ चकारएवकारार्थः॥ आत्मैवात्माभासाश्रयआ त्माभासत्वाभिमतस्यजीवत्वस्याश्रयोतःसएवस्वैःस्वधर्मभूतैः प्रत्ययैर्विकारवान्सुखीदुःखीचेत्येवंसंसारीभवति॥ तथापि नित्यएवतरंगादिभिर्विक्रियमाणस्यापि समुद्रस्यस्थैर्यदर्शनाद तःआभासतदाश्रयात्मनाभेदकल्पनात्तदविवेककल्पनात्तद्वशा

ह्यात्मनिसंसारकल्पनाचगुर्वीआत्मैवसंसारीतिकल्पनालघीय सीतिकेचनमन्यंतइत्यर्थः ॥ ४७ ॥

आत्माभासापरिज्ञानाद्याथात्म्येन विमोहिताः ॥ अहंकर्तारमात्मेति मन्यंते ते निरागमाः ॥ ४८ ॥

उक्तंपुरस्तादस्माभिःसंभाव्योगोचरेशब्दइत्यत्रात्मनिसंसारित्वग्राहकंप्रमाणंनास्तीतितन्नविस्मर्तव्यंत्वयेत्यभिप्रेत्योत्प्रेक्षामात्रमूलैवैषाकल्पनानप्रमाणमूलेतिपरिहरति ॥ आत्माभासापरिज्ञानादिति ॥ आत्मापरमार्थःकूटस्थनित्यःआभासस्तच्छायारूपोन्यत्रसंक्रांतोमिथ्याभूतइत्यात्माभासयोर्याथात्म्येनापरिज्ञानान्मोहिताःसंतोहंकर्तारंसाभासांतःकरणमेवात्मेति तेमन्यंते॥यतोनिरागमाः आगमरहस्यपरिचयशून्याइत्यर्थः ॥ निष्कलंनिष्क्रियंशांतंनिरवद्यंनिरंजनं साक्षीचेताकेवलोनिर्गुणश्च ॥ कृत्स्नःप्रज्ञानघनएवात्रायंपुरुषःस्वयंज्योतिरित्यादिनित्यशुद्धत्वादिपरश्रुतिसंदर्भं तथा ॥ अनीशयाशोचतिमुह्यमानः ॥ अविद्यायामंतरेवेष्टयमानाअनृतेनहिप्रत्यूढाइत्यादिश्रुतिसंदर्भंचात्मनआविद्यकसंसारित्वानुवादपरंतेनपश्यंत्यतःस्वोत्प्रेक्षयायत्किंचिदेववदंतीत्यभिप्रायः ॥ ४८ ॥

संसारो वस्तुसंस्तेषां कर्तृभोक्तृत्व लक्षणः ॥ आत्माभासाश्रयाज्ञा नात्संसरंत्यविवेकतः ॥ ४९ ॥ ॥

मोक्षोप्येषांदुर्लभइत्याह ॥ संसारइति ॥ तेषांमतेसंसारोवस्तुसन्परमार्थःसन्भवेत्तथाचनासतोविद्यतेभावोनाभावोविद्यतेसतइतिनियमस्मृतेरविनाशीसंसार इतितेषांमतेमोक्षासिद्धिरित्यर्थः॥ यदिमोक्षाप्राप्तिभयात्संसारस्यावस्तुत्वंतेपिमन्येरंस्तर्ह्यस्मदुक्तप्रकारएवसइत्यनुजानाति ॥ आत्माभासाश्रयाज्ञानादिति ॥ आत्मादित्रयाणांतत्त्वाज्ञानादविवेकतोभेदाग्रहात्संसरंतीतियोजना ॥ ४९ ॥

**चैतन्याभासता बुद्धेरात्मनस्तत्स्वरूपता ॥ स्याच्चेत्तं ज्ञानशब्दैश्च वेदः शास्तीति युज्यते ॥ ५० ॥**

परपक्षेहानिंदोषमुक्त्वास्वपक्षेत्वाभासाभ्युपगमेलाभविशेषमाह ॥ चैतन्येति ॥ बुद्धेरंतःकरणस्यचैतन्याभासताआत्मनश्चैतन्यस्वरूपताचचेत्स्याद्भवेत्तदावेदस्तमात्मानंज्ञानशब्दैर्ज्ञानसत्त्वानंतानंदात्मादिभिःशब्दैःशास्तिप्रतिपादयतीतियुज्यतेघटतइत्यक्षरार्थः ॥ अयंभावः ॥ प्रकाशस्वभावंवस्तुयत्रप्रतिबिंबतेतत्रप्रकाशाभासोदयहेतुस्तद्भवातियथाजलेप्रतिबिंबितःसवितातथाबुद्धौप्रतिबिंबितंचैतन्यंतत्रचित्प्रकाशोदयहेतुर्भवति ॥ ततःसाभासायांबुद्धौगृहीतसंबंधैर्ज्ञानादिशब्दैर्वेदआत्मानंलक्षणयाबोधयतीतिसंगच्छतेऽन्यथानिर्धर्मकआत्मनिशब्दप्रवृत्त्यनुपपत्तेर्वेदांतवेद्यतालस्यनसिध्येन्मानांतरंचतत्रनक्रमतइतिअसिद्धिरेवात्मनःस्यादित्याभासाभ्युपगमःश्रुतिस्मृतिन्यायविद्भिःकर्तव्यइति ॥ ५० ॥

प्रकृतिप्रत्ययार्थौ यौ भिन्नावेका
श्रयौ यथा ॥ करोति गच्छतीत्यादौ
दृष्टौलोकप्रसिद्धितः ॥ ५१ ॥

यद्यप्येवमाभासाभ्युपगमेवेदप्रवृत्तिरात्मन्युपपद्यते तथा प्यस्मिन् जानात्यादिशब्दानप्रवर्तेरन्निर्तिव्यवहारासिद्धिःप्रस ज्येतेतिशंकते ॥ ननुज्ञानशब्दोऽव्युत्पाद्यमानआत्मनिमुख्यां वृत्तिंलभतएवअतःकथंसाभासबुद्धिवाचकःसन् आत्मनिलक्ष णयावर्तिष्यतइतिकल्पतइतिवाशंकते ॥ प्रकृतीति ॥ प्रकृत्य र्थःक्रिया प्रत्ययार्थःकर्तृत्वंतावुभौस्वरूपतोभिन्नावेकस्मिन्ना श्रयेस्थितौकरोतिगच्छतीत्यादौलोकेदृष्टौयथातथालोकप्रसिद्धि तएवजानातिकरोतीत्यादेरप्यात्मैकाश्रयत्वंयुक्तमित्यर्थः ॥५१

नानयोर्द्व्याश्रयत्वं च लोके दृष्टं
स्मृतौ तथा ॥ जानात्यर्थेषु को हे
तुर्द्व्याश्रयत्वे निगद्यतां ॥ ५२ ॥

यथैकाश्रयत्वमनयोर्दृष्टंतथाभिन्नाश्रयत्वमपिक्वचित् किंनस्या दित्यतआह॥नानयोरिति॥अनयोःप्रकृतिप्रत्ययोःद्व्याश्रयत्वं नलोकप्रयोगेषुदृष्टंतथास्मृतौव्याकरणरूपायामपिनदृष्टमतो जानात्यर्थेषुद्व्याश्रयत्वेआत्माप्रत्ययार्थाश्रयः बुद्धिःप्रकृत्यर्था श्रयइतिद्व्याश्रयत्वाभ्युपगमेकोहेतुःसनिगद्यतामित्यर्थः॥५२

आत्माभासस्तु तिङ्वाच्यो धात्वर्थ

**श्चाधियः क्रिया॥ उभयं चाविवेके न जानातीत्युच्यते मृषा ॥ ५३॥**

प्रकृतिप्रत्यययोरेकाश्रयत्वमात्रमस्मिन्मतेनसंगच्छतइत्युच्यतेकिंवापरमार्थतस्तयोरेकाश्रयत्वं तत्रनाद्यइत्याहसिद्धांती ॥ आत्माभासइति ॥ तुशब्दःशंकानिषेधार्थः ॥ आत्माभासोबुद्धिगतास्तिङ्वाच्यः प्रत्ययवाच्यः धियोबुद्धेःक्रियावृत्तिरूपा धात्वर्थःप्रकृत्यर्थः ॥ तथाचात्माभासोबुद्धिश्चेत्युभयंचाविवेकेनपरमार्थात्माविवेकेनमृषैवजानातीत्युच्यते ॥ तथाचात्माभासव्याप्तक्रियावद्बुद्ध्यैक्याध्यासादात्माजानातीत्येकाश्रयत्वावभासःप्रकृतिप्रत्यययोरिहापिनानुपपन्नइत्यर्थः ॥ ५३ ॥

**न बुद्धेरवबोधोस्ति नात्मनो विद्यते क्रिया ॥ अतो नान्यतरस्यापि जानातीति च युज्यते ॥ ५४ ॥**

द्वितीयंप्रत्याह ॥ नबुद्धेरिति सम्यग्विचार्यमाणेक्रियावत्या बुद्धेरवबोधश्चित्प्रकाशोनास्ति नाप्यात्मनोऽवबोधस्वभावस्य क्रियाविद्यतेऽतोनान्यतरस्यापि जानात्यवगच्छतीति निर्देशोयुज्यते ॥ तथाचप्रतीतिमात्रशरणैरारोपिततदैक्यविषयत्वंजानात्यादेराश्रयणीयमितिनलोकव्यवहारविरोधःस्मृतिविरोधोवा भवतीत्यर्थः ॥ ५४ ॥

**नाप्यतो भावशब्देन ज्ञप्तिरित्यपि युज्यते॥ न ह्यात्मा विक्रियामात्रो**

## नित्य आत्मेति शासनात् ॥५५॥

यथाजानातीतिज्ञइतिकर्तृव्युत्पत्याबुध्यात्मनोरेकैकस्मिन् जानात्यर्थानुपपत्तिर्नापिमीलितयोस्तदुपपत्तिः परमार्थतोजडाजडयोरैक्यायोगान्नाप्यन्यतरसन्निधिनिमित्तान्यतरस्मिन्नुभयाश्रयतेतिघटतेअध्यासव्यतिरेकेणसन्निधेरनिरूपणात्तथाज्ञप्तिर्ज्ञानमितिभावव्युत्पत्यापिज्ञानशब्दप्रयोगआत्मनिनघटतइत्याहनाप्यतइति ॥ भावशब्देनधात्वर्थसामान्यवचनेनज्ञप्तिर्ज्ञानमितिव्युत्पत्यापिज्ञानशब्दप्रयोगआत्मनिनयुज्यतेऽतइत्युक्तंहेतुंव्यनक्ति ॥नहीति॥ क्रियामात्रत्वेपारतंत्र्येणात्मनोऽनित्यत्वप्रसंगस्तच्चानिष्टंनित्यआत्मेतिश्रुतिशासनादित्यर्थः ॥ ५५ ॥

## न बुद्धेर्बुद्धिवाच्यत्वं करणं न ह्यकर्तृकं ॥ नापि ज्ञायत इत्येवं कर्मशब्दैर्निरूप्यते ॥ ५६ ॥

यथाज्ञानातीतिज्ञइतिकर्तृव्युत्पत्त्याज्ञप्तिर्ज्ञानमितिभावव्युत्पत्याचात्मनिज्ञानशब्दानुपपत्तिस्तथाज्ञायतेनेनेति करणव्युत्पत्याज्ञायतइतिज्ञानमितिकर्मव्युत्पत्याचात्मनिज्ञानशब्दप्रवृत्तिर्नयुज्यतइत्याह॥नबुद्धेरिति॥बुध्यतेऽनयेतिबुद्धिरितिव्युत्पत्त्याबुद्धिशब्दवाच्यत्वंबुद्धेरंतःकरणस्यस्यान्नात्मनइतियोजना ॥ तत्रहेतुःकरणमिति॥करणव्युत्पत्तिपक्षेबुद्धिशब्दवाच्यस्यात्मनःकरणत्वापत्तौकर्त्रंतराभावादकर्तृकंकरणंस्यान्नहिकरणमकर्तृकंक्वचिद्दृष्टमित्यर्थःतथाज्ञायतइतिज्ञानमितिकर्मशब्दैरप्यात्माननिरूप्यतेनसम्यगुच्यतेस्वस्यस्ववेद्यत्वानुपपत्तेर्ज्ञात्रंतरस्या

भावाच्चनकर्मव्युत्पत्तिरपीहेत्यर्थः॥ ज्ञायतेऽस्मिन्निति ज्ञानमिति व्युत्पत्त्यंतरमस्तीतिचेत्तत्रवक्तव्यंज्ञेयाधारत्वमात्रंज्ञानशब्देने होच्यतेज्ञातृत्वेसतिज्ञेयाधारत्वंवानाद्यः॥ ज्ञेयघटाद्याधारभूत लादेरपिव्युत्पत्तियोगात्ज्ञानशब्दाभिधेयत्वप्रसंगात्नद्वितीयः आत्मनोज्ञातृत्वस्यनिराकृतत्वादित्ययंपक्षोऽतिस्थूलइत्याचार्यै रुपेक्षितइतिद्रष्टव्यं ॥ ५६ ॥

**न येषामेक एवात्मा निर्दुःखो विक्रियः सदा ॥ तेषां स्याच्छब्दवाच्यत्वं ज्ञेयत्वं चात्मनः सदा॥५७॥**

एवंमुख्ययावृत्त्याज्ञानादिशब्दवाच्यत्वमात्मनोनोपपद्यतइ तिप्रतिपादितेतवाप्येतत्तुल्यमित्याशंक्येष्टापत्त्यापरिहरति ॥ न येषामिति ॥ येषांमतेएकएवात्मासदानिर्दुःखादिलक्षणोभ्यु पगतस्तेषामात्मनःसदाशब्दवाच्यत्वंज्ञेयत्वंचनस्यात्परमार्थत इतियोजना ॥ यद्वात्मनिमुख्यशब्दप्रवृत्त्यभावमुक्तंव्यतिरेक मुखेनोपपादयति ॥ नयेषामिति ॥ येषांमतेएकएवयथानि र्दिष्टआत्मानभवतितेषांशब्दवाच्यत्वंज्ञेयत्वंचात्मनःसदास्याद स्त्वितियोजना ॥ तत्रकर्त्रादिव्युत्पत्तेः संभवात् ॥ नत्वेकात्म वादेश्रौतेतत्संभवइत्यर्थात्सिद्धमित्यर्थः॥ ५७ ॥

**यदाहंकर्तुरात्मत्वं तदा शब्दार्थमुख्यता॥नाशनायादिमत्वा तु श्रुतौ तस्यात्मतेष्यते ॥ ५८ ॥ ॥**

तर्ह्यस्तुशब्दार्थमुख्यत्वायसविकारएवात्मेतिशंकते ॥ यदेति ॥ अहंकर्त्तेत्याद्यभिमन्यमानाकारस्यात्मत्वमेवनास्तीतिपरिहरति ॥ नेति ॥ योशनायापिपासेशोकमोहंजरांमृत्युमत्येत्येतंवैतमात्मानंविदित्वेति श्रुतावात्मनोऽशनायाद्यतीतत्वस्वाभाव्यावगमादशनायादिधर्मवत्त्वादहंकर्तुस्तस्यात्मतानेष्यत इतियोजना ॥ अतोज्ञानादिशब्दाआत्मनिनसाक्षात्प्रवर्तंतइत्याभासद्वारतास्मदुक्तातेषांसिद्धेतिभावः ॥ ५८ ॥

हंत तर्हि न मुख्यार्थो नापि गौणः
कथंचन ॥ जानातीत्यादिशब्दस्य
गतिर्वाच्या तथापि तु ॥ ५९ ॥ ॥

नन्वेवमुक्तरीत्यायादिजानात्यादेरात्मन्यन्यत्रचमुख्यतानसंभवेत्तर्हिवृत्त्यंतरेणाप्यात्मनिप्रवृत्तिरनुपपन्नानहिक्वाप्यमुख्यंक्वचिदुपचर्यतेइतिसंभवतीतिहंततर्हीतिचतुर्भिः ॥स्पष्टं ॥५९॥

शब्दानामयथार्थत्वे वेदस्याप्यप्र
माणता॥सा च नेष्टा ततो ग्राह्या ग
तिरस्य प्रसिद्धितः ॥ ६० ॥ ॥

मास्तुमुख्याभावाद्गौणोपितथापिकिमितिगतिर्वाच्येतिचेत्त्राह ॥ शब्दानामिति ॥ नकेवलंलौकिकशब्दानामेवजानात्यादीनामप्रमाणताकिंतुवेदस्यापीत्यपिशब्दयोजना ॥ लोकसिद्धव्युत्पत्त्यपेक्षत्वाद्वेदबोधकत्वस्येत्यभिप्रायः सावेदस्याप्रमाणतानेष्टा चकाराद्वेदस्यैवात्मनिप्रमाणतेष्टेतिसमुच्चीयतेअतोवेद

प्रामाण्यांगीकारलोभादेवगतिर्वाच्येत्यर्थः ॥ तर्हिप्रसिद्धैवगतिः किमिहवक्तव्यमितिसिद्धांतिनःशंकांगृण्हाति॥ततोग्राह्येतिप्रसिद्धितइतिचेदितिशेषः ॥ ६० ॥

प्रसिद्धिर्मूढलोकस्य यदि ग्राह्या निरात्मता ॥ लोकायतिकसिद्धांतः सा चानिष्टा प्रसज्यते ॥६१॥ ॥

तत्रवक्तव्यंप्राकृतजनप्रसिध्यागतिराश्रीयतेपाणिन्याद्यभियुक्तप्रसिध्यावातत्राद्यमनूद्यदूषयाति ॥ प्रसिद्धिर्मूढलोकस्येति ॥ प्राकृतप्रसिध्यभ्युपगमेदेहात्मप्रसिद्धेरप्यभ्युपगमान्निरात्मवादाद्यापत्तिरनिष्टाप्रसज्येतेत्यर्थः ॥ ६१ ॥

अभियुक्तप्रसिद्धिश्चेत्पूर्ववद्दुर्विवेकता ॥ गतिशून्यं न वेदोयं प्रमाणं संवदत्युत ॥ ६२ ॥ ॥ ॥ ॥

द्वितीयमनूद्यप्रत्याह ॥ अभियुक्तेति ॥ पूर्ववदिति ॥ बुद्धेरात्मनोवाज्ञातृत्वंदुर्निरूपमितिप्रागुक्तदोषप्रसंगइत्यर्थः ॥ यद्येवंतर्ह्यात्मनोगतिशून्यमिवज्ञातृत्वंवेदोऽनुवदिष्यतीतितत्राह्नगतीति ॥ प्रमाणमितिहेतुगर्भंवेदविशेषणं ॥ ६२ ॥

आदर्शे मुखसामान्यं मुखस्येष्टं हि मानवैः ॥ मुखस्य प्रतिबिंबो हि मुखाकारेण दृश्यते ॥ ६३ ॥ ॥

चिदात्मन्येवौपाधिकोजानात्यादिशब्दप्रयोगःसंभवतीत्य भिप्रेत्यसिद्धांतीदृष्टांतमाह ॥ आदर्शेति ॥ आदर्शेदृश्यमानंय न्मुखंतेनसामान्यंसमानत्वमेकत्वंमुखस्यादर्शाद्बहिस्तिष्ठतोमा नवैरिष्टंहिप्रसिद्धमित्यक्षरार्थः ॥ आदर्शेमुखव्यक्त्यंतरोत्पा दानुपपत्तिसहकृततयामदीयंमुखमितिप्रत्यभिज्ञयाबिंबप्रतिबिं बभावेनोपाधितोभेदावभासेपिमुखैक्यंमानवैरिष्यतएवइत्युक्तं भवतिउक्तमेवैकत्वंस्फुटयाति ॥ मुखस्येति ॥ ६३ ॥

यत्र यस्यावभासस्तु तयोरेवाविवे
कतः॥ जानातीति क्रियां सर्वो लो
को वक्ति स्वभावतः ॥ ६४ ॥ ॥

यथाकल्पितमुखस्यपरमार्थमुखस्यचान्योन्याविवेकान्म लिनंमुखमल्पंवक्रमित्यादिव्यपदेशउपाधिनिबंधनस्तथात्मन्य पिज्ञातृत्वादिव्यपदेशउपाधिनिबंधन इत्युपपन्नमितिदार्ष्टांतिक ह॥ यत्रेति॥अवभासआभासःप्रतिबिंबभावइतियावत् ॥६४॥

बुद्धेः कर्तृत्वमध्यस्य जानातीति
ज्ञ उच्यते ॥ तथा चैतन्यमध्यस्य
ज्ञत्वं बुद्धेरिहोच्यते ॥ ६५ ॥

यच्छब्दाभ्यामुक्तमर्थंस्पष्टयति ॥ बुद्धेरिति ॥ बुद्ध्यात्मनो स्तादात्म्याध्यासेसत्यन्योन्यधर्मसंकरादात्माजानात्यहंजाना मीतिचव्यपदेशोभवतीतिसमुदायार्थः ॥ ६५ ॥

स्वरूपं चात्मनो ज्ञानं नित्यं ज्यो

तिः श्रुतेर्यतः ॥ न बुध्यां क्रियते तस्मान्नात्मनान्येन वा सदा ॥ ६६ ॥

ननुबुध्यादिभिरात्मनिज्ञानमुत्पाद्यतेततः कथमिदमुच्यते आत्मचैतन्यंबुद्धावध्यस्यतइतितत्राह ॥ स्वरूपंचेति ॥ ज्ञानमात्मनःस्वरूपंतदेवज्योतिषांज्योतिरात्मैवास्यज्योतिरत्रायंपुरुषःस्वयंज्योतिःसाक्षीचेत्यादिश्रुतेः ॥ अतश्चनित्यमेवयतस्तस्मान्नबुध्याज्ञानंक्रियते ॥ आत्मनावान्येनवाचक्षुरादिना ज्ञानंसदाकदापिनक्रियतइत्यर्थः ॥ ६६ ॥

देहेहंप्रत्ययो यद्वज्जानातीति च लौकिकाः॥वदंति ज्ञानकर्तृत्वं तद्वद्बुद्धेस्तथात्मनः ॥ ६७ ॥

बुध्यात्मनोरन्योन्यधर्माध्यासेनैवव्यवहारइत्युक्तेर्थेदृष्टांतमाह॥देहइति॥रूपादिमत्वेनघटादिवदहंप्रत्ययायोग्येपिदेहेचेतनामध्यस्ययथाहंमनुष्यः कृशःस्थूलइत्यादिप्रत्ययोदृश्यतेतथा बुद्धेर्जडत्वेनज्ञातृत्वायोग्यत्वेपिचिदाभासव्याप्त्याज्ञातृत्वमारोप्यजानामीतिलौकिकावदंति व्यवहरंति दार्ष्टांतिकमाह॥ तथात्मनइति॥विकाररहितस्याप्यात्मनोविकारिचित्तोविवेकाद्विकारित्वादिव्यपदेशसिद्धिरित्यर्थः॥ यद्वास्थूलदेहे यद्वदहंप्रत्ययोमनुष्योहमित्येवमादिरहंप्रत्ययायोग्येपिव्यवह्रीयतेसर्वैः॥लौकिकाश्चशास्त्रसंस्काररहिताः देवदत्तोजानातिमनुतइतिचदेहस्यैवज्ञातृत्वंवदंतितद्वद्बुद्धेर्ज्ञानकर्तृत्वंतथाऽत्मनोज्ञानाश्रयत्वंविकारवत्वंचव्यवहारास्पदंभवतीत्यर्थः ॥ ६७ ॥

बौद्धैस्तु प्रत्ययैरेवं क्रियमाणैश्च
च्चिन्निभैः ॥ मोहिताः क्रियते ज्ञान
मित्याहुस्तार्किका जनाः ॥ ६८ ॥

ननुतार्किकाज्ञानस्योत्पत्तिविनाशौपश्यंतोज्ञानमात्मना क्रियतइत्याहुःतत्कथंनित्यंज्ञानमात्मस्वरूपमित्युक्तमित्यतआह ॥ बौद्धैस्त्विति एवंपूर्वोक्तप्रकारेणात्मबुद्ध्योरन्योन्याध्यासाच्चिन्निभैश्चिच्छायापत्याचिदिवभासमानैर्बौद्धैर्बुद्धिप्रभवैःक्रियमाणैःप्रत्ययैर्वृत्तिविशेषैर्मोहितास्तार्किकाजनाज्ञानंक्रियतेजायतेइत्याहुर्वदंतितेषांबुध्यात्माविवेकएवापराधोनतुज्ञानंक्रियतेतथासतिप्रत्ययोत्पत्तिविनाशयोरसाक्षिकतयाऽसिद्धिप्रसंगादिति भावः ॥ ६८ ॥

तस्माज्ज्ञाभासबुद्धीनामविवेकात्प्र
वर्तिताः ॥ जानातीत्यादिशब्दश्च
प्रत्ययो या च तत्स्मृतिः ॥ ६९ ॥

यस्मादेवंविचार्यमाणेप्रमाणासिद्धकौटस्थ्यस्यात्मनोनविकारित्वंप्रामाणिकंयस्माच्चज्ञानमात्मस्वरूपत्वश्रवणान्नित्यमेवेति नकेनापिक्रियते ॥ यस्माच्चबुद्धिसंसर्गंविनात्मनोनज्ञातृत्वमुपलभ्यतेसुप्तावदर्शनात् ॥ बुद्धिश्चनात्मनःपृथक्ज्ञातृत्वाद्याकारोपलभ्यतेतस्मादात्मबुद्धितत्स्थाभासानामाविवेकाद्यथाप्रसिद्धमेवव्यावहारिकंबुध्यात्मनोरेकत्वंगृहीत्वाजानात्यादिव्यपदेश उपपद्यतेनपरमार्थतोमुख्यमन्यदालंबनमस्तीतिप्रकृतमुपसंह

रति ॥ तस्मादिति ॥ जानातीत्यादिशब्दश्चतदनंतरभावीत द्विषयःप्रत्ययश्चयाचतत्संस्कारजास्मृतिः साचेतित्रयोर्थाः ॥ ज्ञाभासबुद्धीनामविवेकात्प्रवर्तिताइतियोजना ॥ ६९ ॥

आदर्शानुविधायित्वं छायाया अ
स्यते मुखे ॥ बुद्धिधर्मानुकारित्वं
ज्ञाभासस्य तथेष्यते ॥ ७० ॥

ज्ञाभासबुद्धीनामविवेकमूलःसर्वोव्यवहारोनपारमार्थिकइ त्युक्तमर्थंदृष्टांतेनस्पष्टयाति ॥ आदर्शेति ॥ छायायामुखाभास स्ययदादर्शानुविधायित्वंतन्मुखेअस्यतेऽध्यस्यतेयथेतिशेषः ॥ तथाऽध्यस्तस्यचिदाभासस्यबुद्धिधर्मानुकारित्वंज्ञेआत्मनीष्यते ऽध्यस्यव्यवन्हियतइत्यर्थः ॥ ७० ॥

बुद्धेस्तु प्रत्ययास्तस्मादात्माभासे
न दीपिताः ॥ ग्राहिका इव भासंते
दहंतीवोल्मुकादयः ॥ ७१ ॥ ॥

यस्मादेवंचिदाभासाविविक्ताबुद्धिस्तस्मात्तत्परिणामेषुग्राह कत्वप्रतिभाससिद्धिरित्याह ॥ बुद्धेस्त्विति ॥ निगदव्याख्या तंपद्यं ॥ ७१ ॥

स्वयमेवावभास्यंते ग्राहकाः स्व
यमेव च ॥ इत्येवं ग्राहकास्तित्वं
प्रतिषिद्धंति सौगताः ॥ ७२ ॥ ॥

एवमाभासविविक्तपदार्थस्वरूपाज्ञानाद्यथातार्किकाणांव्या मोहो ज्ञानंक्रियतइति तथाबौद्धानामपिबुद्धिव्यातिरिक्तोग्राह कोनास्तीतिव्यामोहएवेत्याह ॥ स्वयमेवेति ॥ स्वयमेवचप्र त्ययाइतिशेषः ॥ ७२ ॥

**यद्येवंनान्यदृश्यास्ते किं तद्वारण मुच्यतां ॥ भावाभावौ हि तेषां यौ नान्यग्राह्यौ सता यदि ॥७३॥**

यद्येवंप्रत्ययानांग्राहकमन्यंस्थिरमनाहत्यप्रत्ययमेवग्राह्यग्रा हकाकारंबौद्धामन्यंतेतर्हितन्मतस्यानुभवानुसारित्वादाभासान भ्युपगमेकथंतेनिराकर्तव्याइत्याशयेनस्वयूथ्यंपृच्छति ॥ यद्ये वमिति ॥ तेप्रत्ययानान्यदृश्याःअन्येनसाक्षिणानित्यसिद्धेनन ग्राह्याइतियद्येवंबौद्धावदंतितन्मतवारणंकिमस्तितदुच्यतांइत्यु क्तेस्वयूथ्यःप्रत्याह ॥ भावाभावाविति ॥ तेषांप्रत्ययानांयौभा वाभावौउत्पत्तिविनाशौसतास्वतःसिद्धेनसाक्षिणान्येनग्राह्यौय द्यपितथापियस्मिन्प्रत्ययानांभावाभावौसोहमितिप्रत्यभिज्ञा बलात्तेषांग्राहकोन्वयीस्थाय्यात्मासिध्यतिकिमाभासकल्पनये तियोजना ॥ ७३ ॥

**अन्वयी ग्राहकस्तेषामित्येतदपि तत्समं ॥ अचितित्वस्य तुल्यत्वा दन्यस्मिन् ग्राहके सति ॥ ७४ ॥**

एवंस्वयूथ्येनोक्तेनैतावताबौद्धोवारयितुंशक्यतइतिदूषयति

एतदपीति ॥ एतदपिप्रत्यभिज्ञानसिद्धमपिग्राहकरूपंतत्समंप्रत्ययसमंजडमेवेत्यत्रहेतुमाह ॥ अचितित्वस्येति ॥ अयमर्थः ॥ प्रत्ययग्राहकःअप्रकाशःस्वप्रकाशोवा ॥ आद्यंप्रत्याह॥ अचितित्वस्येति ॥ अन्यस्मिन्ग्राहकेसतिग्राह्यकोटिपतितत्वेनजाड्यापरिहारात्स्वयमप्यसिद्धःकथंप्रत्ययानांग्राहकइत्यर्थः अथवाअन्यस्मिन्ग्राहकेऽसतिस्वतःसिद्धेसाक्षिण्यविद्यमानेप्रत्यभिज्ञाग्राह्यस्यापि अचितित्वस्यतुल्यत्वाद्ग्राहकत्वासिद्धिरित्यर्थः ॥ द्वितीयेस्वप्रकाशस्यसाक्षिणोनिर्विकारत्वाभाससिद्धिरितिद्रष्टव्यं ॥ ७४ ॥

**अध्यक्षस्य समीपे तु सिद्धिः स्यादिति चेन्मतं ॥ नाध्यक्षेनुपकारित्वादन्यत्रापि प्रसंगतः ॥ ७५ ॥**

स्वप्रकाशेसाक्षिण्यसतिप्रत्ययानांभावाभावासिद्धिश्चेत्तर्हि साक्षिसान्निध्यमात्रेणैवतत्सिद्धेःकृतमाभासाभ्युपगमेनेतिशंकते ॥ अध्यक्षस्येति ॥ तत्रवक्तव्यंकिंसाक्षिसन्निधानमात्रंप्रत्ययसिद्धिहेतुःकिंवातत्कृतविशेषयोगोपीतितत्रद्वितीयंतावद्दूषयति ॥ नेति निर्विकारेऽध्यक्षेउपकारित्वानिरूपणादित्यर्थः ॥ पाठांतरेअध्यक्षेसाक्ष्येहंकारादावनुपकारित्वादुपकारपदवाच्यातिशयाजनकत्वादित्यर्थः ॥ प्रथमंदूषयति ॥ अन्यत्रापीति ॥ साक्षिणःपूर्णतयासर्वत्रसदासान्निध्याविशेषात्काष्ठ्यादीनामपिसिद्धिप्रसंगादित्यर्थः ॥ ७५ ॥

**अर्थी दुःखी च यः श्रोता सत्वध्य**

क्षोऽथवेतरः ॥ अध्यक्षस्य च दुः
खित्वमार्थित्वं च न ते मतं ॥ ७६ ॥

एवमाभासानभ्युपगमेबौद्धादिमतसाम्यदोषपरिहारानुपपत्तिंस्वबुध्यान्प्रत्युक्त्काशास्त्रीयोबंधमोक्षव्यवहारोपितेषांनसिध्यतीतिवक्तुंविकल्पयति ॥ अर्थीति ॥ योदुःखित्वेनमोक्षार्थित्वेनचप्रसिद्धागुरूपदेशश्रोतासएवाध्यक्षोमतस्ततोन्योवेतिविकल्पार्थः ॥ आद्येनिरनुग्रहाध्यक्षवादिनःतवापसिद्धांतप्रसंगइतिदूषयत्यध्यक्षस्येति ॥ आत्माभासानंगीकारवादिनस्तेद्वाराभावादविद्यातत्कार्यसंबंधासिद्धेस्तेनचविनार्थित्वाद्यसिद्धेराभासाभ्युपगमप्रसंगइत्यर्थः ॥ ७६ ॥

कर्ताऽध्यक्षः सदस्मीति नैव सद्ग्रह
मर्हति ॥ सदेवासीति मिथ्योक्तिः
श्रुतेरपि न युज्यते ॥ ७७ ॥

द्वितीयंदूषयति ॥ कर्तेति ॥ श्रोतुरर्थिनोध्यक्षस्यचभेदपक्षेकर्ताकर्तृत्वादिधर्मकोविकारीश्रोताजडवर्गपतितत्वात्सदहमध्यक्षोस्मीतिसद्ग्रहंसदादिशब्दनिर्दिष्टब्रह्मात्मग्रहंनार्हतिविरोधादित्यर्थः ॥ यद्वा सदध्यक्षोनिर्विकारआत्माहमस्मीतिसद्ग्रहंयथार्थबोधंनार्हतिनलभतइत्यर्थः ॥ श्रुतिबाधप्रसंगाच्चार्यपक्षोनयुक्तइत्याह ॥ सदेवेति ॥ ७७ ॥

अविविच्योभयं वक्ति श्रुतिश्चे
त्स्याद्ग्रहस्तथा ॥ अस्मदस्तुविवि

च्यैव त्वमेवेति वदेद्यदि ॥ प्रत्यया न्वयिनिष्ठत्वमुक्तदोषःप्रसज्यते॥७८॥

चिदाभासानभ्युपगमपक्षेबंधमोक्षानुपपत्तिमुपपाद्यस्वप क्षेतदुपपत्तिमाह ॥ अविविच्येति उभयमात्मानमहंकारंचद्वय माभासद्वारेणाविवेकापन्नमविविच्याविविक्तमकृत्वायथाप्राप्तम र्थित्वाद्युपादायश्रोतृत्वेनस्थितंप्रतितत्त्वमसीतिश्रुतिर्वक्त्यात्म तत्त्वमितिचेत्पक्षस्तदातथायथाश्रुत्युक्तस्यग्रहोग्रहणं स्यादिति योजना ॥ अयमभिप्रायः ॥ अंतःकरणादौचिदाभासोदयेसति तद्गतविकाराध्यासादविक्ताहंकारआत्मार्थित्वादिसंपन्नोमुमुक्षु तांप्रतिपद्यते ॥ तंतथैवाविवेकावस्थंत्वमित्यनूद्याभासद्वारासा भासांतः करणसाक्षितयालक्षयित्वातेजोबन्नादिजगत्कारण त्वेनोपलक्षितंसच्छब्दवाच्यंब्रह्मतदित्यनूद्यजीवेनात्मनानाम रूपसंघातानुप्रविष्टत्वेनापरोक्षप्रत्यक्तयालक्षयित्वात्वंतदसी तिश्रुतिरुपदिशातिआत्मतत्त्वमितितयाग्रहणमुपपद्यतइति ॥ अहंकारएवश्रोतास्यात्किमात्माभासाभ्युपगमेनेतिसांख्यमत मनूद्यदूषयति ॥ अस्मदास्त्वति ॥ प्रत्ययान्वय्यहंकारःयदिवा क्यमस्मदःप्रत्यक्चैतन्यादहंकारंविविच्यैवत्वमेवेतिप्रत्ययान्व यिनिष्ठत्वंवदेत्तदोक्तोदोषश्रुतेर्मिथ्योक्तित्वप्रसंगरूपःप्रसज्यत इत्यर्थः ॥ ७८ ॥

त्वमित्यध्यक्षनिष्ठश्चेदहमध्यक्ष योःकथं ॥ संबंधो वाच्य एवात्र येन त्वमिति लक्षयेत् ॥ ७९ ॥

तर्ह्यहंकर्तृविषयोप्युपदेशोध्यक्षेपर्यवस्यतीत्याशंक्याभासा नभ्युपगमेतदपिदुर्घटमित्याह ॥ त्वमिति ॥ त्वमितिपदंअहंकारवाचिसदध्यक्षंबोधयतिचेदहंकाराध्यक्षयोःसंबंधग्रहमंतरेणवाक्यार्थबोधानुपपत्तेरहमध्यक्षयोःसंबंधोत्रवाच्यएवसकथमुपपद्यतेयेनसंबंधेनत्वमितिपदमध्यक्षंलक्षयेदित्यर्थः ॥७९॥

द्रष्टृदृश्यत्वसंबंधो यद्य
ध्यक्षे क्रियेत्कथं ॥८०॥

अस्तिसंबंधइहेत्याशंक्यपरिहरति ॥ द्रष्टृदृश्यत्वेति ॥ यदिद्रष्टृदृश्यत्वसंबंधोभ्युपगम्यतेतदापिसंबंधग्रहणमनुपपन्नं ॥ अहंकारस्यजडत्वात्संबंधग्रहणायोगादध्यक्षस्यतद्ग्रहणमितिवक्तव्यमक्रियेनिर्विकारेध्यक्षेकथंसंबंधग्रहणकर्तृत्वमित्यर्थः ॥ ८० ॥

अक्रियत्वेपि तादात्म्यमध्यक्षस्य
भवेद्यदि ॥ आत्माध्यक्षो ममास्ती
ति संबंधाग्रहणेन धीः ॥ ८१ ॥

मास्तुसंबंधग्रहणंतथापितादात्म्योपदेशोभविष्यतीतिशंकामनूद्यदृष्टविरोधान्मैवमितिपरिहरति ॥ अक्रियत्वेपीति ॥ यथालोकेघटस्यशौक्ल्यमितिघटशौक्ल्ययोःसंबंधाग्रहणेशुक्लोघटइतिवाक्यतादात्म्यधीर्नेदितितथाममात्माध्यक्षोस्तीतिसंबंधाग्रहणेसतिनतादात्म्यधीःश्रुतितोजायेतेत्यर्थः ॥ ८१ ॥

संबंधग्रहणं शास्त्रादिति चेन्मन्यसे

नहि ॥ पूर्वोक्ताः स्युस्त्रिधा दोषा ग्र
हो वा स्यान्ममेति च ॥ ८२ ॥ ॥

एषमआत्मांतर्हृदयेअणीयान्एषमआत्मांतर्हृदयेएतद्ब्रह्मे
तिशास्त्रादस्त्यहंकाराध्यक्षयोःसंबंधग्रहइतिशंकामुत्थाप्यनिरा
करोतिसंबंधग्रहणमितिनहीत्युक्तंव्यनक्ति पूर्वोक्ताइति ॥ अहं
कारस्यजडत्वात्संबंधग्रहीतृत्वंनघटतेनाप्यध्यक्षस्यनिर्विकार
त्वादितिद्वौदोषौजडंप्रतिश्रुतेर्बोधकत्वासंभवस्तृतीयोदोषइति
त्रिधादोषाःस्युःयदिकथंचित्संबंधग्रहणंकल्प्येततदापिममाध्य
क्षोस्तीतिसंबंधग्रहणंस्यान्नत्वहमेवाध्यक्षोस्मीतितादात्म्याध्या
सानंगीकाराच्चकारान्ममाध्यक्षोस्तीत्यपिनघटतेहंकारस्यजड
त्वादित्यभ्युच्चयः ॥ ८२ ॥

अहंशिर्द्दशिरूपेण भाति बुद्धिर्यदा
तदा ॥ प्रत्यया अपि तस्याः स्युस्त
मायोविस्फुलिंगवत् ॥ ८३ ॥

एवमात्मानात्मनोःपरपक्षेसंबंधासिद्धिमुक्त्वास्वपक्षेमिथ्याता
दात्म्यसंबंधइतिदर्शयति अहशिरिति॥यदाऽहशिरचेतनाबुद्धिर्द्द
शिरूपेणसदाभातीत्यभ्युपगम्यतेतदातस्याबुद्धेःप्रत्ययावृत्तयो
पितप्तायोविस्फुलिंगानामग्न्यात्मत्ववद्दृशिरूपाःस्युरित्यर्थः॥८३

आभासस्तदभावश्च दृशेः सीम्नो
नचान्यथा ॥ लोकस्य युक्तितः
स्यातां तद्ग्रहश्च तथासति॥८४॥

अस्मिन्पक्षेलौकिकवैदिकव्यवहारसिद्धिरपिसुसंपादेत्याह आभासइति ॥ सीम्नोवधिभूतायाःदृशेश्चिदात्मनःसकाशादेव लोकस्याभासस्तदभावश्चप्रत्ययश्चतदभावश्चस्यातांयुक्तितोयुक्तेरुपपत्तेर्नचान्यथातथासतिआभासानभ्युपगमेसतिप्रत्यय भावाभावयोः प्रत्यग्राह्यत्वायोगात्ततोत्यंतमेवविविक्तस्यचात्मनस्तद्ग्राहकत्वानुपपत्तेराभासद्वारातुसंबंधादात्मनोबुद्धिवृत्तिभावाभावसाक्षित्वमुपपद्यते बुद्धेश्चतद्ग्रह आत्मग्रहोहमस्मीत्युपपन्नःस्यादित्यर्थः ॥ ८४ ॥

**नन्वेवं दृशिसंक्रांतिरयःपिंडेऽग्निवद्भवेत् ॥ मुखाभासवदित्येतदादर्शे तन्निराकृतं ॥ ८५ ॥ ॥**

तप्नायोविस्फुलिंगवदितिदृष्टांताभिधानादात्मनोविकारप्राप्तिंशंकते ॥ नन्वेवमिति ॥ अयःपिंडेग्निसंक्रांतिवत्बुद्धौदृशिसंक्रांतिर्विकारोभवेदित्यर्थः ॥ परिहरति ॥ मुखाभासवदिति॥ तदेतच्चोद्यमादर्शेमुखाभासवदितिदृष्टांतेनप्रबंधेननिराकृतमित्यर्थः ॥ यथामुखस्यादर्शेप्रतिबिंबितस्यतत्स्थत्वेनरूपेणमिथ्यात्वंतथाबुद्धौप्रतिबिंबितस्यचिदात्मनोबुद्धिधर्मत्वेनावभासो मृषेतिपूर्वमुक्तंसर्वमिहानुसंधेयमितिभावः ॥ ८५ ॥

**कृष्णायोलोहिताभासमित्येतदृष्टमुच्यते ॥ दृष्टदार्ष्टांततुल्यत्वं न तु सर्वात्मना क्वचित् ॥ ८६ ॥ ॥**

तर्हिकथंतत्प्रायोविस्फुलिंगदृष्टांतउक्तस्तत्रविकारप्रसिद्धेर्दा ष्टांतिकाननुरूपत्वादित्याशंक्यविवक्षितांशस्येहापिसंभवान्मै वमित्याह ॥ कृष्णवर्णमयोलोहिताभासंलोहितवर्णमवभासइ त्येतदेतावदेवदृष्टंदृष्टांतउच्यते ॥ जडायाबुद्धेःचैतन्याभासत्व मित्यर्थः ॥ सर्वांशसाम्यमनुपपन्नमित्याह ॥दृष्टदार्ष्टांतेति ॥ अ प्रकाशाद्यात्मनोमुखादेश्चंद्रादिदृष्टांताभावप्रसंगादितिभावः८६

**तथैव चेतनाभासं चित्तं चैतन्यव द्भवेत् ॥ मुखाभासो यथादर्शे आ भासश्चोदितो मृषा ॥ ८७ ॥ ॥**

दृष्टांतेविविक्षितमंशमुक्त्वादार्ष्टांतिकेपितथाविधमंशंदर्शयति ॥तथैवेति॥ चेतनायाआभासोयस्मिंस्तच्चेतनाभासंचित्तंचैतन्य वच्चेतनमिवभवेत्सचाभासोयथादर्शेमुखाभासोऽविकृतएवमेवे हापिद्रष्टव्यः ॥ आभासश्चोपाधिस्थतयादृश्यमानोमृषामिथ्ये त्युदितउक्तएवेत्यर्थः ॥ ८७ ॥

**चित्तं चेतनमित्येतच्छास्त्रयुक्तिवि वर्जितं ॥ देहस्यापि प्रसंगः स्याच्च क्षुरादेस्तथैव च ॥ ८८ ॥**

कस्माच्चिदाभासव्याप्त्याचित्तस्यचेतनतावभासोभ्युपगम्य तेनस्वतइतिशंकानकार्यातत्रप्रमाणन्याययोरभावादित्याह॥चि त्तमिति॥ उत्पत्तिविनाशवत्तयान्यदृश्यस्यापिचित्तस्यचेच्चेतनता स्वभावः स्यात्तदातिप्रसंगश्चदुष्परिहरइत्याह ॥ देहस्येति॥८८

तदप्यस्त्विति चेत्तन्न लोकायति
कसंगतेः ॥ न च धीर्दृशिरस्मीति
यद्याभासो न चेतसि ॥ ८९ ॥

इष्टापत्तिमाशंक्यपरिहरति ॥ तदपीति ॥ अवैदिकत्वप्रसंगादित्यर्थः ॥ किंचाभासानभ्युपगमेद्वाराभावादहंब्रह्मास्मीति आगंतुकंवाक्यजन्यमैक्यज्ञानंनासिद्ध्येदित्याह ॥ नचधीरिति चेतसियद्याभासोनभवेत्तदादृशिर्ब्रह्मास्मीतिधीर्नभवेत्केवलस्य चित्तस्यजडत्वाच्चिन्मात्रस्यचकूटस्थत्वादित्यर्थः ॥ ८९ ॥

सदस्मीति धियोभावे व्यर्थं स्या
त्तत्त्वमस्यपि॥युष्मदस्मद्विभागज्ञे
स्यादर्थवदिदं वचः ॥ ९० ॥

ब्रह्मास्मीतिधियोऽभावेकाक्षतिरित्यतआह ॥ सदस्मीति ॥ अप्यवधारणार्थः ॥ तत्त्वमसिवाक्यमैक्यग्राहकमुक्तधियोऽभावेऽव्यर्थमेवाप्रमाणमेवस्यादित्यर्थः ॥ अस्तुवैयर्थ्यंतद्वाक्यश्रोतॄणांसर्वेषांझटितिब्रह्मास्मीतिबुध्युत्पत्त्यदर्शनादित्याशंक्याह ॥ युष्मदस्मदिति ॥ अधिकारिणःप्रमितिजनकोवेदइतिन्यायात्सम्यक्पदार्थविज्ञानवतएववाक्यार्थबोधेधिकारादात्मानात्मविभागज्ञानवत्येवपुंसीदंवाक्यमर्थवन्नसर्वान्प्रतिझटितीत्यर्थः॥

ममेदं प्रत्ययौ ज्ञेयौ युष्मद्येव न सं
शयः ॥ अहमित्यस्मदीष्टः स्यादय
मस्मीति चोभयोः ॥ ९१ ॥

तमेवयुष्मदस्माद्विवेकंदर्शयितुमुपक्रमते ॥ ममेदामित्यादिना ॥ इदंपुत्रादिममेतिचप्रत्ययौयुष्मद्यनात्मन्येवज्ञेयौपुत्रादिबाह्यार्थस्यदेहाध्यासप्रणालिकयैवास्मदर्थेप्रवेशाद्बाह्यार्थसंबंधोप्यनात्मधर्मएवेतियुक्तमुक्तंममेदमितिप्रत्ययौयुष्मद्येवेतिनसंशयइतिसर्वत्रानुषज्जते ॥ अहमितिप्रत्ययआभासद्वारात्मभूतेऽव्यावहारिकेऽस्मद्यात्मनिअहंकर्तरीष्टःस्यादहमित्येवोल्लेखदर्शनात् ॥ अयंदेहादिरस्मीतिचोभयोरात्मानात्मनोःप्रत्ययइत्यर्थः ॥ ९१ ॥

**अन्योन्यापेक्षया तेषां प्रधानगुणतेष्यते ॥ विशेषणविशेष्यत्वं तथा ग्राह्यं हि युक्तितः ॥ ९२ ॥**

आत्मानात्मविषयाणांप्रत्ययानांसंकीर्णतयाऽसंकीर्णतयाचविषयानुक्त्वोक्तविवेकसिध्यर्थंतेषांगुणप्रधानभावेनाविशेषणविशेष्यभावोग्राह्यइत्याह ॥ अन्योन्येति ॥ स्पष्टम् ॥ ९२ ॥

**ममेदं द्वयमप्येतन्मध्यमस्य विशेषणं ॥ धनी गोमान्यथा तद्वद्देहोहं कर्तुरेव च ॥ ९३ ॥**

विशेषणविशेष्यत्वंयुक्तितोग्राह्यमित्युक्तमेवविविच्यदर्शयति ॥ ममेदंद्वयमिति ॥ मध्यमस्यपूर्वश्लोकेमध्येनिर्दिष्टस्यास्मदर्थस्यात्मनोविशेषणमिदंममेतिचद्वयंमनुष्योहमितिप्रत्ययापेक्षयेत्यर्थः ॥ तत्रोदाहरणं धनीगोमान्यथेति ॥ यथाधनादीदंत्वास्पदंसद्देहापेक्षयाममत्वास्पदमहंकर्तुःसिद्धंतद्वत्स्थूलोदेहो

ऽहंकर्तुरात्मनोबाह्यधनाद्यपेक्ष्याहंत्वास्पदतयाविशेषणमेवेत्य र्थः ॥ चकारादात्मनोपिसोहंज्ञातेत्याद्युल्लेखेस्थूलदेहमपेक्ष्यप्र धानभूतोप्यहंकर्ताविशेषणमितियोज्यं ॥ ९३ ॥

बुद्ध्यारूढं सदा सर्वं साहं कर्त्ता च
साक्षिणः॥ तस्मात्सर्वावभासो ज्ञः
किंचिदप्यस्पृशन्सदा ॥ ९४ ॥

एतत्सर्वंयदधीनसत्ताप्रकाशकंतत्रारोपितंसत्तस्यसदाविशे षणंभवेदपितेनसाक्षिणानसंस्पृशतइत्यादिषुयोनिरपेक्षसिद्धः सशुद्धआत्मेतियुष्मदस्मद्विभागज्ञस्यभवेदेववाक्याद्वाक्यार्थ ज्ञानमितिप्रमाणमेववेदांतवाक्यमित्यभिप्रेत्योपसंहरति ॥ बु द्ध्यारूढमिति ॥बुद्ध्यारूढंबुद्धिवृत्तिक्रोडीकृतंसर्वंदेहतत्संबंधि विषयजातंसाक्षिणोविशेषणंगुणभूतमितियोजना ॥ नकेवल मेतावत्किंचसाहंकर्त्ताअहंकर्त्रासाभासमनसासहितःसूक्ष्मोपि संघातः साक्षिणोविशेषणंतस्मिन्नध्यस्ततयातदवभास्यत्वादि त्यर्थः ॥ यस्मादेवंपरमार्थतःकिंचिदप्यस्पृशन्सदासर्वंसाभा सद्वारावभासयतीतिसर्वावभासस्तस्माज्ज्ञोज्ञानस्वरूपएवस दात्मेतिविवेकोयुक्तइत्यर्थः ॥ ९४ ॥

प्रतिलोमामिदं सर्वं यथोक्तं लोकबु
द्धितः ॥ अविवेकधियामस्ति ना
स्ति सर्वं विवेकिनां ॥ ९५ ॥

एषविवेकिनांमार्गोविपरीतंत्वविवेकिनांक्षेत्रादावप्यात्मनो विशेषणत्वप्रतीतेरित्याहप्रतिलोममिति ॥ बाह्यार्थोपहतचे

तालोकस्तस्यबुद्धिर्लोकबुद्धितस्याइतिबाह्यार्थसत्त्वप्रधानंलो
कबुद्धिमपेक्ष्येतियावत् ॥ तथाचबाह्यार्थंप्रधानीकृत्ययदिदंय
थोक्तविशेषणविशेष्यादिसर्वंप्रतिलोममनात्मभूतंतदविवेकधि
यांविवेकज्ञानशून्यानांदृष्टयास्तिवर्ततेविवेकिनांतुदृष्टयासर्वमे
तद्विशेषणादिकंदृश्यरूपंनास्तिनवर्ततेऽतोविवेकिनांबुद्धिमात्म
न्यवतारयितुंविशेषणविशेष्यादिप्रबंधकल्पनायथाप्रतीतिसत्ता
मादायक्रियतेऽध्यारोपापवादन्यायेनेतिभावः ॥९५ ॥

**अन्वयव्यतिरेकौ हि पदार्थस्य प
दस्य च ॥ स्यादेतदहमित्यत्र यु
क्तिरेवावधारणे ॥ ९६ ॥**

नन्वन्वयव्यतिरेकाभ्यामेवसर्वसंसारविनिर्मुक्तात्मावगमा
त्किंवाक्येनेत्याशंक्याह॥अन्वयव्यतिरेकौहीति॥ पदार्थस्या
न्वयव्यतिरेकौनाम आत्मपदार्थोद्रष्टासाक्षीनकदापिदृश्यःसा
क्ष्योवाभवतितस्यालुप्तप्रकाशसन्मात्रतयास्वतःसिद्धत्वादतोऽ
नन्याश्रयत्वान्नकदापिकस्यापिविशेषणमात्मातथायद्दृश्यंसाक्ष्यं
चाहंकारादिविषयांतंतदन्याधीनप्रकाशसत्ताकतयान्याश्रयंस
त्सदाविशेषणभावंनव्यभिचरतितस्मादनागमापायिदृगात्मरू
पंसत्यंशुक्त्यादिवत्तद्विपरीतमसत्यंरजतादिवदित्यनृतजडपरि
छिन्नपराधीनपरागर्थव्यावृत्तःसत्यज्ञानानंतप्रत्यगानंदरूपआ
त्मेतिविवेचनंपदस्यान्वयव्यतिरेकौनाम आत्माचैतन्यंप्रज्ञानंब्र
ह्मसदित्यादिपदानिकर्मेत्याद्युपपदविधुराणिकेवलस्यैवात्मनः
समर्पकाणिनविशेषणतद्विशिष्टविषयाणिअसामर्थ्यात्कर्ताभो
क्ताज्ञाताद्रष्टाश्रोतावक्तागंताकृशःस्थूलइत्यादीनितुनकेवलपू

र्णात्मविषयाणि अन्याधीनक्रियाद्युपरागदशायामेवप्रयुज्यमान त्वादितिविवेचनंएवंपदस्यपदार्थस्यवाऽन्वयव्यतिरेकावितियदे तदहमित्यत्रास्मदर्थविषयेऽवधारणेयुक्तिरेवस्याद्विवेकावधार णोपायमात्रंस्यान्नतुवाक्यार्थेपदार्थैक्येव्यापारोऽस्येत्यर्थः ॥ तस्मादेतावतापिविवेकेनदेहादिवैलक्षण्येऽवधारितेपिकोहंतर्ही तिजिज्ञासायाअनुवृत्तेस्तत्त्वमसीतिवाक्यंजिज्ञासितस्वरूप विशेषसमर्पकमवश्यमपेक्षितव्यमेवेतिभावः ॥ ९६ ॥

**नाद्राक्षमहमित्यस्मिन् सुषुप्तेन्य न्मनागपि ॥ न वारयति दृष्टिं स्वां प्रत्ययं तु निषेधति ॥ ९७ ॥**

किंचावस्थात्रयंपरस्परव्यभिचारिचैतन्यात्मातुनकदापिव्य भिचारीतिप्रकारांतरेणात्मानात्मविवेकंदर्शयति ॥ नाद्राक्षमि ति ॥ अस्मिन्सुषुप्तेत्रात्मनिअत्रस्थानेवामनागपिईषदप्यन्यदा त्मस्वरूपातिरिक्तमहंनाद्राक्षंनदृष्टवानस्मीतिपरामृशन् जनोन स्वांस्वात्मनोदृष्टिंचैतन्यंवारयतिप्रत्ययंतुपुनर्निषेधतिप्रतीयतइ तिप्रत्ययइतिव्युत्पत्याप्रमातृप्रमाणप्रमेयादिरूपः सर्वएवविशे षोगृह्यते तस्मात्परस्परव्यभिचारितयादृष्टनष्टस्वभावाभ्योऽव स्थाभ्योमिथ्याभूताभ्योव्यभिचारीचिद्रूपःसाक्षीसत्यआत्मेति विवेकःसिध्यतीत्यर्थः ॥ ९७ ॥

**स्वयंज्योतिर्न हि द्रष्टुरित्येवं संवि दोस्तितां ॥ कौटस्थ्यं च तथा त स्याः प्रत्ययस्य तु लुप्ततां ॥ स्वय**

मेवाब्रवीच्छास्त्रं प्रत्ययावगती पृथक् ॥ ९८ ॥

एवमुक्तावन्वयव्यतिरेकौशास्त्रसंमतौनस्वबुध्युत्प्रेक्षामात्रकृताविति विश्वासायशास्त्रमुदाहरति ॥ स्वयंज्योतिरितिसार्धेन ॥ अत्रायंपुरुषः स्वयंज्योतिः नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यत इत्येवमादिशास्त्रंसंविदश्चेतनायाअस्तितांसद्भावंतस्याः संविदः कौटस्थ्यंनिर्विकारतांचस्वयमेवाब्रवीदितिसंबंधः ॥ तथाप्रत्ययस्यप्रमात्रादिभेदस्यलुप्ततामसत्तांचनतुतद्वितीयमस्तिततोन्यद्विभक्तमित्यादिशास्त्रंस्वयमेवाब्रवीदितिपुनरेवान्वयः ॥ एवंप्रत्ययावगतीपृथगसंकीर्णेशास्त्रेणैवविवेचितेइतिशेषः ॥ प्रत्ययो व्याख्यातः ॥ अवगतिश्चैतन्यम् ॥ ९८ ॥

एवं विज्ञातवाक्यार्थे श्रुतिलोकप्रसिद्धितः ॥ श्रुतिस्तत्त्वमसीत्याह श्रोतुर्मोहापनुत्तये ॥ ९९ ॥

एवमवांतरवाक्यकृतंयुष्मदस्मद्विवेकमुपपत्तितउक्त्वाविज्ञातपदार्थतत्त्वेपुरुषेमहावाक्यंफलवद्विज्ञानंजनयतीत्याह ॥ एवमिति ॥ एवमुक्तप्रकारेणश्रुतिप्रसिद्धितोलोकप्रसिद्धितोऽन्वयव्यतिरेकतश्चविज्ञातावांतरवाक्यार्थेपुंसिसतिमहावाक्यात्मिकाश्रुतिःश्रोतुर्जिज्ञासोर्मोहापनुत्तयेसकार्याविद्यानिवृत्तिप्रयोजनायतत्सदाख्यंब्रह्मत्वमसीत्याहोपदिशतीत्यर्थः ॥ ९९ ॥

ब्रह्मा दाशरथेर्यद्वदुक्त्यैवापानुदत्त

मः ॥ तस्य विष्णुत्वसंबोधे न
यत्नान्तरमूचिवान् ॥ १००॥

वाक्यश्रवणमात्रान्मोहापोहेदृष्टांतंपुराणसिद्धमाह ॥ ब्रह्मेति ॥ दाशरथिनारामेणदेवकार्यसिद्धयेमनुष्यावतारनाट्येनस्वमहात्म्याच्छादनंसंकल्पपूर्वकंयत्कृतंतदिहतमःशब्देनोच्यते ॥ नत्वीश्वरस्यसंमोहःसंभवति ॥ तदुक्तंसंक्षेपशारीरके ॥ संकल्पपूर्वकमभूद्रघुनंदनस्यनाहंविजानइतिकंचनकालमेतत् ॥ ब्रह्मोपदेशमुपलभ्यनिमित्तमात्रंतच्चोत्ससर्जसकृतेसातिदेवकार्यइति हेरामत्वंविष्णुरसिनदशरथपुत्रमात्रइत्युक्त्यैवब्रह्मादाशरथेःसंकल्पमात्रकृतंतमोविष्णुत्वाच्छादनरूपमपानुदत् ॥ एवकारार्थमाह ॥ तस्येति ॥ यत्नांतरंवाक्योपदेशग्रहणातिरिक्तमित्यर्थः ॥१००॥

अहंशब्दस्य निष्ठाया ज्योतिषिप्र
त्यगात्मनि ॥ सैवोक्ता सदसीत्ये
वंफलं तत्र विमुक्तता ॥ १ ॥

दार्ष्टांतिकमाह ॥ अहंशब्दस्येति ॥ एवंशब्दःप्रथमंयोज्यः यथायंदृष्टांतएवंसदसीतिवाक्येनसानिष्ठोक्तैवकेवलंनानुष्ठापितेतियोजना ॥ साकानिष्ठेतितामाह ॥अहंशब्दस्येति ॥ प्रत्यगात्मनिपरागर्थेभ्योव्यावृत्तेशोधितेआत्मनिनिरुपाधिकेज्योतिषिसाक्षिस्वप्रकाशस्वभावेअहंशब्दस्ययानिष्ठालक्षणयापर्यवसितावृत्तिःसैवेत्यर्थः ॥ तत्रत्वंतदसीत्युपदेशमात्रादहंसत्ब्रह्मास्मीतिवाक्यार्थज्ञानोदयमात्रेसातिविमुक्ततामोहापोहरूपाफ

लंभवतीत्यर्थः ॥ यद्वा दृष्टांतस्यदार्ष्टांतिकमेवविज्ञातवाक्यार्थ इतिपूर्वश्लोकएवस्थितंद्रष्टव्यं अयंत्वन्यथोत्थाप्यते ननुदाशरथेर्भवेदेवविष्णुत्वोपदेशमात्राद्विष्णुरहमस्मीतिझटितिबोधोदयस्तस्यमहामहिमसंपन्नत्वात्कथमिदानींतनस्यकर्त्ताभोक्तेत्यादिप्रत्यक्षाभिमतमिथ्याप्रत्ययगृहीतस्योपदेशमात्रादहंब्रह्मास्मीतिनिर्विचिकित्संज्ञानंसंभाव्यतइत्याशंक्याशोधिततत्वंपदार्थस्यपुंसःकर्तादिसाक्षिणएवाहमादिशब्दलक्षितस्यब्रह्मत्वोपदेशान्नानुपपत्तिरत्रापीतिपरिहरति ॥ अहंशब्दस्येति ॥ सदसीत्येवंवाक्येनसैवनिष्ठोक्तेतिसंबंधः ॥ अन्यत्समानं ॥ १ ॥

**श्रुतमात्रेण चेन्न स्यात्कार्यं तत्र भवेद्ध्रुवं ॥ व्यवहारात्पुरापीष्टः सद्भावः स्वयमात्मनः ॥ २ ॥**

एवमवगतपदार्थतत्त्वस्यवाक्यादेवसमूलसंसारनिवृत्तिफलंज्ञानंजायतएवेतिस्थितेश्रुतेःप्रामाण्यसिद्ध्यर्थंकार्यपरत्वंकल्प्यामित्याग्रहोनिरर्थकोविद्वदनुभवविरोधादित्यभिप्रेत्याह ॥ श्रुतमात्रेणेति ॥ यथोक्तन्यायेनवाक्यस्यश्रुतमात्रेणचेदुक्तफलंविज्ञानंनस्यात्तत्रतदाकार्यंकल्प्यंध्रुवमवश्यंभवेदन्यथाऽर्थवादादिवाक्यवत्स्वार्थेप्रामाण्यानुपपत्तेः इहतुनतथाकल्प्यमस्तिफलस्यसद्यएवानुभवसिद्धत्वादित्यर्थः ॥ स्वयंज्योतिर्नहिर्द्रष्टुरितिश्लोकेपूर्वमर्द्धश्लोकोऽधिकःस्थितइहवापमर्धएवश्लोकइतिसहगणनीयं किंचसिद्धेब्रह्मात्मनिशास्त्रस्याप्रामाण्यंनामविपर्यासलक्षणंवानिष्फलत्वंवासंशयलक्षणंवाऽनुत्पत्तिलक्षणंचेतिविकल्पान्क्रमेणदूषयति ॥ व्यवहारादित्यादिना ॥ नाद्यः यस्मा

व्यवहारादहंब्रह्मास्मीतिशास्त्रोपदेशव्यवहारात्पुरापूर्वमप्यात्म
नःस्वयमेवसद्भावइष्टोबाधकाभावात्तस्माद्यथावस्थितात्मस्वरू
पस्यैवश्रुत्यानिवेदनान्नशुक्तिरूप्यज्ञानवदप्रामाण्यमित्यर्थः २

**अशनायादिनिर्मुक्त्यै तत्काला जा
यते प्रमा ॥ तत्त्वमस्यादिवाक्या
र्थे त्रिषु कालेष्व्यसंशयः ॥ ३ ॥**

नद्वितीयोनुभवविरोधादित्याह ॥ अशनायादीति ॥ तत्का
लाऽऽप्तवाक्यश्रवणकालएवकालोयस्याः सातत्कालाप्रमा ॥
अशनायाद्युपलक्षितसंसारस्यनिर्मुक्त्यैनिवृत्त्यर्थंजायते विदु
षांप्रत्यक्षमेवैतदित्यतोननिष्फलत्वशंकावकाशइत्यर्थः ॥ तृती
यमप्यनुभवविरोधेननिराकरोति ॥ तत्त्वमसीति ॥ असंश
यःसंशयोनास्तीत्यर्थः ॥ ३ ॥

**प्रतिबंधविहीनत्वात्स्वयं चानुभ
वात्मनः ॥ जायेतैव प्रमा तत्र स्वा
त्मन्येव न संशयः ॥ ४ ॥ ॥ ७ ॥**

चतुर्थंप्रत्याह ॥ प्रतिबंधेति ॥ पदार्थाज्ञानंहिवाक्यार्थज्ञानो
त्पत्तिप्रतिबंधस्तद्विहीनत्वादवगतपदार्थस्यपुंसस्तत्रतस्मिन्नेव
वाक्यश्रवणकालेआत्मन्येवप्रमाजायेतैवनसंशयइतियोजना
॥ आकाशपुष्पमस्तीत्यादिवाक्यार्थवदनुभवायोग्यार्थत्वशंकां
वारयति ॥ स्वयंचेति ॥ अनुभवस्वरूपत्वात्स्वयमात्मनःप्र
त्याख्यातुमशक्यत्वादित्यर्थः ॥ अतोहुंफडादिशब्दवदनुत्पत्ति

लक्षणमप्यप्रामाण्यंनास्तीतिसिद्धं सिद्धेब्रह्मात्मनिवाक्यस्यप्रा
माण्यमित्यर्थः ॥ ४ ॥

किं सदेवाहमस्मीति किंवान्यत्प्र
तिपद्यते॥ सदेव चेदहंशब्दः सता मु
ख्यार्थ इष्यताम् ॥ ५ ॥

एवंप्रमाणस्वरूपनिरूपणेनाहंब्रह्मास्मीतिज्ञानमुपपाद्येदा
नींप्रतिपत्तव्यार्थस्वभावनिरूपणेनापितदुपपादयितुंविकल्पय
ति ॥ किंसदेवेति ॥ तत्त्वमसीतिवाक्यश्रवणसमनंतरंप्रतिप
त्तावहमस्मीतिकिंसदेवप्रतिपद्यतेकिंवान्यदितिविकल्पार्थः ॥
आद्यमनूद्यतत्रपरस्यानिष्टापत्तिरित्याह ॥ सदेवचेदिति ॥ स
तासच्छब्दार्थेनाहंशब्दोमुख्यार्थइष्यतां ॥ तदासच्छब्दाहंश
ब्दयोरेकार्थपर्यवसानादैक्यात्म्यमेववाक्यार्थोनसंसर्गइत्यप
रोक्षज्ञानसिद्धिरित्यर्थः ॥ ५ ॥

अन्यच्चेत्सदहं ग्राह्यप्रतिपत्तिर्मृषैव
सा ॥ तस्मान्मुख्यग्रहे नास्ति वा
रणावगतेरिह ॥ ६ ॥ ॥ ॥

द्वितीयेदोषमाह ॥ अन्यच्चेदिति ॥ प्रत्यगात्मनोन्यच्चेत्सत्त
दाहंग्राह्यप्रतिपत्तिर्मृषैवसाभवेत्संपदादिज्ञानवत् ॥ तत्रवाक्य
स्याप्रामाण्यमेवप्रसज्येतेत्यर्थः ॥ प्रमाणप्रमेयस्वभावपर्यालो
चनयावाक्यादेवापरोक्षफलवदात्मतत्त्वविज्ञानमुत्पद्यतइत्युप
पन्नमित्युपसंहरति ॥ तस्मादिति ॥ इहवाक्येमुख्यग्रहेसति
अवगतेर्यथार्थानुभवस्यवारणानिवारणंनास्तीत्यर्थः ॥ ६ ॥

प्रत्ययी प्रत्ययश्चैव यदाभासौ त
दर्थता ॥ तयोरचितिमत्त्वाच्च चैत
न्ये कल्प्यते फलम् ॥ ७ ॥ ॥

नन्वात्मनःकूटस्थत्वेनप्रतिपत्तृत्वानुपपत्तौफलसंबंधोनोपपद्यतइत्यस्त्यात्मग्रहेनिवारणेत्याशंक्याह ॥ प्रत्ययीति ॥ प्रत्ययीपरिणाम्यंतःकरणंतत्परिणामश्च यदाभासौ यस्यचिदात्मन आभासोययोस्तौयदाभासौतयोस्तदर्थतातच्छेषभूततेतियावत् तस्मिंश्चैतन्येचिदात्मनितदाभासद्वाराफलंकल्प्यते किंच तयोः प्रत्ययिप्रत्ययपयोरचितिमत्त्वाज्जडत्वादपिफलसंबंधायोगात्फलस्यात्मसंबंधःस्यादित्यर्थः ॥ ७ ॥

कूटस्थेपि फलं योग्यं राजनीव ज
यादिकं ॥ तदनात्मत्वहेतुभ्यां कि
यायाः प्रत्ययस्य च ॥ ८ ॥ ॥

निर्व्यापारस्यापिफलसंबंधेदृष्टांतमाह ॥ कूटस्थइति ॥ ननुराजतद्भृत्ययोःस्वस्वामिभावसंबंधोस्ति राजनिजयादिसंबंधनिमित्तमिहत्वध्यक्षाध्यक्षयोस्तादृशस्यादर्शनात्कथमयंदृष्टांतः प्रकृतेसंगतःस्यादित्याशंक्यात्राप्यस्त्यधिष्ठानाधिष्ठेयभावः फलसंबंधहेतुरित्याह ॥ तदिति ॥ हेतुभ्यामित्यत्रहेतुत्वाभ्यामितिभावप्रधानतायोज्या क्रियाहमात्मिकावृत्तिःप्रत्यर्थमयतीतिव्युत्पत्तेः प्रत्ययोंतःकरणसाभासमुच्यते साभासवृत्तिवृत्तिमतोरितियावत् ॥ आत्मत्वंचहेतुत्वंचात्महेतुत्वेतस्यफलस्यन

आत्मत्वहेतुत्वेतदनात्महेतुत्वेताभ्यांतदनात्मत्वहेतुत्वाभ्यामितियोजना ॥ तथाचक्रियाप्रत्यययोर्जडयोः फलस्वरूपत्वाभावात्फलोपादानत्वाभावाच्चतद्व्यापारनिबंधनंफलंतदाधिष्ठानएव निर्व्यापारेऽपिकूटस्थेयोग्यमित्यास्तिदृष्टांतदार्ष्टांतिकसंगतिरित्यर्थः ॥ ८ ॥

**आदर्शस्तु यदाभासो मुखाकारः स एव सः ॥ यथैवं प्रत्ययादर्शो यदाभासस्तदा त्वहं ॥ ९ ॥ ॥**

शुद्धस्यात्मनाप्रमातृत्वंनास्तीत्यभिप्रेत्येदंविशिष्टप्रमातृकृतं फलंकूटस्थेउपचर्यतइतिराजदृष्टांतेनोक्तंवस्तुतस्तुचित्प्रतिबिंबस्यैवस्वोपाधिव्यापारेणस्वात्मन्यध्यस्तेनविद्यतएवप्रमातृत्वमितिचिदात्मनएवाविकृतस्यप्रतिबिंबभावनिबंधनः फलसम्बन्ध इतिसदृष्टांतमाह ॥ आदर्शस्त्विति ॥ येनमुखाकारेणाविशिष्टतयाआभासतइतियदाभासःसन्नादर्शोमुखाकारः ॥ सएवग्रीवास्थएवसनततोन्योयथाबिंबप्रतिबिंबयोरैक्यंलोकेप्रसिद्धमित्यर्थः ॥ एवंप्रत्ययादर्शोहंकारोयदाभासोयेनचित्प्रतिबिंबेनआभास्यतइतियदाभासः सचित्प्रतिबिंबपरमात्मैवनततोन्योहंकारेहमवभासगोचरस्तथासत्यहंब्रह्मेतिवाक्यार्थधीर्घटतेऽध्यस्तांशापोहमात्रेणविनानात्मनःकर्मत्वमित्यर्थः ॥ ९ ॥

**इत्येवं प्रतिपत्तिः स्यात्सदस्मीति च नान्यथा ॥ तत्त्वमित्युपदेशोपि द्वाराभावादनर्थकः ॥ १० ॥**

अयमेवपक्षआदरणीयइत्याह ॥ इत्येवमिति ॥ एवंसति चिदाभासाभ्युपगमेसतिसदहमस्मि चकारादहंसदस्मीत्येवमाकाराप्रतिपत्तिःस्यान्नान्यथा आत्मनएववाहंकारस्यैववाप्रमातृत्वाभ्युपगमेइतियतोतोयमेवमार्गोऽनिच्छद्भिरप्यादरणीय इति योजना ॥ एवमनभ्युपगमेनकेवलंप्रतिपत्त्यनुपपत्तिरपितूपदेशस्याप्यनुपपत्तिरित्याह तत्त्वमिति ॥ त्वमर्थोऽनुवादद्वारेणहितदर्थभावउपदेष्टव्यस्तत्रानूद्यमानस्यचित्प्रतिबिंबस्याभावोतदर्थोपदेशोनिरालंबनोऽनर्थकःस्यादित्येतदाहद्वाराभावादिति१०

श्रोतुः स्यादुपदेशश्चेदर्थवत्त्वं तथा भवेत् ॥ अध्यक्षस्य न चेदिष्टं श्रोतृत्वं कस्य तद्भवेत् ॥ ११ ॥

एतदेवविशदयति ॥ श्रोतुरिति ॥ तथासतीत्यर्थः ॥ तच्च श्रोतृत्वमध्यक्षादन्यत्रसंभवतीत्याह ॥ अध्यक्षस्येति ॥ नकस्यापीत्यर्थः ॥ ११ ॥

अध्यक्षस्य समीपे स्याद्बुद्धेरेवेति चेन्मतम् ॥ न तत्कृतोपकारोस्ति काष्ठाद्यद्वन्न कल्प्यते ॥ १२ ॥

यद्यप्यध्यक्षस्यनोपदेशस्तथापिनवैयर्थ्यमितिशंकते ॥ अध्यक्षस्येति ॥ तत्रबुद्धेःश्रोतृत्वंकिमध्यक्षसन्निधिसत्तामात्रापेक्षमाहोस्वित्तत्कृतोपकारापेक्षमितिविकल्प्याद्यंप्रत्याह ॥ नतदिति ॥ तत्कृतःसन्निहिताध्यक्षकृतउपकारोऽतिशयोबुद्धेर्नास्त्ये

व यद्वत्काष्ठादिंधनादेः संनिहिताद्बुद्धावतिशयोनकल्प्यते तद्वदि त्यर्थः ॥ १२ ॥

**बुद्धौ चेत्तत्कृतः कश्चिन्नन्वेवं परि णामिता ॥ आभासेपि च को दो षः सति श्रुत्याद्यनुग्रहे ॥ १३ ॥**

द्वितीयमुत्थाप्यदूषयाति ॥ बुद्धौचेदिति ॥ एवंसतिआ भासानभ्युपगमेऽध्यक्षस्यपरिणामितानुनिश्चितंप्रसज्येतेत्य र्थः ॥ अतोरूपंरूपंप्रतिरूपोबभूव ॥ एकधाबहुधाचैववदृश्य तेजलचंद्रवदित्यादिश्रुतिस्मृत्यनुगृहीतआभासपक्षोनिर्दुष्टउ पादेयइत्यभिप्रेत्याहआभासोपिचेति यद्वाऽस्तुपरिणामिताध्यक्ष स्येतिचेत्तर्ह्याभासेपिचप्रमाणसिद्धेऽभ्युपगम्यमानेतवकोदोषोभ विष्यतीत्याह ॥ आभासेपीति ॥ १३ ॥

**आभासेपरिणामश्चेन्नरज्ज्वादिनि भत्ववत् ॥ सर्पादेश्च तथावोचमा दर्शे च मुखत्ववत् ॥ १४ ॥ ॥**

आभासपक्षेचिदात्मनःपरिणामप्रसंगाभाववंवक्तुंशंकामुत्थाप यति ॥ आभासेपरिणामश्चेदिति ॥ नैवमाभासस्यमृषात्वोप पत्तेरितिपरिहारमाह॥नरज्ज्वादीति॥ रज्ज्वज्ञानकल्पितस्यस र्पादेरज्जुनिभत्ववदनिदमात्मकस्यरजतादेरिदमात्मकत्ववच्च चिदात्माज्ञानकल्पितस्यबुद्ध्यादेर्मृषैवाचिन्निभत्वंचकारादभो क्तृस्वरूपस्यात्मनोभोक्तृत्वाभासोमृषैवेतिसूच्यते॥ यथैवंमृषा

त्वंतथापूर्वमवोचमादर्शेचमुखत्ववन्मुखाकारत्ववदितिदृष्टांतम णयनेनेत्यर्थः ॥ चकारान्मुखस्येवात्मनोऽविकृतत्वमप्यवोच मित्यर्थः ॥ १४ ॥

नात्माभासत्वसिद्धिश्चेदात्मनो ग्रह
णात्पृथक् ॥ मुखादेश्च पृथक्सिद्धि
रिह त्वन्योन्यसंश्रयः ॥ १५ ॥

अहंकृतेरेवात्मत्वमितिमन्यमानस्तस्यचिन्निभत्वमाक्षिप ति ॥ नात्मेति ॥ आत्मनःकेवलस्यग्रहणादवभासनात्पृथगेवा त्मभासत्वस्यसिद्धिश्चेन्नभवेदाभासावभासेनैवात्मभासोभवेत्त दाइहत्वस्मिन्मतेऽन्योन्यसंश्रयइतियोजना ॥ दृष्टांतश्चविषम इत्याह॥मुखादेरिति ॥दर्पणादिगताभासव्यतिरेकेणग्रीवास्थत्वे नमुखस्यसदासिद्धिरस्तीतिनतत्रान्योन्यसापेक्षतेत्यर्थः ॥१५॥

अध्यक्षस्यपृथक्सिद्धावाभासस्य
तदीयता ॥ आभासस्यतदीयत्वे
ह्यध्यक्षव्यतिरिक्तता ॥ १६ ॥

अन्योन्याश्रयमेवस्पष्टयाति ॥ अध्यक्षस्येति ॥ तथाचाह मितिप्रतीयमानोहंकृत्यात्मकएवचेतनआत्मेतियुक्तमित्यभि प्रायः ॥ १६ ॥

नैवं स्वप्ने पृथक्सिद्धेः प्रत्ययस्य दृ
शेस्तथा ॥ रथादेस्तत्र शून्यत्वात्प्र

त्ययस्यात्मना ग्रहः ॥ १७ ॥ ॥

अहंकृत्यात्मकस्यांतःकरणस्यस्वप्नेदृश्यत्वेनैवव्यवस्थितत्वात्तदाभासनिरपेक्षएवात्मातत्रासिद्धइतिनोक्तदृष्टांतासंगतिरितिपरिहरति ॥ नैवंस्वप्नइति प्रत्ययस्यांतःकरणस्यदृशेरात्मनश्चस्वप्नावस्थायांतथामुखतत्प्रतिबिंबवत्पृथगन्योन्यनिरपेक्षतयैवसिद्धेरित्यर्थः ॥ कुतएतदित्यपेक्षायामाह ॥ रथादेरिति ॥ नतत्ररथानरथयोगानपंथानोभवंतीत्यादिनास्वप्नेरथादिदृश्यराहित्यस्यश्रूयमाणत्वात्प्रत्ययस्यैवरथाद्याकारमापन्नस्यतत्रात्मनास्वप्रकाशचैतन्येनग्रहस्तथाचात्माप्रत्ययसंवलनविनिर्मुक्तः स्वप्रकाशतयाभासमानएवस्वप्नेविषयाकाराकारितप्रत्ययसाक्षीसिद्धइत्यर्थः ॥ १७ ॥

अवगत्या हि संव्याप्तः प्रत्ययो विषयाकृतिः ॥ जायते स यदाकारः स बाह्यो विषयो मतः ॥१८॥ ॥

स्वप्नपर्यालोचनयाचिदात्मनःप्रत्ययाद्विवेकंदर्शयित्वाजाग्रत्स्वभावालोचनयापितमाह ॥ अवगत्याहीत्यादिना ॥ विषयस्याकृतिरिवाकृतिर्यस्याथवाविषयस्याकृतिरेवाकृतिर्यस्यसविषयाकृतिरितिविग्रहः आत्मचैतन्यव्याप्तेविषयाकारेप्रत्ययेजायमानेतस्मिन्योविषयाकारः स बाह्योविषयइष्टइत्यर्थः॥१८॥

कर्मेप्सिततमत्वात्स तद्वान्कार्ये नियुज्यते ॥ आकारो यत्र चार्प्ये

त करणं तदिहोच्यते ॥ १९ ॥

किंच सबाह्योविषयईप्सिततमत्वात्कर्तुःसाध्यतयोद्देश्यत्वे नेष्टतमत्वात्कर्मभवतितद्वांस्तद्विषयेच्छावान्कार्येनियुज्यतेकुर्विति‌प्रेर्यतेयतइत्यध्याहारःआकारसमर्पकस्यकर्मकारकतयाविषयत्वमुक्त्वाप्रत्ययस्यकरणत्वमाह ॥ आकारोयत्रेति ॥ यत्रबुद्धिपरिणामेविषयेणआकारोऽर्प्यतेअर्प्यतेतादिह्वाविषयाभिव्यक्तीकरणमुच्यतेतत्तद्बाह्येंद्रियविशेषितातत्तदर्थाकाराबुद्धिवृत्तिर्विषयप्रमितिंप्रतिकरणमित्यर्थः ॥ १९ ॥

यदाभासेन संव्याप्तः संज्ञातेति निगद्यते ॥ त्रयमेतद्विविच्यात्र यो जानाति स आत्मवित् ॥ २० ॥

विषयकरणेव्युत्पाद्यकर्तारंव्युत्पादयति ॥ यदाभासेनेति ॥ यस्यचित्प्रतिबिंबस्याभासेनसंव्याप्तोहंकारःपरिणमतेसचिदात्मप्रतिबिंबोज्ञातेतिनिगद्यते कथ्यतेएवंसाक्ष्यंनिर्दिश्यततःसाक्षिणंपृथगुपलंभयति ॥ त्रयमिति ॥ एतत्त्रयंज्ञाताज्ञानंज्ञेयंचेतिविविच्यासाधारण्येनावगम्यात्रत्रयेपरस्परापेक्षसिद्धिकेआगमापायिनिवर्तमानं स्वतःसिद्धं तदवधिभूतमनागमापायिसाक्षिणंयोजानाति सम्यगवगच्छति सआत्मवित् त्वंपदलक्ष्यप्रत्यगात्मविदितियोजना ॥ तदुक्तंश्रीभागवते ॥ एकमेकतराभावेयदानोपलभामहे ॥ त्रितयंतत्रयोवेदसआत्मास्वाश्रयाश्रयइति ॥ २० ॥

सम्यक्संशयमिथ्योक्ताः प्रत्यया

व्यभिचारिण: ॥एकैवावगतिस्तेषु भेदस्तु प्रत्ययार्पित: ॥ २१ ॥

विवेकप्रकारमेवविशदयति ॥ सम्यगिति ॥ २१॥

आधिभेदाद्यथा भेदो मणेरवगते स्तथा ॥ अशुद्धिः परिणामश्च सर्वं प्रत्ययसंश्रयात् ॥ २२ ॥

भेदस्तुप्रत्ययार्पितइत्येतद्दृष्टांतेनस्पष्टयत्याधिभेदादिति ॥ मणेःस्फटिकादेःप्रत्ययसंश्रयादहंकारप्रतिबिंबकृताभाससंश्रयान्निमित्तादित्यर्थः ॥ २२ ॥

प्रथनं ग्रहणं सिद्धिः प्रत्ययानामिहान्यत: ॥ आपरोक्ष्यात्तदेवोक्तमनुमानं प्रदीपवत् ॥ २३ ॥

ननुग्राह्यग्रहणग्राहकातिरिक्तात्मसिद्धौकिंप्रमाणमुक्तमेतावताभवतीत्यपेक्षायांतदाह॥प्रथनमिति ॥प्रत्ययानांविषयाकाराणांजाग्रत्स्वप्नावस्थानांप्रथनंस्फुरणंग्रहणमुपादानंस्थितिर्वाव्यवहारोवासिद्धि:स्वरूपलाभश्चेहव्यवहारभूमौअन्यतोऽन्यस्मादापरोक्ष्यादपरोक्षस्वभावाद्भवितुमर्हति ॥ अचित्स्वभावत्वादचित्स्वभावत्वंचागमापायित्वात्प्रदीपवदित्येतदेवानुमानमिहोक्तमित्यर्थः॥ विमताः प्रत्ययाःस्वविलक्षणान्याधीनप्रथनग्रहणसिद्धिका अचित्स्वभावत्वात्प्रदीपादिवदितिप्रयोगः ॥ एवंसामा

न्यतोदृष्टानुमानेनात्रायंपुरुषःस्वयंज्योतिरात्मैवास्यज्योतिस्त
स्यभासासर्वमिदंविभातिइत्यादिश्रुतिप्रसिद्धस्वप्रकाशआत्मनि
संभावनादर्शितेतिद्रष्टव्यं ॥ २३ ॥

**किमन्यद् ग्राहयेत्कश्चित्प्रमाणेनतु केनचित् ॥ विनैव तु प्रमाणेन निवृत्त्यान्यस्य शेषतः ॥ २४ ॥**

एवमनुमानमात्मन्युपन्यस्यविधिमुखेनप्रमाणेनात्मसिद्धिरुक्तातत्रकेचिन्निषेधमुखेनैवप्रमाणेनात्मसिद्धिर्नविधिमुखेनापीतिमन्यंते ॥ तन्मतनिराकरणायविकल्पयति ॥ किमन्यदिति प्रथमस्तुशब्दएवकारार्थः॥द्वितीयस्तुवाशब्दार्थः ॥ किंकश्चिद्वादीकेनचित्प्रमाणेनैवदेहादिभ्योन्यदात्मतत्त्वंग्राहयेत्किंवाप्रमाणेनविनैवान्यस्यानिवृत्त्यापरिशेषितइतिविकल्पार्थः ॥ २४ ॥

**शब्देनैव प्रमाणेन निवृत्तिश्चेदिहोच्यते॥अध्यक्षस्याप्रसिद्धत्वाच्छून्यतैव प्रसज्यते ॥ २५ ॥**

प्रथमपक्षेविधिमुखेनैवप्रमाणप्रवृत्तिःसिध्यतीतीष्टहानिःस्पष्टेत्यभिप्रेत्यद्वितीयंप्रत्याह ॥ शब्देनैवेति ॥ शब्देनप्रमाणेनानात्मनिवृत्तिरेवचोदिहोच्यतेइतिसंबंधः ॥ तदाध्यक्षस्यअध्यक्षसद्भावस्य ।न्यतोऽप्रसिद्धत्वात्परिशेषासिद्धेः शून्यतैवावशिष्येतनात्मेत्यर्थः ॥ २५ ॥

चेतनस्त्वं कथं देह इतिं चेन्नाऽप्र
सिद्धितः ॥ चेतनस्यान्यतः सिद्धा
वेवं स्यादन्यहानतः ॥ २६ ॥

ननुचेतनाचेतनयोर्विरुद्धरूपत्वकथनेनान्यनिवृत्तिः शब्देन क्रियते तथाचाचेतनविरुद्धश्चेतनः परिशिष्यतइतिनशून्यता प्रसंगइत्याशंक्यपरिहरति ॥ चेतनस्त्वमिति ॥ अप्रसिद्धितोनैवमित्युक्तंसाधयतिचेतनस्येति ॥ अयमर्थः ॥ सिद्धेहिधर्मिणि प्रतियोगिनिचायमयंनभवतीतितादात्म्यनिषेधेनविरुद्धरूपत्वोपदेशःस्यान्नचाद्यापिचेतनपदार्थः पृथक्सिद्धइत्यनेनैवतत्साधनेऽन्योन्याश्रयः स्यादिति ॥ २६ ॥

अध्यक्षः स्वयमस्त्येव चेतनस्या
परोक्षतः ॥ तुल्य एवं प्रबोधःस्या
दन्यस्यासत्त्ववादिना ॥ २७ ॥

आत्मानात्यंतमप्रसिद्धस्तस्यस्वतःसिद्धत्वादित्याशंकते॥अध्यक्षइति ॥ चेतनस्यस्वतोऽपरोक्षत्वादित्यर्थः॥ दूषयति ॥ तुल्यइति ॥ एवंसत्यन्यस्यासत्त्ववादिनाशून्यवादिनातुल्यःसमः प्रबोधः स्याद्यथाशून्यवादिनः प्रमाणंविनास्वतःसिद्धंशून्यमात्मेतिनप्रबोधसिद्धिस्तथाऽध्यक्षस्यापितवेत्यर्थः ॥ २७ ॥

अहमज्ञासिषं चेदमिति लोकस्मृते
रिह ॥ करणं कर्म कर्त्ता च सि

द्वास्त्वेकक्षणे किल ॥ २८ ॥ ॥

इदानींस्मृतिबलेनस्वतःसिद्धाध्यक्षसिद्धिंशंकते ॥ अहम ज्ञासिषमिति ॥ अहमिदमज्ञासिषमितीहव्यवहारेलोकस्ययुगपत्स्मृतिदर्शनादननुभूतेस्मृत्यभावात्करणकर्मकर्तारस्त्रयोप्येकक्षणेप्राग्येनासिद्धाः सोस्त्यध्यक्षः स्वतः सिद्धइतिगम्यते किलेत्यनभिमतत्वद्योतनात्पूर्वपक्षताद्योतितेत्यर्थः ॥२८॥

प्रामाण्येपि स्मृतेःशैघ्याद्यौगपद्यं विभाव्यते ॥ क्रमेण ग्रहणं पूर्वं स्मृतेः पश्चात्तथैव च ॥२९॥ ॥

एतन्निराकरोति ॥ प्रामाण्येपीति ॥ स्मृतेःपूर्वानुभवगमकत्वेनप्रामाण्येपिनयुगपत्त्रितयसिद्धिगमकत्वंयतः पूर्वंक्रमेण कर्त्रादीनांग्रहणमभूत्तथैवचपश्चादुत्तरकालंस्मृतेः संभवोऽतः शैघ्यान्नैरंतर्येणाविलंबाद्यौगपद्यंविभाव्यतेमृषैवेत्यक्षरार्थः ॥ अर्थत्रयस्यैकस्मृत्यवभास्यत्वेनिश्चितेसत्येवंस्यान्नतुतन्निश्चेतुं शक्यतेयतोहमिदंजानामीतिक्रमेणव्यपदिश्यतेऽतोग्राह्यस्फुरणस्यग्राहकग्रहणाकारताऽसंभवात्तत्कालेतयोर्नभानंसंभवति ॥ एवंग्राहकस्यप्रतीचःस्फुरणसमयेग्राह्यस्यपराचोनास्तिस्फुरणंविरुद्धाकारद्वयस्यैकस्मिन्प्रमाणज्ञानेस्फुरणासंभवात्तथाज्ञानस्यापिविषयैकाकारत्वात्तत्स्फुरणेनज्ञातृस्फूर्त्तिरितिक्रमेणैव ज्ञात्रादिसिद्धिः प्रागुन्नेयातस्मादुत्पलपत्रशतभेदनयौगपद्याभिमानवद्युगपत्स्मृतिरित्यभिमानः शैघ्यनिबंधनइतिभावः ॥२९

अज्ञासिषमिदं मां चेत्यपेक्षा जाय

**ते ध्रुवं ॥ विशेषोपेक्ष्यते यत्र तत्र नैवैककालता ॥ ३० ॥**

स्मृतेर्यौगपद्याभावेकारणांतरमाह ॥ अज्ञासिषमिति ॥ इदमित्याकारोहिप्रत्यगपेक्षयोल्लिख्यतेतथामामितिपरागपेक्षयाधीर्जायते ॥ तथाचयत्रविशेषोन्यप्रतियोगिकोऽपेक्ष्यतेतत्रैककालतायौगपद्यंनैवघटतइत्यर्थः ॥ ३० ॥

**आत्मनो ग्रहणे चापि त्रयाणामिह संभवात् ॥ आत्मन्यासक्तकर्तृत्वं न स्यात्करणकर्मणोः ॥ ३१ ॥ ॥**

स्मृतेर्विषयतःस्वरूपतश्चयौगपद्यासंभवात्कर्त्रादिसिध्यैक्यानुमापकत्वानुपपत्तिरित्युक्तं संप्रतिकर्त्रादीनांयुगपदनुभवसाधनाभावादपिनयुगपत्तत्सिद्धिसंभावनेत्याह ॥ आत्मनइति ॥ अयमर्थः ॥ यथाविषयस्यग्रहणेकर्ताकरणंकर्मचेतित्रितयमपेक्षते ॥ एवंप्रत्येकंकर्त्रादिग्रहणेपित्रितयमपेक्षणीयंतथाचात्मनःप्रमातुश्चकारात्प्रमेयस्यप्रमाणज्ञानस्यचग्रहणेपित्रयाणांकर्त्रादीनामिहापेक्षासंभवात्तत्तत्कर्त्रादिस्फुरणमंतरेणतत्तदर्थस्यतदनुभूतत्वानियमासिद्धेः कर्त्राद्यनवस्थाप्रसज्येतेत्यर्थः ॥ तैरेवकर्त्रादिभिः स्वस्वरूपसिद्धिसंभवात् किमित्यनवस्थेति शंकांवारयत्यात्मनीति ॥ आत्मन्येकस्मिन्नेवस्वासिद्धावासक्तमुपक्षीणंयत्कर्तृत्वंतदेवकरणकर्मणोःसिद्धौतन्नस्यादित्यर्थः ॥ तथाचैकस्मिन्नवभासेकर्त्रादिभावेनान्वीयमानानांतदैवावभासां

तरसाधनत्वान्वयायोगान्नकर्त्रादित्रितयस्ययुगपदनुभवसाधन. संभावनेतितदसिद्धिस्तदवस्थेत्यर्थः ॥ ३१ ॥

व्याप्तुमिष्टं च यत्कर्तुः क्रियया क
र्म तत्स्मृतं ॥ अतो हि कर्तृतंत्रत्वं
तस्येष्टं नान्यतंत्रता ॥ ३२ ॥ ॥

कर्त्रादीनांयुगपत्सिद्ध्यभ्युपगमेऽव्याकरणविरोधोपिस्यादित्याहव्याप्तुमिति ॥ कर्तुःक्रिययायद्व्याप्तुमिष्टतमंतत्कर्मस्मृतं ॥ कर्तुरीप्सिततमंकर्मेतिपाणिनिनास्मृतमित्यर्थः हियस्मादेवम तस्तस्यकर्मणः सकलकारकप्रयोक्तृस्वतंत्रकर्तृतंत्रत्वमिष्टंनत द्व्यतिरिक्ताध्यक्षतंत्रताउक्तन्यायेनतत्साधकासिद्धेरित्यर्थः ३२

शब्दाद्वानुमितेर्वाऽपि प्रमाणाद्वा त
तोन्यतः ॥ सिद्धिः सर्वपदार्थानां
स्यादज्ञं प्रति नान्यथा ॥ ३३ ॥ ॥

तस्माद्विधिरूपेणप्रवृत्तादेवप्रमाणादभिमतवस्तुसिद्धिर्नान्य निषेधमात्रावसानादितिनिर्णीतमित्युपसंहरति ॥ शब्दाद्वेतिअ न्यतोऽन्यस्मात्प्रत्यक्षादेवेत्यर्थः ॥ ३३ ॥

अध्यक्षस्यापि सिद्धिःस्यात्प्रमाणे
न विनैव वा ॥ विना स्वस्य प्रसि
द्धिस्तु नाज्ञं प्रत्युपयुज्यते ॥ ३४॥

जडानांप्रवृत्तप्रमाणादेवासिद्धिरस्तुनस्वयंचेतनस्येत्याशंक्या

ह ॥ अध्यक्षस्यापीति ॥ येयमध्यक्षस्यसिद्धिरज्ञस्यसाप्रमाणाधीना नवेति विकल्प्यांत्येस्वरूपप्रकाशमात्रस्याविनाप्रमाणेन सिद्धावपिज्ञानंप्रत्यध्यक्षतातस्यसिद्ध्यतीतिदूषयाति ॥ विना स्वस्येति ॥ ३४ ॥

तस्यैवाज्ञत्वमिष्टं चेज्ज्ञानत्वेन्या मतिर्भवेत् ॥ अन्यस्यैवाज्ञतायां च तद्विज्ञाने ध्रुवा भवेत् ॥ ३५ ॥

अध्यक्षस्वरूपमपिविकल्प्यप्रमाणाधीनसिद्धिकतांतस्यदर्शयन्नाद्यंपक्षमभ्यनुजानाति ॥ तस्यैवेति ॥ तस्यैवज्ञानस्वरूपस्यचेतनस्यैवाज्ञत्वमिष्टंचेत्तदातस्यज्ञानत्वेचेतनत्वेऽन्याप्रमामाणजन्यामतिरपेक्षणीयाभवेत् अन्यस्यैवाचेतनस्याहंकारस्यैवाज्ञतायांतद्विज्ञानेऽध्यक्षविज्ञानेचान्यामतिर्ध्रुवाभवेदिति योजना ॥ उभयथापिविधिमुखप्रमाणाधीनाऽध्यक्षसिद्धिरित्यर्थः ॥ ३५ ॥

ज्ञातता स्वात्मलाभो वा सिद्धिः स्यादन्यदेव वा॥ज्ञातत्वेऽनंतरोक्तौ त्वंपक्षौ संस्मर्तुमर्हसि ॥ ३६ ॥ ॥

अध्यक्षस्यसिद्धस्वरूपत्वान्मानापेक्षानास्तीत्याशंक्यसिद्धिशब्दार्थएवतर्हिवक्तव्यइत्याह ॥ ज्ञाततेति ॥ किंज्ञानंसिद्धिः स्वरूपलाभोवास्यादन्यदेववोभयान्यप्रकारोवेतिविकल्पार्थः॥ तत्राद्येदोषमाह ॥ ज्ञातत्वेइति ॥ अनंतरोक्तौतस्यैवाज्ञत्वमि

ष्टंचेदित्यादिनापूर्वश्लोकोक्तौपूर्वोक्तविकल्पदूषणप्रसरान्नाद्यःक ल्पःसाधुरित्यर्थः ॥३६ ॥

सिद्धिः स्यात्स्वात्मलाभश्चेद्यत्नस्त त्र निरर्थकः ॥सर्वलोकप्रसिद्धत्वा त्स्वहेतुभ्यस्तु वस्तुतः ॥३७॥ ॥

द्वितीयमनूद्यदूषयति ॥ सिद्धिःस्यादिति ॥ निरर्थकत्वेहे तुमाह ॥ सर्वलोकेति ॥ वस्तुनःसर्वस्यस्वहेतुभ्यःस्वात्मला भरूपासिद्धिरिति सर्वलोकप्रसिद्धत्वात्तत्रप्रमातृप्रमाणप्रयासो ऽव्यर्थःस्यादित्यर्थः ॥ ३७ ॥

ज्ञानज्ञेयादिवादेऽतः सिद्धिर्ज्ञातत्व मुच्यते ॥ अध्यक्ष्याध्यक्षयोः सि द्धिर्ज्ञेयत्वं नात्मलाभता ॥ ३८ ॥

तृतीयंपक्षमप्रसिद्धिपराहतंमत्वावक्ष्यमाणपक्षविशेषज्ञाप नार्थमुक्तंपक्षंनिगमयति ॥ ज्ञानज्ञेयादीति ॥ ज्ञानंज्ञेयंज्ञाता चास्तीतियस्यवादस्तस्मिन्वादेज्ञातत्वमेवसिद्धिरुच्यते ॥ अ ध्यक्ष्याध्यक्षयोस्तुपुनर्ज्ञेयत्वमेवसिद्धिर्नत्वात्मलाभतेत्यर्थः ॥ अध्यक्षस्यापीत्यादेरपरायोजनाअहमज्ञासिषंचेदमित्यारभ्ये यताग्रंथेनकर्तृकर्मकरणानांविधिमुखेनप्रवृत्तप्रमाणादेवसिद्धि र्नान्यथेति ॥ प्रासंगिकमुपपादितमुपसंहृत्याध्यक्षस्यापिवस्तु त्वाविशेषात्प्रवृत्तप्रमाणादेवसिद्धिरितिप्रकृतमनुसरन्नाह ॥ अ ध्यक्षस्यापीति ॥ वाशब्दःकटाक्षे ॥ अध्यक्षस्यापिद्रष्टुरपिप्र माणेनविनैवसिद्धिःस्याद्वेतियोजना नैवस्यादित्यर्थः ॥ चेतन

त्वादध्यक्षस्यप्रमाणेनविनाकथंनसिद्धिरित्यतआह॥विनेति ॥ प्रमाणेनविनास्वस्यवस्तुनःप्रसिद्धिस्तुज्ञानंप्रमितिंप्रत्युपयुज्यते ॥ ज्ञानस्यैवस्वरूपस्फुरणेप्रमाणानपेक्षानज्ञातुरध्यक्षस्येत्यर्थः ॥ कथमितिचेत्तत्रवक्तव्यंअध्यक्षएवाज्ञः सन्प्रमाणेनविनाऽर्थसिद्धिंसाधयिष्यतिकिंवान्यांतःकरणादिरिति ॥ तत्राद्यमनूद्यदूषयति ॥ तस्यैवेति ॥ चेतनस्याध्यक्षस्यैवेत्यर्थः ॥ ज्ञानत्वेऽहमध्यक्षइति ॥ ज्ञानवत्वेऽन्यामतिःप्रवृत्तप्रमाणजन्यामतिरपेक्षिताभवेदागंतुकसिद्धेरन्यनिमित्तत्वादित्यर्थः॥द्वितीयमनूद्यदूपयति ॥ अन्यस्यैवेति ॥ तद्विज्ञानइति ॥ तस्यान्यस्यांतःकरणादेरध्यक्षविषयविज्ञानेऽन्याप्रमाणजन्यामतिर्ध्रुवाभवेदितियोजना उभयथापिविधिमुखेनप्रवृत्तप्रमाणादेवाध्यक्षसिद्धिरित्यर्थः॥ज्ञाततेति ॥ ज्ञातताज्ञनवत्तासिद्धिरितिपक्षेतस्यैवाज्ञत्वमिष्टंचेदितिपूर्वश्लोकोक्तविकल्पदूषणप्रसरणमनिवारणंस्यादित्याह ॥ ज्ञातत्वेनंतरोक्तावितिति ॥ यथाव्याख्यातौस्वपक्षावित्यर्थः ॥ अन्यत्समानं ॥ ३८ ॥

**स्पष्टत्वं कर्मकर्त्रादेः सिद्धिता यदि**
**कल्प्यते ॥ स्पष्टताऽस्पष्टते स्या**
**तामन्यस्यैव न चात्मनः ॥ ३९ ॥**

ननुज्ञाततात्मलाभातिरिक्ताप्यस्तिस्पष्टतानामसिद्धिरतोनाप्रसिद्धंपक्षांतरमितिभट्टमतमाशंक्यपरिहरति ॥ स्पष्टत्वमिति ॥ स्पष्टत्वंप्राकट्यंकर्मकर्त्रादेःस्पष्टतास्पष्टतेप्यन्यस्यैवकर्त्रादिविलक्षणस्यसाक्षिणश्चिदाभासजननेनस्यातांनत्वात्मनःकर्त्रादिस्वरूपस्यजडत्वादित्यर्थः ॥ ३९ ॥

अद्रष्टुर्नैव चांधस्य स्पष्टीभावो घट स्य तु॥ कर्त्रादेः स्पष्टतेष्टा चेद्दष्टृता ऽध्यक्षकर्तृका ॥ ४० ॥ ॥

एतदेवव्यतिरेकप्रदर्शनेनस्पष्टयति ॥ अद्रष्टुरिति ॥ अंध स्यदर्शनवृत्तिरहितस्यज्ञातुर्विषयीभूतस्यघटस्ययःस्पष्टीभावः सनैवज्ञानविषयतातिरिक्तोभट्टमतेसंभवतीत्यर्थः ॥ एवंसतिभ ट्टमतानुसारिणाकर्त्रादेःस्पष्टताप्राकटयरूपेष्टाचेत्तदाद्रष्टृतातद्वि लक्षणाध्यक्षकर्तृकाऽवश्यमेष्टव्या तस्मात्कर्मादेर्जडस्यस्पष्टता याःप्रकाशापरपर्यायायाअसंभवान्नस्पष्टतासिद्धिशब्दार्थः किं तुज्ञानविषयतैवेतिकर्त्रादिगतचिदाभासनद्वारातदधिष्ठानभूत श्चिदात्माविधिमुखेनैवप्रदीपादिदृष्टांतानुमानादिनाप्रमाणेना वगंतव्यइतिभावः ॥ ४० ॥

अनुभूतेः किमन्यस्मिन् स्यात्तवा पेक्षया वद ॥ अनुभवितरीष्टा स्या त्सोप्यनुभूतिरेव नः ॥४१॥ ॥

अत्रकर्तृकर्मविहीनएवप्रत्ययःस्वमहिम्नाभासतइतिवदन्वि ज्ञानवादीबौद्धःप्रत्यवतिष्ठते॥ अनुभूतेरितिअनुभूतेःसंवेदनस्या न्यस्मिन्कर्त्रादावपेक्षयातवकिंफलंस्यात्तद्वदनकिंचित्पलंतस्याः स्वप्रकाशत्वादित्यर्थः ॥ अनुभवितरिआश्रयभूतेसैष्टव्यास्यात्त स्यास्तदधीनत्वदर्शनादितिचेत्त्वंब्रूयास्तर्हिसोप्यनुभवितानोऽ स्माकंमतेऽनुभूतिरेव नततःपृथक् तत्सत्त्वेप्रमाणाभावादित्य र्थः ॥ ४१ ॥

अभिन्नोपि हि बुध्यात्मा विपर्या
सितदर्शनैः ॥ ग्राह्यग्राहकसंवित्ति
भेदवानिव लक्ष्यते ॥ ४२ ॥

कथंतर्ह्यनुभूतिरनुभवितानुभाव्यइतिभेददर्शनमित्यतआह अभिन्नोपिहीति ॥ बुध्यात्माबुद्धिस्वभावोऽभिन्नोप्येकोपिविपर्यासितदर्शनैर्भ्रांतिबुद्धिभिःपुरुषैर्ग्राह्यग्राहकसंवित्तिभेदवानिवलक्ष्यतेप्रतीयते संवित्तिशब्दोग्रहणशब्दपर्यायः ॥४२॥

भूतिर्येषां क्रिया सैव कारकं सैव
चोच्यते ॥ सत्त्वं नाशित्वमस्याश्चे
त्सकर्तृत्वं तथेष्यतां ॥ ४३ ॥

बुद्धेःकारकत्वानंगीकाराज्जनकर्त्राद्यपेक्षतेत्याह ॥ भूतिरिति ॥ येषांमतेयाभूतिरनुभूतिःसैवक्रियासैवकारकमुच्यतेक्षणभंगुरत्वेनविरम्यव्यापारायोगात्तेषांमतेकस्तस्याःस्वव्यतिरिक्तोऽपेक्षणीयःस्यादित्यर्थः ॥ प्रथममनुभूतेरन्यानपेक्षत्वंनिराकरोतिसिद्धांती ॥ सत्त्वमिति ॥ अनुभूतेरस्याःसत्त्वंस्वरूपसत्त्वंनाशित्वंक्षणभंगुरत्वमिष्टंचेत्तवतर्हितथासकर्तृत्वमपीष्यतामनुभवस्यात्रापिसद्भावादित्यर्थः ॥ ४३ ॥

नकश्चिच्चेष्यते धर्म इति चेत्पक्षहा
नता ॥ नन्वस्तित्वादयो धर्मा ना

स्तित्वादिनिवृत्तयः ॥ नभूतेस्तर्हि नाशित्वं स्वालक्षण्यं मतं हि ते ४४

अथसत्त्वादिरपिधर्मोनेष्यतेइतिमतंतदाक्षणिकत्वपक्षस्याप्यसिद्धिरित्याहनकश्चिदिति ॥ ननुनास्माभिर्विज्ञानस्यक्षणिकत्वादयोधर्माइष्यंतेकिंत्वक्षणिकत्वाद्यपोहरूपएवक्षणिकत्वादिरिष्यतेऽतोनोक्तदोषइतिशंकते॥नन्विति॥निराकरोति ॥ नेति ॥ एवंचेत्तर्हिभूतेरनुभूतेर्नाशित्वंनसिद्ध्येतहियस्मात्तेतवभूतेःस्वालक्षण्यंमतं स्वेनैवलक्ष्यतेज्ञायतेइतिस्वलक्षणंतस्यभावःस्वालक्षण्यंनिर्विकल्पमात्रमितियावत् ॥ ततःसविकल्पत्वादक्षणिकत्वासत्त्वान्नाशित्वाज्ञत्वादिव्यावृत्तेरनुभूतेश्चसविकल्पकज्ञानागोचरत्वान्नसत्त्वनाशवत्वादिधर्मसिद्धिरित्यर्थः ॥ ४४ ॥

स्वलक्षणावधिर्नाशो नाशोऽनाशनिवृत्तिता ॥ अगोरसत्वं गोत्वं ते न तु तद्गोत्वलक्षणं ॥ ४५ ॥ ॥

एतदेवस्फुटयति ॥ स्वलक्षणेति ॥ अयमर्थः ॥ कार्यंविनश्यन्ननिरवधिनश्यतिइदमत्रनास्तिइदमिदानींनास्तिनष्टमितिवानाशोऽव्यवह्रियतेयस्मात्तस्मात्किमप्यस्तिविनाशावधिभूतमविनश्यदनुत्पन्नंस्वतःसिद्धंचेत्यभ्युपेयंतदेतदाहस्वलक्षणावधिर्नाशइति ॥ स्वरूपमेवलक्षणंप्रमाणंधर्मोवायस्यसस्वलक्षणःसोवधिःसीमायस्यविनाशस्यसतथेतिविग्रहः ॥ तथाचत्वन्मतेआविर्भावतिरोभावयोरवधिभूतस्यस्थिरस्याभावान्नसत्त्वाविनाशयोःसिद्धिरित्यर्थः ॥ किंचापोहपक्षेऽन्योन्याश्रयश्च

प्रसज्येतेत्याह ॥ नाशइति ॥ सिद्धेनाशेतद्विरोधिनोऽनाशस्यसि
द्धिस्तात्सद्धौतदपोहरूपनाशसिद्धिरित्यर्थः ॥यत्तुसामान्यमनभ्यु
पगछताबौद्धेनागोऽव्यावृत्तिर्गोलक्षणमित्यभ्युपगम्यतेतदनुपप
न्नमन्योन्याश्रयस्यतादवस्थ्यादित्यभिप्रेत्याह ॥ अगोरिति॥ गो
रन्यस्याश्वत्वादेरगोपदाभिधेयस्यासत्त्वंनिवृत्तिरभावोगोत्वमि
तितेमतंतत्तुनगोत्वलक्षणंसिध्यतिअश्वत्वस्यापिगोत्वव्यावृत्ति
लक्षणतयापरस्परापेक्षासिद्धित्वादित्यर्थः ॥ ४५ ॥

**क्षणवाच्योपि योर्थः स्यात्सोप्य**
**न्याभाव एव ते ॥ ४६ ॥ ॥**

अपोहवादेदोषांतरमाह क्षणवाच्योपीति अन्याभावोऽक्ष
णिकाभावःक्षणइतितेप्रसज्यतेअतःस्थिरोपिक्षणिकताविरोधी
त्वयाभ्युपगतःस्यादित्यर्थः ॥ ४६ ॥

**भेदाभावेप्यभावस्य भेदो नामभि**
**रिष्यते ॥ नामभेदैरनेकत्वमेकस्य**
**स्यात्कथं तव ॥ ४७ ॥ ॥**

नन्वभावोनामनसतोनिवृत्तिरिष्यतेयेनातिप्रसंगःस्यात्किंतु
निरूपाख्यएवान्यव्यावृत्यात्मनाभिलप्यतइतिशंकते ॥भेदाभा
वेपीति ॥अभावस्यस्वरूपतोभेदाभावेपिअगोत्वमश्वत्वंअनश्व
त्वंगोत्वमित्यादिनामभिःस्वरूपभेदइष्यतइत्यर्थः ॥ दूषयति॥
नामभेदैरिति ॥एकस्यनिःस्वभावस्याभावस्यनामभेदैर्नैरर्थक

संज्ञाभेदैरनेकत्वमनेकपदार्थासाधारणतयाऽव्यावृत्त्यात्मत्वंतव कथंघटेतेत्यर्थः ॥ ४७ ॥

अपोहो यदि भिन्नानां वृत्तिस्त स्य कथं गवि ॥ नाभावाभेदकाः सर्वे विशेषा वा कथंचन ॥ ४८ ॥

किंचभिन्नानांव्यावृत्तिरपोहोऽभिन्नानांवातत्राद्यमनूद्यदूषयति ॥ अपोहोयदीति ॥ भेदप्रतियोगिनामानंत्यात्तदवगममंतरेणतदपोहानवगमात्तस्यापोहस्यगविवृत्तिःकथंसिद्ध्येदिति शेषः ॥ तदसिद्धौचकिंचिदभावस्यक्वचित्सुलभत्वाद्व्यवहारानियमप्रसंगइतिभावः ॥ द्वितीयेदोषमाह॥नाभावाइति ॥ सर्वेप्यभावाअजत्वाश्वत्वाद्यपोहरूपानभेदकानगोरितरेतरव्यावृत्तत्वबुद्धिजनकाःस्युस्तथाविशेषावाभावरूपाःखंडमुंडत्वादयोभेदकानस्युर्भेद्यभेदकयोर्भेदासिद्धेरित्यर्थः ॥ ४८ ॥

नामजात्यादयो यद्वत्संविदस्तेऽविशेषतः ४९ ॥ ॥ ॥

एवंचापोहवादेखंडागौर्नीलमुत्पलमित्यादिविशिष्टव्यवहारासिद्धिरियंगौरित्याद्यधारणस्वरूपव्यहारासिद्धिश्चस्यादित्यभिप्रेत्यापोहनिराकरणमुपसंहरति ॥ नामजात्यादयइत्यर्द्धेन ॥ तेतवमतेसंविदोऽविशेषतोनिर्विशेषत्वान्नामजात्यादयोयद्वन्नविशेषणंएवंगवादीनांअगवादिव्यावृत्तयः खंडादयोवानविशेषणमितिविशिष्टव्यवहारलोपएवेतिजीवनमपितेदुर्लभमितिभावः ४९

प्रत्यक्षमनुमानं वा व्यवहारे यदी
च्छसि॥क्रियाकारकभेदैस्तदभ्युपे
यं ध्रुवं भवेत् ॥ ५० ॥ ॥

यदुक्तंभूतिर्येषांक्रियासैवेत्यत्रसंविदःक्रियाकारकभेदापेक्षा नास्तीतितत्प्रत्यक्षमनुमानंचेतिप्रमाणद्वयाभ्युपगमविरुद्धमि त्याह॥ प्रत्यक्षमिति ॥ स्पष्टार्थः ॥ ५० ॥

तस्मान्नीलं तथा पीतं घटादिर्वा
विशेषणं ॥ संविदस्तदुपेयं स्याद्ये
न चाप्यनुभूयते ॥ ५१ ॥ ॥

तथाचसंवेदनातिरिक्तवेद्यवेदितृस्वरूपमनिच्छतांप्यभ्युपे यमितिबौद्धमतनिराकरणमुपसंहरति ॥ तस्मादिति ॥ येन चाप्यनुभूयतेसोपिज्ञाताभ्युपेयःस्यादित्यर्थः ॥ ५१ ॥

रूपादीनांयथाऽन्यः स्याद्ग्राह्यत्वा
द्ग्राहकस्तथा ॥ प्रत्ययस्तत्तथान्यः
स्याद्व्यंजकत्वात्प्रदीपवत् ॥ ५२॥

संवित्साक्षिण्यनुमानंप्रमाणमाह ॥ रूपादीनामिति ॥ यद्ग्रा ह्यंतत्स्वान्यग्राह्यंयथारूपादिग्राह्याचसंविदितिबौद्धंप्रतिप्रयोगो योज्यः॥ तथावभासकोवभास्यादन्योव्यंजकत्वाद्घटादेःप्रदी पवदिति ॥ आस्तिकान्प्रतिप्रयोक्तव्यमित्यर्थः ॥ यथारूपादी

नांग्राह्यत्वाद्ग्राहकोन्यःस्यात्तथाप्रत्ययस्यग्राह्यत्वाद्ग्राहकोन्यः स्यात्तथाग्राहकश्चग्राह्यादन्यःस्याद्व्यंजकत्वात्प्रदीपवदितिश्लोकयोजना ॥ ५२ ॥

अध्यक्षस्य दृशेः कीदृक्संबंधः संभविष्यति॥अध्यक्ष्येण तु दृश्येन मुक्त्वान्यो द्रष्टृदृश्यतां॥५३॥अध्यक्षेण कृता दृष्टिर्दृश्यं व्याप्नोत्यथापि वा॥नित्याध्यक्षकृतः कश्चिदुपकारो भवेद्धियां ॥ ५४ ॥

कस्तर्हिप्रत्ययाध्यक्षयोःसंबंधइत्यपेक्षायामाह ॥ अध्यक्षस्येति द्रष्टृदृश्यसंबंधाभ्युपगमेबलादाभासोभ्युपगंतव्यइतिविकल्पयत्यध्यक्ष्येणेति ॥ अध्यक्ष्येणप्रत्ययेनदृशेरात्मनःकीदृक्संबंधोभविष्यतिपारमार्थिकोवाऽपारमार्थिकोवेतिविमर्शार्थः ॥ तत्राद्योदृशेःपरिणामादिविकारप्राप्तिप्रसंगात्सावयवइत्याभिप्रेत्यद्वितीयमंगीकरोति ॥नित्याध्यक्षेति ॥ ५३ ॥ ॥ ५४ ॥

सचोक्तस्तन्निभत्वं प्राक् संव्याप्तिश्च घटादिषु ॥ यथालोकादिसंव्याप्तिर्व्यंजकत्वाद्धियस्तथा ॥ ५५ ॥

कोसावुपकारइत्यपेक्षायामाह ॥सचोक्तइति ॥ सचनित्याध्यक्षकृतोबुद्धेरुपकारस्तन्निभत्वंप्राक्पूर्वमेवमुखप्रतिबिंबदृष्टांतेनोक्तइत्यर्थः ॥ उक्ताभासद्वारात्मनोदृश्यबाह्यविषयसंबंधंव

कुंसाभासायाबुद्धेर्विषयव्याप्तिंसदृष्टांतमाह ॥ संव्याप्तिश्चेति यथाघटादिष्वालोकादिसंव्याप्तिर्व्यंजकत्वात्तथाधियोहइयघटादिव्याप्तिरित्यर्थः ॥ ५५ ॥

**आलोकस्थोघटो यद्वद्बुध्यारूढो भवेत्तथा ॥ धीव्याप्तिःस्याद्धटारोहो धियो व्याप्तौ क्रमो भवेत्॥ ५६॥**

उक्तमेवस्फुटयति ॥ आलोकस्थइति ॥ यद्वद्यथालोकनिविष्टोघटआलोकारूढोभवेत्तथाबुद्धिनिविष्टोबुध्यारूढोभवेत् ॥ आरूढइत्युक्तेपुरुषाश्वयोरिवोपर्यधोभावइतिशंकांवारयति ॥ धीव्याप्तिःस्यादिति ॥ यद्येवंविषयव्याप्तिमात्रमेवधियोविषयव्यंजकत्वंतर्ह्यात्मनोबुद्धेश्चकोविशेषइत्याशंक्यविशेषमाह ॥ धियोव्याप्तौक्रमोभवेदिति ॥ ५६ ॥

**पूर्वं स्यात्प्रत्ययव्याप्तिस्ततोऽनुग्रह आत्मनः ॥ कृत्स्नाध्यक्षस्य नो युक्तः कालाकाशादिवक्रमः ॥ ५७ ॥**

धियोविषयव्याप्तौक्रमोभवेन्नात्मनइत्यर्थादुक्तंविशेषंविशदयति ॥ पूर्वमिति ॥ धियोविषयव्याप्तिःपूर्वंप्रथममिवप्रथमंस्यात्तोविषयाकारतायांसिद्धायामात्मनोऽनुग्रहस्तदाकारेप्रतिबिंबभावस्तद्बलाच्चविषयव्यंजकत्वमितिक्रमद्दृष्टत्वमन्यशेषत्वंच धियः सिध्यति ॥ नतथात्मनइत्याह ॥ कृत्स्नाध्यक्षस्येति॥प्रत्यर्थंपरिणामभेदेनव्यंजकत्वाद्बुद्धेरवक्रमोयुक्तःकृत्स्नाध्यक्ष

स्यसर्वविक्षेपास्पदतयासर्वदासर्वत्रानुगतप्रकाशरूपस्यापरि
च्छिन्नस्यात्मनोनयुक्तःसक्रमइत्यर्थः ॥ देशतःकालतोवाक्रमाभा
वेदृष्टांतः ॥ कालाकाशादिवदिति ॥ ५७ ॥

विषयग्रहणं यस्य कारणापेक्षया
भवेत् ॥ सत्येव ग्राह्यशेषे च परि
णामी स चित्तवत् ॥ ५८ ॥

नन्वध्यक्षस्यापिभोग्यविषयावभासकत्वाद्बुद्धेरिवपरिणामः
प्राप्नोतीत्याशंक्याह ॥ विषयग्रहणमिति ॥ कारणापेक्षयाकर्त्रा
दिकारकापेक्षयाग्राह्यशेषेस्वासंसृष्टविषयांतरावशेषेचसतिय
स्यविषयग्रहणंभवेत्सपरिणामीस्याच्चित्तवन्नैवमात्मनोविषयाव
भासनंकिंतुनित्यसिद्धप्रकाशस्वभावेनयुगपत्स्वाध्यस्तसमस्ता
वभासनमित्यतोनतस्मिन्परिणामशंकावकाशइत्यर्थः ॥ ५८॥

अध्यक्षोहमितिज्ञानं बुद्धेरेव विनि
श्चयः ॥ नाध्यक्षस्याविशेषत्वान्न
तस्यास्ति परो यतः ॥ ५९ ॥

यद्यपितस्योक्तरीत्याभोग्यविषयाकारपरिणामोनास्तितथा
पिब्रह्मज्ञानाकारेणपरिणामःस्याद्ब्रह्मणःस्वात्मत्वेसत्यपि तदा
कारावभासस्यागंतुकज्ञानसापेक्षत्वादित्याशंक्याह ॥ अध्यक्षो
हमितीति ॥ तत्त्वमस्यादिवाक्यादध्यक्षःपरमात्मैवाहमितिय
ज्ज्ञानंजायते तन्नाध्यक्षस्यसाक्षिणःपरिणामस्तस्याविशेषत्वा
त्स्वतःपरतोवानिरवयवस्यासंगस्यविशेषासंभवात्किंतुबुद्धेरेव

साभासायाविनिश्चयोवऽस्थाविशेषइत्यक्षरार्थः ॥ एतदुक्तंभवति ॥ अनेकजन्मानुष्ठितयज्ञादिकाकृताहष्टदोषनिवृत्तिसंस्कारवत्याःसगुणब्रह्मोपासनानिराकृतचांचल्यायाःसांप्रतंविवेकवैराग्यशमादिगुणसंस्कृतायाःपदार्थद्वयपरिशोधनज्ञानाहितदृढसंस्कारायाश्चबुद्धेस्तत्त्वमस्यादिवाक्यश्रवणसमनंतरशोधितपदार्थगतकल्पितभेदांशतिरोधानेनाखंडाकाराकाचिदवस्थाजायतेतस्यांप्रतिबिंबितश्चिदात्माताहग्वृत्त्यविविक्ताकारेणाहमितिपरामृश्यतेऽतोविविक्ताकारमेवोपाध्यंशापोहेनस्वमेवरूपंब्रह्मेतिप्रतिपद्यतइतिनतस्मिन्कोपिविशेषउपजायतइति चिदात्मनःपरिणामाभ्युपगमेपरिणामिनश्चित्तवत्स्वान्यवेद्यत्वनियमादात्मनोप्यन्यःसाक्षीकल्प्येततदनुपपन्नमनवस्थानादप्रमाणकत्वाच्चेत्यभिप्रेत्याहनतस्यास्तिपरोयतइति ॥ ५९ ॥

कर्त्रा चेदहमित्येवमनुभूयेत मुक्तता ॥ सुखदुःखविनिर्मोको नाहंकर्तरि युज्यते ॥ ६० ॥ ॥ ॥

यदाप्येवमंतःकरणस्यैवज्ञानाकारपरिणामस्तथापितस्यनज्ञानफलभागिताकिंत्वात्मनएवेत्यभिप्रेत्याहकर्तुःफलसंबंधेदोषमाह ॥ कर्त्राचेदिति ॥ कर्त्राविकारिणाचेदहंमुक्तइतिमुक्ततानुभूयेततदानाहंकर्तेतिकर्तृत्वोपमर्दनेनसुखदुःखविनिर्मोकोऽसंबंधस्तास्मिन्नयुज्यतेकर्तुःसुखादिमत्त्वानुभवविरोधादित्यर्थः॥कर्तुरपिक्रिययासहतदाविलीयमानत्वान्नतस्यफलसंबंधइतिभावः ॥ ६० ॥

बाध्यते प्रत्ययेनेह विवेकेनाविवे
कवान् ॥ देहादावभिमानोत्थो दुः
खीतिप्रत्ययो ध्रुवं॥कुंडलीप्रत्य
योयद्वत्प्रत्यगात्माभिमानिना॥ ६१ ॥

आत्मन्यपिकथंफलसंबंधस्तस्यकूटस्थनित्यत्वादित्याशंक्यतत्त्वज्ञानोदयान्नांतरीयकतयाबाध्यमानाध्यस्तानात्मसंभेदावभासस्यफलत्वोपचारात्तस्यचात्मन्येवापपत्तेरित्यभिप्रेत्याह ॥देहादाविति॥दुःखीत्युपलक्षणंसुखीकृशःस्थूलःकामीक्रोधीत्यादयःकुंडलस्यस्वसंबंधित्वाभिमानकृतेतत्संयोगवियोगयोःसुखदुःखेयद्वदितिदृष्टांतार्थः ॥एवंबाध्यस्याध्यस्तत्वमुक्त्वातस्यबाधमाह ॥ प्रत्यगात्माभिमानिनेतिअविवेकवानाभिमानिकःप्रत्ययोविवेकेनप्रत्यगात्माभिमानिनाशुद्धत्वंपदार्थात्माभिमानिनाप्रत्ययेनबाध्यतइत्यन्वयः प्रत्यगात्माभिगामिनेति पाठांतरेसुगमं ॥ अत्रप्राग्वद्वेनार्द्धेनसहगणनयेहद्वन्द्वमर्द्धमेकीकृत्य ॥ ६१ ॥

विपर्यासे सदंतं स्यात्प्रमाणस्याप्र
माणतः ॥ ६२ ॥

अविवेकवताविवेकीप्रत्ययःकस्मान्नबाध्यतेविरोधस्यसमत्वादित्यतआह ॥ विपर्यासइति ॥ वैपरीत्येप्रमाणस्याप्रमाणतापातात्सर्वमसदंतंशून्यांतंस्यात् ॥ प्रामाणिकस्यार्थस्यासत्त्वेप्रतिभासस्यनिरालंबनत्वापत्तौनिरवधिकोबाधाइतिशून्यांतताप्रसंगइत्यर्थःअयमर्धोप्यकेः ॥ ६२ ॥ ॥

दाहच्छेदविनाशेषु दुःखित्वं नान्यथात्मनः ॥ नैव ह्यन्यस्य दाहादावन्यो दुःखी भवेत्क्वचित् ॥ ६३ ॥

विवेकेनाविवेकबाधो भवतीति पूर्वमुक्तं प्रपंचयति दाहच्छेदेति दाहादिदेहोपघातनिमित्तं हि दुःखमनुभूयते नान्यथा तच्च देहाभिमाननिबंधनमन्यथा सुषुप्तावपि प्रसंगादात्मा च देहादेरन्य इति प्रमाणसिद्धमतोन्यगतदाहादिनान्यस्य दुःखेति प्रसंगादध्यासनिबंधनं दुःख्यहमस्मीति ज्ञानमित्यर्थः ॥ ६३ ॥

अस्पर्शत्वाददेहत्वान्नाहं दाह्यो यतः सदा ॥ तस्मान्मिथ्याभिमानोत्थं मृते पुत्रे मृतिर्यथा ॥ ६४ ॥

आत्मनः स्वतो दाहादिसंबंधाभावे प्रमाणमाह ॥ अस्पर्शत्वादिति ॥ फलितं सदृष्टांतमुपसंहरति ॥ तस्मादिति ॥ ६४ ॥

कुंडल्यहमिति ह्येतद्बाध्यते वै विवेकिना ॥ दुःखीति प्रत्ययस्तद्वत्केवलाहंधिया सह ॥ ६५ ॥

प्रागुक्तं दृष्टांतं विवृण्वन् विवेकीप्रत्ययेनाविवेकी बाध्यत इत्युपपादितमुपसंहरति ॥ कुंडलीति ॥ केवले शुद्धे ब्रह्मण्येवाहंधीः केवलाहंधीस्तयेति विग्रहः ॥ ६५ ॥

सिद्धे दुःखित्वइष्टं स्याच्छक्तिश्छंद सात्मनः॥मिथ्याभिमानतो दुःखी तेनार्थापादनक्षमः ॥ ६६ ॥

नन्वदुःखिनोमोक्षोपदेशानुपपत्तेरात्मनोपिदुःखित्वमवगम्यतेततस्तत्सिद्धयेशक्तिमत्त्वंगम्यतेऽतोनान्यगतेननिमित्तेनैवदुःखीकिंतुस्वतोपीतिसुषुप्त्यादावपिशक्तिमत्त्वमनिवारितमितिचेत्तत्राह ॥ सिद्धइति ॥ कस्यांचिदप्यवस्थायांयद्यात्मनःकेवलस्यदुःखित्वंप्रमाणसिद्धंस्यात्तथासतिछंदसाइछयातच्छक्तिर्दुःखित्वशक्तिःकल्प्येतनसाकल्पयितुंशक्यते ॥ दुःखदर्शनस्यान्यथोपपत्तेरित्याह ॥ मिथ्येति ॥ अत्रह्यन्वयव्यतिरेकौदर्शितौतेनमिथ्याभिमाननिबंधनत्वेनार्थापादनक्षमोदुःखित्वानुभवइतियोजनाअर्थादनुपपत्त्यायतःदुःखित्वशक्तिमत्वापादनंतस्यक्षमःसमर्थोयमनुभवइत्यन्यथोपपत्तिरित्यर्थः ॥ तथाचयथादर्शनंदुःखशक्तिमत्वमपिमिथ्यैवेतिभावः ॥ ६६ ॥

अस्पर्शोपि यथा स्पर्शमचलश्चलनादि च॥अविवेकात्तथा दुःखं मानसं चात्मनीक्षते ॥ ६७ ॥

तामेवान्यथोपपत्तिंसाधयति ॥ अस्पर्शोपीति ॥ निरवयवस्यपूर्णस्यात्मनोयथास्पर्शचलनादिदर्शनमविवेकादेवआदिशब्दाच्छयनोत्थानोपवेशनादिगृह्यते ॥ चकारात्परिछिन्नत्वाभिमानः ॥ तथामानसंमनःकल्पितंचदुःखमविवेकादेवात्मनीक्षतइत्यर्थः ॥ ६७॥

विवेकात्मधिया दुःखं नुद्यते चल नादिवत् ॥ अविवेकस्वभावेन म नो गच्छत्यनिच्छतः॥६८॥ ॥

अविवेकादेवदुःखदर्शनमात्मनीत्येतदन्वयव्यतिरेकाभ्या मुपपादयतिविवेकेति ॥ विवेकरूपयात्मधियेत्यर्थः ॥ यस्मा त्स्थूलदेहविवेकात्मज्ञानेनचलनादिस्थूलदेहसंबंधिमिथ्याध्य स्तमात्मनिनिवर्त्यते ॥ तथासूक्ष्मदेहाविवेकनिमित्तंदुःखंब्र ह्मात्मज्ञानेनसमूलंनिवर्त्यतइत्यर्थः ॥ ६८ ॥

तदानुदृश्यते दुःखं नैश्चल्येनैव त स्य तत् ॥ प्रत्यगात्मनि तस्मात्तदुः खं नैवोपपद्यते ॥ ६९ ॥

अनिच्छतोप्यविवेकस्वभावान्मनश्चलतीतिनिमित्तमुक्त्वा नैमित्तिकमाह॥ तदेति ॥ नैश्चल्येसतितस्यात्मनस्तद्दुःखंनैवे त्यन्वयः उपसंहरति ॥ प्रत्यगात्मनितस्मादिति ॥६९॥

त्वंसतोस्तुल्यनीडत्वान्नीलाश्ववदिदं भवेत् ॥ ७० ॥ ॥ ॥

एवंयुक्तितःप्रत्यगात्मनोनिर्दुःखस्वाभाव्येसिद्धेवाक्यादेवब्र ह्मास्मीत्यपरोक्षज्ञानंभवतीत्याह ॥ त्वंसतोरितिसार्द्धेन ॥ इदं वाक्यमखंडार्थनिष्ठंभवेत्त्वंसतोस्त्वंसत्पदयोस्तुल्यनीडत्वादे कार्थवृत्तित्वान्नीलाश्वपदवदित्यक्षरार्थः ॥ नीलोश्वइतिपदयो

यद्यपिगुणगुणिरूपेणसंसृष्टार्थविषयत्वंतथाप्येकद्रव्यपर्यवसायित्वेनसामानाधिकरण्येदृष्टांतइतिद्रष्टव्यं ॥ ७० ॥

निर्दुःखवाचिना योगात्त्वंशब्दस्य
तदर्थता ॥ प्रत्यगात्माभिधानेन त
च्छब्दस्ययुतेस्तथा ॥ ७१ ॥ ॥

कथंपदयोरेकार्थनिष्ठत्वंतद्दर्शयाति ॥निर्दुःखेति॥निर्दुःखवाचिनासच्छब्देनयोगात्सामानाधिकरण्यात्त्वंशब्दस्यतदर्थतातथाप्रत्यगात्माभिधानेनत्वंशब्देनतच्छब्दस्यसच्छब्दस्ययुतेर्योगात्सामानाधिकरण्यादपरोक्षात्मतासिध्यतीत्यर्थः ॥ ७१ ॥

दशमस्त्वमसीत्येवं वाक्यं स्यात्प्र
त्यगात्मनि ॥ ७२ ॥ ॥ ॥

वाक्यमप्यपरोक्षवस्तुप्रतिपादकमित्यत्रदृष्टांतमाह ॥ दशमस्त्वमसीति ॥ स्पष्टं ॥ ७२ ॥

स्वार्थस्य ह्यप्रहाणेन विशिष्टार्थस
मर्पकौ ॥ प्रत्यगात्मावगत्यंतौ ना
न्योर्थोर्थाद्विरोध्यतः॥७३॥ ॥

ननुतत्त्वंपदयोरेकार्थनिष्ठत्वेपर्यायत्वापत्तौसहप्रयोगोनुपपन्नइतिचेन्नास्तिपर्यायत्वंप्रवृत्तिनिमित्तभेदादित्यभिप्रेत्याह ॥ स्वार्थस्यहीति ॥ प्रत्यक्षत्वपरोक्षत्वलक्षणस्वार्थस्यस्ववाच्यार्थस्याप्रहाणेनैवापरित्यागेनैवत्वंसच्छब्दौविशिष्टार्थसमर्पकौअतो

वाच्यभेदान्नपर्यायतेत्यर्थः ॥ एवंतर्ह्यखंडार्थत्वेनस्यादित्याशं क्याह ॥ प्रत्यगात्मेति ॥ प्रत्यगात्मनःशुद्धसाक्षिणोऽवगतिस्त त्त्वावगतिरंतोवसानंययोस्तौतथाश्रूयमाणंपदयोःसामानाधिक रण्यंमिथोविरुद्धवाच्यार्थसंसर्गेन्यतरविशिष्टेन्यतरेवापर्यवसा नमगच्छत्कल्पितभेदपरामर्शेनलक्षणयाविगतपरोक्षत्वाद्यंशे स्वरूपमात्रेसोयंदेवदत्तइतिवदखंडेपर्यवस्यतीतिप्रत्यगात्माव गत्यंतौतत्त्वंशब्दावुक्तावित्यर्थः॥ ननुतत्त्वंपदयोःसामानाधिकर ण्यमशांशित्वादिविषयतयाप्युपपत्स्यतेकिमित्यखंडार्थतापक्ष पातइत्यतआह ॥ नान्योर्थइति ॥ अतोस्मादुक्तादखंडार्थादिकर साद्विरोधीअन्योर्थोनवेदांतेषुप्रतिपाद्यतइत्यर्थः॥ तदिदंविवक्षि तंतत्त्वमर्थयोःसुवर्णकुंडलमितिवन्नकार्यकारणभावेनसंसर्गःसं भवति ॥ अन्यत्रास्मात्कृताकृतादितिश्रुतिविरोधात्॥ नापिभू म्यशरादिवदंशांशिभावेननिष्कलंनिष्क्रियमित्यादिकूटस्थैकर सप्रतिपादकश्रुतिविरोधात् ॥ नापिगुणगुणिभावेननीलमुत्प लमितिवन्निर्गुणत्वश्रुतिविरोधात् ॥ नापिजातिव्यक्तिविशिष्ट स्वरूपादिप्रकारेणसंसर्गः ॥ एकमेवाद्वितीयमसंगोह्ययंपुरुष इत्यादिश्रुतिविरोधात्तस्माद्विशिष्टसंसर्गाविरोधिवस्तुमात्रनिष्ठ त्वंवाक्यस्याखंडार्थत्वमिहविवक्षितंतथाचविमतमखंडार्थनिष्ठ मुपाधिपरामर्शमंतरेणाविभाव्यमानभेदवस्तुनिष्ठत्वात्सोयंदेव दत्तःखंछिद्रमित्यादिवाक्यवदिति ॥ ७३ ॥

**नवबुद्ध्यपहाराद्धि स्वात्मानंदशपू**
**रणं॥ अपश्यन् ज्ञातुमेवेच्छेत्स्वमा**
**त्मानं जनस्तथा ॥ ७४ ॥ ॥**

नन्वेवमखंडार्थनिष्ठत्वेपिवाक्यस्यनतावन्मात्रेपर्यवसानंयु
क्तंबोधमात्रात्फलासिद्धेर्यत्नांतरमेष्टव्यमितिक्रियापर्यवसायि
ताकस्मान्नकल्प्यतइत्याशंक्यमुमुक्षोर्जिज्ञासितमर्थंविहायार्थां
तरपरत्वकल्पनेऽबुभुत्सितार्थपरत्वेनवाक्यस्याप्रामाण्यप्रसंगा
न्नैवमित्यभिप्रेत्यज्ञानमात्रादेवफलसिद्धिंदृष्टांतेनोपपादयति॥
नवबुद्धीत्यादिना ॥ नवैववयमितिबुद्ध्याभ्रमरूपयापहारात्तिरो
हितत्वात्तिरोधानमात्रनिवृत्तिफलतयादशत्वसंख्याया:पूरणं
स्वात्मानमपश्यन्ज्ञातुमेवेच्छेन्नतुकिंचित्कर्तुमित्यर्थः यथायंदृ
ष्टांतस्तथाजनोमुमुक्षुरपिस्वमात्मानंकेनापिहेतुनाविस्मृतंज्ञा
तुमेवेच्छतिभ्रमनिवृत्तिफलायैवात:क्रियापरत्वकल्पनानावका
शंलभतइत्यर्थः ॥ ७४ ॥

## अविद्याबद्धचक्षुष्ट्वात्कामापहृतधीः सदा ॥ विविक्तंदृशिमात्मानं नेक्षते दशमं यथा ॥ ७५ ॥ ॥

प्रकृतेस्वात्मन:केनापहार:कृतइत्यपेक्षायांदार्ष्टांतिकंविवृ
ण्वंस्तदाह ॥ अविद्याबद्धेति ॥ अविद्यानाद्यज्ञानंतयाबद्धमा
च्छादितंचक्षुर्विवेकदर्शनंयस्यसजीवस्तथातस्यभावस्तत्त्वंतस्मा
दितिविग्रहः ॥आवरणमुक्त्वाविक्षेपमाह कामापहृतधीरिति ब
हिर्विक्षिप्तचित्तइत्यर्थः ॥ सदासर्वदाहश्यसंघाताद्विविक्तमेवपर
मार्थदृगात्मतत्त्वंनेक्षतेनपश्यतियथानवस्वेवविक्षिप्तचित्तोदश
मंनवभ्योवस्तुतोविविक्तंनेक्षतेतथेत्यर्थः ॥ ७५ ॥

## दशमस्त्वमसीत्येवं तत्त्वमस्यादिवा

क्यतः ॥ स्वमात्मानं विजानाति कृत्स्नांतःकरणे क्षणं ॥ ७६ ॥ ॥

कथंतर्ह्यात्मानंजानातीत्यपेक्षायांशास्त्राचार्योपदेशान्निमित्त मात्राज्जानातीतिसदृष्टांतमाह ॥ दशमस्त्वमसीत्येवमिति कृ त्स्नांतःकरणेक्षणमहंकर्तुरपिविविक्तंतत्साक्षिणमित्यर्थः ॥७६

इदंपूर्वमिदं पश्चात्पदं वाक्यं भवेदि ति ॥ अन्वयव्यतिरेकाभ्यां ततो वाक्यार्थबोधनं ॥ ७७ ॥ ॥

ननु यच्छब्दयोगः प्राथम्यमित्याद्युद्देशलक्षणं तच्छब्दए वकारश्चस्यादुपादेयलक्षणमितिन्यायेनप्रथमनिर्दिष्टमुद्देश्यंचर मनिर्दिष्टमुपादेयमितिनियमोवक्तव्यःसइहनोपपद्यतेयतस्तत्त्व मित्यत्रतदर्थस्यप्राथम्यंश्रूयते॥अहंब्रह्मास्मीत्यत्रत्वमर्थस्यएवं तत्रतत्रान्यथान्यथाश्रूयमाणत्वात्कथमिहोद्देश्यविधेयनियमइ त्याशंक्यवेदपदानामर्थवशादेवसंबंधोनपाठवशादाहरपात्रंपात्र माहरेतिवदर्थनियमंविवक्षन्नाह॥इदंपूर्वमिति॥पाठस्यानियमेपि प्रसिद्ध मुद्दिश्यानूद्याप्रसिद्धोबोध्यतइतिन्यायादिदंप्रसिद्धार्थकं त्वमहमादिपदंपूर्वमिदमप्रसिद्धार्थकंब्रह्मसदादिपदंपश्चादित्ये वंपदंविन्यस्तंवाक्यंभवेदित्यन्वयव्यतिरेकाभ्यामवधार्यततोवा क्यार्थबोधनंत्वमर्थस्यतदर्थात्मत्वप्रतिपत्तिरूपंभवेदित्यर्थः७७

वाक्ये हि श्रूयमाणानां पदानाम र्थसंस्मृतिः॥ नियमो नैव वेदेस्ति

पदसांगत्यमर्थतः ॥ ७८ ॥ ॥

उक्तेऽर्थेहेतुमाह ॥ वाक्येहीति स्पष्टं ॥७८॥

यदा नित्येषु वाक्येषु पदार्थस्तु विविच्यते ॥ वाक्यार्थज्ञानसंक्रात्यै तदा प्रश्नो न युज्यते ॥ ७९ ॥

आचार्येणब्रह्मासीत्युपदिष्टःखलुशिष्यःकथमहंब्रह्मस्यामितिपृच्छति ॥ तदन्यथानुपपत्त्यावाक्यंसाक्षाद्बोधजननसमर्थंनभवतीतिगम्यतेइत्याशंक्याह यदानित्येष्विति ॥ नित्येष्वर्थाऽव्यभिचारिष्वित्यर्थः ७९ ॥

अन्वयव्यतिरेकोक्तिः पदार्थस्मरणाय तु॥ स्मृत्यभावे न वाक्यार्थो ज्ञातुं शक्यो हि केन चित् ॥ ८० ॥

पदार्थतत्त्वानभिज्ञस्यैवप्रश्नोघटतइत्युक्तंस्पष्टयाति ॥अन्वयेति ॥अन्वयव्यतिरेकोक्तिशब्देनावांतरवाक्यैस्तदनुकूलैश्चतर्कैरात्मानात्मविवेचनमुच्यतेपदार्थस्मृतिः पदोपस्थापितवाक्यार्थज्ञानकारणमित्यत्रलोकप्रसिद्धिमाह ॥ स्मृत्यभावइति ॥८०॥

तत्त्वमस्यादिवाक्येषु त्वंपदार्थाविवेकतः ॥ व्यज्यते नैव वाक्यार्थो नित्यमुक्तोहमित्यतः ॥ ८१ ॥ ॥

तत्रापित्वंपदार्थविवेकेतीव्रप्रयत्नःकार्यइत्यभिप्रेत्याह ॥ तत्वमस्यादीतित्रिभिःश्लोकैः ॥ ८१ ॥

अन्वयव्यतिरेकोक्तिस्तद्विवेकाय नान्यथा ॥ त्वंपदार्थविवेके हि पाणावर्पितबिल्ववत् ॥ ८२ ॥ ॥ वाक्यार्थो व्यज्यते चैवं केवलोहं पदार्थतः ॥ दुःखीत्येतदपोहेन प्रत्यगात्मविनिश्चयात् ॥ ८३ ॥ ॥

विचारप्रयोजनंद्रढयति ॥ अन्वयव्यतिरेकोक्तिरिति ॥ अतइतिपूर्वश्लोकगतंपदमस्मिन्योज्यं ॥ तद्विवेकायत्वंपदार्थविवेकायेत्यर्थः ॥ पदार्थविवेकफलंस्पष्टयति ॥ त्वंपदार्थविवेकेहीति ॥ केवलोभेदसंसर्गशून्योवाक्यार्थइत्यन्वयः ॥ तत्रहेतुमाह ॥ अहंपदार्थतोदुःखीत्येतदपोहेनेति ॥ अहमितिप्रतीयमानात्पदार्थाद्दुःखीत्येतस्येदमंशस्यापोहेनप्रत्यगात्मनः साक्षिणो विशेषेणनिश्चयादित्यर्थः ॥ ८२ ॥ ८३ ॥

तत्रैवं संभवत्यर्थे श्रुतहानाश्रुतार्थधीः ॥ नैव कल्पयितुं युक्ता पदवाक्यार्थकोविदैः ॥ ८४ ॥ ॥

एवमुक्तेनन्यायेनवाक्यादेवापरोक्षाखंडब्रह्मात्मज्ञानमुपपाद्येदानींपूर्ववादिकल्पनायानिर्मूलतामाह॥तत्रैवमिति॥स्पष्टं ८४

प्रत्यक्षादीनि बाधेरन्कृष्णलादिषु पाकवत्॥ अक्षजादिनिभैरेतैः कथं स्याद्वाक्यबाधनम् ॥ ८५ ॥ ॥

यथाऽव्याख्यानंवाक्यस्ययथाश्रुतार्थेसंभवतिसतिश्रुतहान्यादिकल्पनमनवकाशमित्युक्तमयुक्तं ॥ प्रत्यक्षादिविरुद्धेर्थेवाक्यस्यबाधदर्शनादितिपूर्ववादीदृष्टांतेनशंकते ॥ प्रत्यक्षादीनीति ॥ यथाकृष्णलान्श्रपयेदिति कृष्णलशब्दवाच्यसुवर्णमयकणेषुश्रुतोपिपाकःप्रत्यक्षेणबाध्यते तेषुविक्लित्तेरदर्शनात्किंत्वदृष्टार्थएवसंस्कारस्तत्रपाकक्रियासाध्यःएवमिहाप्यखंडार्थतांवाक्यस्यप्रत्यक्षादीनिप्रमाणानिभेदग्राहकानिबाधेरन् ॥ श्रुतेप्यात्मनोब्रह्मत्वेपूर्णत्वादर्शनादतः प्रसंख्यानेनात्मसंस्कारार्थतावाक्यस्येतिचेत्तत्रोत्तरमाह ॥ अक्षजादीति ॥भवेदेवंयदिकर्तृत्वादिप्रतिभासस्यप्रत्यक्षप्रमाणतास्यान्नैतदस्ति अध्यस्ताहंकाराद्युपरागमंतरेणस्वतआत्मनिदुःखित्वादिधर्मसंबंधस्यानिराकृतत्वादतःप्रत्यक्षाद्याभासैरेतैः प्रमाणभूतवाक्यबाधनंकथंस्यान्नैवस्यादित्यर्थःप्रयाजेकृष्णलंजुहोतीतिवद्ब्रह्मज्ञानेसंस्कृतस्यात्मनोन्यत्रविनियोगादर्शनादिहनसंस्कारार्थत्ववंवाक्यस्योपपद्यतेसद्योब्रह्मत्वादर्शनंतुपदार्थमतिदार्ढ्याभावादित्युक्तमेवेतिभावः ॥ ८५ ॥

दुःख्यस्मीति सति ज्ञाने निर्दुःखीति न जायते ॥ प्रत्यक्षादिनिभत्वेपि

वाक्याच्च व्यभिचारतः ॥ ८६ ॥

नन्वेवंविरोधितालक्षणाप्रामाण्याभावेपिस्यादनुत्पत्तिलक्षणमप्रामाण्यंवाक्यस्येतिपूर्ववादीशंकतेदुःख्यस्मीतिसतीति ॥ दुःखित्वादिभानस्योक्तरीत्याप्रत्यक्षाद्याभासत्वेपिदुःख्यस्मीतिविरोधिगंधिनिज्ञानेसतिवाक्यान्निर्दुःखीतिविज्ञानंनजायतइतियोजना ॥ पूर्वसिद्धतयाप्रत्यक्षस्यासंजातविरोधित्वेनप्राबल्यमस्तीत्यभिप्रायः ॥ दूषयति ॥ नव्यभिचारतइति ॥ ८६ ॥

स्वप्ने दुःख्यहमध्यासं दाहच्छेदादि हेतुतः ॥ तत्कालभाविभिर्वाक्यैर्न बाधः क्रियते यदि ॥ ८७ ॥ ॥

तमेवव्यभिचारमाह ॥ स्वप्नइति ॥ स्वप्नेदाहच्छेदादिहेतुतो निमित्तादहंदुःख्यासंतदाप्तोपदेशान्निर्दुःखोभूवमित्यनुभवसिद्धत्वान्नात्मधर्मोदुःखित्वादीत्यर्थःतत्रपराभिनिवेशमनुभवति ॥ तत्कालेति ॥ ८७ ॥

समाप्तेस्तर्हि दुःखस्य प्राक् तद्बाध इष्यतां॥न हि दुःखस्य संतानो भ्रांतेर्वा दृश्यते क्वचित् ॥ ८८ ॥ ॥

तथापिदुःखमात्मव्यभिचारीत्याह ॥ समाप्तेरिति ॥ दुःखस्यसमाप्तेरूर्ध्वंतद्बाधोदुःखबाधइष्यतएवंप्राक्पूर्वमपिदुःखंनाभूदितितद्बाधइष्यतांमध्येदृश्यमानस्यशुक्तिरूप्यवन्मिथ्यात्व

भिचारादित्यर्थः ॥ कुतोबाधइष्यतइत्यत्रहेतुमाह ॥ नहीति ॥ भ्रांतेर्वेतिदृष्टांतार्थोवाशब्दस्तस्मात्तद्दुःखित्वादेरात्मनिसति व्यभिचारादागंतुकस्यचाविकारिण्यात्मन्यनुपपत्तेरारोपितत्व सिद्धौप्रमाणज्ञानंशुक्तितत्त्वज्ञानमिवरजतादिबाधनेनदुःखि त्वादिबाधनंकुर्वदेववाक्यादुदेतीतिनवाक्यस्यासामर्थ्यशंकाव काशइतितात्पर्यार्थः ॥ ८८ ॥

प्रत्यगात्मनआत्मत्वं दुःख्यस्मीत्य
स्य बाधया ॥ दशमं नवमस्येव
वेद चेदविरुद्धता ॥ ८९ ॥ ॥

इतश्चवाक्यंनप्रत्यक्षाद्दुर्बलमित्याह ॥ प्रत्यगात्मनइति ॥ स्पष्टार्थः ॥ ८९ ॥

नित्यमुक्तत्वविज्ञानं वाक्याद्भवति
नान्यतः ॥ वाक्यार्थस्यापि विज्ञा
नं पदार्थस्मृतिपूर्वकं ॥ ९० ॥ अ
न्वयव्यतिरेकाभ्यां पदार्थः स्मर्य
ते ध्रुवं ॥ एवं निर्दुःखमात्मानमक्रि
यं प्रतिपद्यते ॥ ९१ ॥ ॥ ॥

विस्तरेणोक्तंन्यायार्थंसंक्षिप्याहश्लोकचतुष्टयेन ॥ नित्यमुक्त त्वेत्यादिना ॥ ९० ॥ ९१ ॥

सदेवेत्यादिवाक्येभ्यः प्रमा स्फुट
तरा भवेत्॥दशमस्त्वमसीत्यस्माद्य
थैवं प्रत्यगात्मनि॥ ९२॥प्रबोधेनय
था स्वाप्नं सर्वदुःखं निवर्तते॥प्रत्यगा
त्मधियातद्वद्दुःखित्वं सर्वदात्मनः ९३

प्रमास्फुटराअपरोक्षानिगदव्याख्याताःश्लोकाः ॥९२॥९३॥

कृष्णलादौप्रमाजन्मतदन्यार्थाऽमृ
दुत्वतः ॥ तत्त्वमस्यादिवाक्येषु न
त्वेवमविरोधतः ॥ ९४ ॥ ॥

पुरोक्तकृष्णलादिपाकदृष्टांतवैषम्यंस्फुटयति ॥ कृष्णला दाविति॥प्रमायाअजन्मयत्कृष्णलादौतद्युज्यतेयतस्तत्तत्रान्यार्थाप्रमादृष्टार्थानपाकार्थाऽमृदुत्वतोमृदुत्वात्कृष्णलानामितियोजना ॥ कृष्णलपाकेपुरुषस्यानैश्वर्यादशक्यार्थेचनियोगानुपपत्तेरित्यर्थः ॥ ९४ ॥

वाक्ये तत्त्वमसीत्यस्मिन्ज्ञातार्थे त
दसिद्वयं ॥ त्वमर्थेसत्यसाहाय्या
द्वाक्यं नोत्पादयेत्प्रमां ॥ ९५ ॥ ॥

प्रकृतेनतथाविधोविरोधोस्तीत्याह॥तत्त्वमिति॥तत्त्वमस्यादिवाक्येषुत्वंपदार्थाविवेकतः॥व्यज्यतेनैववाक्यार्थइत्युक्तंप्रपंच

यंस्त्वंपदार्थविचनेयत्नाधिक्यंसूचयति ॥ वाक्येतत्त्वमिति पद त्रयात्मकेस्मिन्वाक्येतत्पदमासिपदंचेतिद्वयंज्ञातार्थंप्रसिद्धार्थंत्व मर्थेत्वंपदार्थेसत्यविज्ञातेऽसाहाय्यात्साहाय्यशून्यत्वात्सहका रिविरहाद्वाक्यमेतत्प्रमांनोत्पादयेदपरोक्षनिश्चयरूपामित्यर्थः॥ ॥ ९५ ॥

तत्त्वमोस्तुल्यनीडार्थमसीत्येतत्प
दं भवेत् ॥ ९६ ॥ ॥ ॥

असिपदस्योपयोगमाह ॥ तत्त्वमोरिति ॥ तुल्यनीडार्थंकु रुचिंतयेत्यादिक्रियाकांक्षानिवारणेनसामानाधिकरण्यसिध्यै क्यालंबनत्वस्पष्टीकरणार्थमस्यस्मीत्यादिपदमुपयुज्यतइत्य र्थः ॥ ९६ ॥

तच्छब्दः प्रत्यगात्मार्थस्तच्छब्दार्थ
स्त्वमस्तथा ॥ दुःखित्वाप्रत्यगात्म
त्वं वारयेतामुभावपि ॥ ९७ ॥ ॥

निराकांक्षेसामानाधिकरण्येसतिकोलाभइत्यपेक्षायामाह ॥ तच्छब्दइति॥प्रत्यगात्मार्थोयस्यसप्रत्यागात्मार्थस्तच्छब्दःस्या त्त्वंपदेनसामानाधिकरण्यादितियोज्यं॥तथात्वमस्त्वंपदस्यत च्छब्दार्थोऽर्थोभवेत्तत्पदेनसामानाधिकरण्यादितियोजना॥तदा वाकोलाभइति [illegible]॥दुःखित्वेति॥उभावपिशब्दौत्वमर्थस्यदुः खित्वांशंतदर्थस्याऽनात्मत्वंपरोक्षत्वांशंचवारयेतामित्यर्थः॥९७

एवं च नेतिनेत्यर्थं गमयेतां परस्परं ९८

एवंवाक्यार्थवर्णनेऽद्वितीयत्वपरश्रुत्याविरोधःसिध्यतीत्यभिप्रेत्योपसंहरति ॥ एवंचेति ॥ नेतिनेतिवाक्यसिद्धमर्थमित्यर्थः ॥१९८॥

**एवं तत्त्वमसीत्यस्य गम्यमाने फले कथं ॥ अप्रमाणत्वमस्योक्ता क्रियापेक्षत्वमुच्यते ॥ १९९ ॥ ॥**

पूर्वपक्षेश्रुतहान्यश्रुतकल्पनानिःप्रामाणिकेत्युक्तमुपसंहरति ॥ एवमिति ॥ कथंशब्दआक्षेपार्थः ॥ १९९ ॥

**तस्मादाद्यंतमध्येषु कुर्वित्येतद्विरोध्यतः ॥न कल्पामोऽश्रुतत्वाच्च श्रुतत्यागोप्यनर्थकः ॥२००॥ ॥**

यस्मादेवंविचार्यमाणेक्रियायाअनवकाशस्तस्मादित्युपसंहरति ॥ तस्मादिति ॥ आदौतत्त्वमसीतिप्रथमोपदेशेमध्येपदार्थपरिशोधनान्वयव्यतिरेकग्रहणकालेंतेचनिर्विचिकित्सब्रह्मानुभवकालेकुर्वित्येतदनुष्ठानकल्पनंतत्तदर्थप्रतिपत्तिविरोधियतोऽतोनकल्पामः नकल्पयामःक्रियामितिशेषः ॥ किंचअश्रुतत्वादपिनकल्पयामः ॥ नकेवलमश्रुतत्वात्क्रियात्याज्याश्रुतत्यागस्यानर्थकरत्वादपीत्याह ॥ श्रुतेति ॥ नहितत्त्वमर्थयोःस्वरूपमप्राप्तंचिंतनीयतयाविधातुंशक्यतेतत्प्राप्तेश्चान्यतोऽसंभवादस्मादेवतत्प्राप्तिमाशंसतोवाक्यभेदादिदोषप्राप्तिरपरिहार्यास्यात्तत्त्वमोस्तत्त्वंसिद्धमनपेक्ष्यैवयथाकथंचिच्चिंतनविधानाभ्युपग

मेचिंत्यब्रह्मसाक्षात्कारस्याप्रमात्वादविद्यानिवृत्तिफलासिद्धेर्निरर्थकःप्रसंख्यानविधिरितिभावः ॥ २०० ॥

यथानुभूयते तृप्तिर्भुजेर्वाक्यान्न
गम्यते ॥ वाक्यस्य विधृतिस्तद्व
द्गोशकृत्पायसी क्रिया ॥ १ ॥ ॥

उक्तार्थानभिज्ञःपुनराक्षिपति ॥ यथेति ॥ भुजेर्भोजनात्तृप्तिः फलंवाक्याद्वाक्यार्थज्ञानमात्रान्नगम्यतेमोक्षफलमितिशेषः ॥ तस्माद्यथागोशकृतोगोमयात्पायसीक्रियापायसकरणंनोपपद्यतेतस्यतदसाधनत्वात्तद्वद्वाक्यस्यविधृतिर्विधारणमर्थतोवधारणंनवाक्यार्थापरोक्षसाधनमित्यर्थः ॥ १ ॥

सत्यमेवमनात्मार्थवाक्यात्पारोक्ष्य
बोधनं ॥ प्रत्यगात्मनि न त्वेवं
संख्याप्राप्तिवदध्रुवं ॥ २ ॥ ॥

उत्सर्गतोवाक्यंनार्थापरोक्ष्यार्थमित्येतदंगीकुर्वन्प्रकृतेतस्यापवादकमाहसिद्धांती ॥ सत्यमिति ॥ प्रत्यगात्मनितुनैवमध्रुवमनिश्चितंकिंतुसंख्याप्राप्तिवद्दशमसंख्याप्राप्तिवदपरोक्षज्ञानसाधनत्वंवाक्यस्यध्रुवमेवेत्यर्थः ॥ २ ॥

स्वयंवेद्यत्वपर्यायः स्वप्रमाणक
इष्यतां ॥ निवृत्तावहमः सिद्धः
स्वात्मनोनुभवश्च नः ॥३ ॥ ॥

कुतइत्यपेक्षायांस्वतोऽपरोक्षप्रत्यगात्मनएवब्रह्मत्वोपदेशा दित्याह ॥ स्वयंवेद्यत्वेति ॥ स्वप्रमाणकःप्रमाणानिरपेक्षप्रका शमानतास्वभावआत्मेष्यतांस्वयंज्योतिष्ट्वादिश्रुतेरित्यर्थः ॥ त थाचवाक्यादहमोहंकारस्यब्रह्मभेदकनिवृत्तौस्वात्मनोनुभवश्च सिद्धएवनोस्माकमितिनकिंचिदनुपपन्नमित्यर्थः॥विमतंपरोक्षा ज्ञानजनकंवाक्यत्वात्संमतवदित्यादिप्रयोगेष्वनात्मविषयत्वमु पाधिर्दशमस्त्वमसीत्यादौऽव्यभिचारश्चेत्युक्तंभवति ॥ ३॥

बुद्धीनां विषयो दुःखं नो यस्य विषया मताः ॥ कुतोस्य दुःखसंबंधो दृशेः स्यात्प्रत्यगात्मनः॥४॥ ॥

अत्रदुःखानुभवविरोधशंकानकार्यादुःखस्यव्यभिचारित्वे नात्मधर्मत्वस्यनिरस्तत्वाद्विषयधर्मत्वाच्चेत्यभिप्रेत्याह ॥ बुद्धी नामिति ॥ दुःख्यहमस्मीतिदुःखधर्मवत्वेनाहंकर्तुरेवानुभवात्त स्याविषयभूतंदुःखंनबुद्धिवृत्त्याश्रयाहंकर्तृसाक्षिणआत्मनोधर्मः संभवतीत्यर्थः ॥४॥

दृशिरेवानुभूयेत स्वेनैवानुभवात्मना॥तदाभासतया जन्म धियोस्यानुभवः स्मृतः ॥ ५ ॥ ॥

सर्वधर्मरहितश्चेत्प्रत्यगात्माकथंतस्यानुभवइत्यतआह ॥दृ शिरेवेति ॥ दृशेरनुभवस्वभावत्वात्तस्यस्वरूपेकोनामान्योनुभ वोपेक्षेतेत्यर्थः ॥ तर्हिकथंतस्याविशेषानुभवइतितत्स्वरूपमाह

तदाभासतयेति ॥ चैतन्याभासव्याप्ततयाधियोजन्मैवात्मनआ
गंतुकोनुभवःस्मृतोविद्वद्भिरित्यर्थः ॥ ५ ॥

अशनायादिनिर्मुक्तः सिद्धो मोक्ष
स्त्वमेव सः ॥श्रोतव्यादि तवेत्येत
द्विरुद्धं कथमुच्यते ॥ ६ ॥ ॥

प्रकारांतरेणप्रसंख्यानप्राप्तिंनिराकरोति ॥ अशनायादीति
सर्वसंसारनिर्मुक्तोनित्यसिद्धोमोक्षोब्रह्मत्वमेवेत्याचार्योपदेशेस
तितवश्रोतव्याद्यनुष्ठेयंविद्यतइतिकथंविरुद्धमुच्यते॥नह्यविक्रि
यंब्रह्मत्वंकर्ताचेतिवचःप्रमाणंस्यादित्यर्थः ॥ ६ ॥

सेत्स्यतीत्येव चेत्तस्याच्छ्रवणादि
तदा भवेत् ॥ मोक्षस्यानित्यतैवं
स्याद्विरोधेनान्यथा वचः ॥ ७ ॥

अथतत्त्वंसेत्स्यतीति ॥ विपरिणामउपदेशवाक्यस्याभ्युपेयतइ
तिशंकामनूद्यतत्रैकंसंधित्सतोपरंप्रच्यवतइतिन्यायेनमोक्षानि
त्यत्वप्रसंगदोषमाह सेत्स्यतीति ॥ एवमुभयथाविरोधेसतिव
चोवाक्यंनान्यथानविपरिणामवद्युक्तमित्यर्थः ॥ ७ ॥

श्रोतृश्रोतव्ययोर्भेदो यदीष्टः स्या
द्भवेदिदं ॥ इष्टार्थकोप एवं स्यान्न
युक्तं सर्वथा वचः ॥ ८ ॥

इतश्चप्रसंख्यानवादोनुपपन्नइत्यतआह ॥ श्रोतृश्रोतव्ययोरिति ॥ श्रोत्रादिभेदोयदीष्टःस्यात्तदैवंप्रसंख्यानंभवेत्कर्तृकर्मभेदाभावेकार्यानुपपत्तेरित्यर्थः ॥ अस्तुभेदइतिचेत्तत्राह ॥ इष्टार्थेति जीवस्यब्रह्मभावोहीष्टार्थःसोन्यस्यान्यभावायोगाद्विहन्येतातःसर्वथावचोवाक्यंनयुक्तमयुक्तप्रमाणमेवप्रसंख्यानपक्षेभवेदित्यर्थः ॥ ८ ॥

सिद्धो मोक्षोहमित्येव ज्ञात्वात्मानं भवेद्यदि॥ चिकीर्षुर्यःसमूढात्मा शास्त्रं चोद्घाटयत्यपि ॥९॥ ॥

नयुक्तंवचइत्येतत्प्रकटयति ॥ सिद्धइति ॥ उक्तप्रकारेणात्मानंज्ञात्वायोयदिचिकीर्षुर्भवेत्समूढात्मेत्यन्वयः ॥ उद्घाटयत्युत्सादयतीत्यर्थः ॥ ९ ॥

न हि सिद्धस्य कर्तव्यं सकार्यस्य न सिद्धता ॥ उभयालंबनं कुर्वन्नात्मानं वंचयत्यपि ॥ १० ॥ ॥

मूढात्मत्वंप्रकटयति ॥ नहीति ॥ स्पष्टं ॥ १० ॥

सिद्धो मोक्षस्त्वमित्येतद्वस्तुमात्रं प्रदर्श्यते ॥ श्रोतुस्तथात्वविज्ञाने प्रवृत्तिः स्यात्कथंत्विति ॥११॥ ॥

ननु किमित्यस्मान्निंदथास्मदभिप्रायमज्ञात्वैवेतिपूर्ववादी स्वाभिप्रायमाविष्करोति ॥ सिद्धोमोक्षस्त्वमिति ॥ मुमुक्षोरात्मविज्ञानेप्रवृत्त्यर्थंसिद्धब्रह्मरूपोमोक्षस्त्वमसीतिवस्तुमात्रकथनपरमिदंवाक्यंनतत्त्वेपर्यवसितामित्यर्थः ॥ ११ ॥

कर्त्ता दुःख्यहमस्मीति प्रत्यक्षेणानुभूयते ॥ कर्त्ता दुःखी च माभूवमितियत्नो भवेत्ततः ॥ १२ ॥ ॥

उक्तमेवविवृणोति ॥ कर्तेति ॥ स्पष्टं ॥ १२ ॥

तद्विज्ञानाय युक्त्यादि कर्तव्यं श्रुतिरब्रवीत् ॥ कर्तृत्वाद्यनुवादेन सिद्धत्वानुभवाय तु ॥ १३ ॥ ॥

वाक्यश्रवणानंतरंमंतव्यइतिश्रुत्याकर्तव्यविधानादप्येवमेवाभ्युपेयमि याह ॥ तद्विज्ञानायेति ॥ त्वामितिकर्तृत्वमनूद्यवस्तुगत्यात्वंसिद्धमोक्षब्रह्मरूपोस्यतस्तज्ज्ञानाययतस्वेतिवाक्यतात्पर्यमित्यर्थः ॥ १३ ॥

निर्दुःखो निष्क्रियोऽकामः सिद्धो मोक्षोहमित्यपि ॥ गृहीत्वैव विरुद्धार्थमादध्यात्कथमेव सः ॥१४॥

नेयंकल्पनाश्रुत्यनुसारिणीतिसिद्धांतीदूषयति ॥ निर्दुःखइ

ति निर्दुःखादिविशेषणोमोक्षएवाहमितिगृहीत्वापीत्यन्वयः ॥ वाक्याद्वाक्यार्थज्ञानंनजायतएवेतिनवक्तुमुचितमप्रामाण्यप्रसंगादनुभवविरोधाच्च तथाचोत्पन्नेज्ञानेतद्विरुद्धप्रतिपत्तिर्नसंजायटीतीत्यभिप्रायः ॥ १४ ॥

सकामः सक्रियोसिद्ध इति मेनुभ
वः कथं ॥ अतो मे विपरीतस्य त
द्भवान्वक्तुमर्हति ॥ १५ ॥ ॥ ॥

यदिवाक्यादेवनिर्दुःखादिलक्षणमोक्षात्मसाक्षात्कारःकथंतर्हि तदातद्विरुद्धाकारानुभवइतिपृच्छति ॥ सकामइति ॥ अतःसकामत्वादिरूपाद्विपरीतस्यमेब्रह्मभूतस्येत्यर्थः ॥ १५ ॥

इहैव घटते प्रश्नो न मुक्त्वानुभूत
ये ॥ प्रमाणेन विरोधी यः सोत्रा
र्थः प्रश्नमर्हति ॥ १६ ॥ ॥ ॥

अन्यस्वभावस्यसतोममान्यस्वभावानुभवःकथमित्यस्मिन्नर्थे सकृच्छ्रुतवाक्यस्यपुंसःप्रश्नोघटतेयुज्यते ॥ ननुकथमहंनिर्दुःखादिरूपइतिमुक्त्वानुभवार्थेइतिप्रश्नविषयंविविच्यप्रतिवक्ति इहैवेति ॥ स्पष्टं ॥ १६ ॥

अहं निर्मुक्त इत्येव सदसीत्यन्य
मानजः ॥ प्रत्यक्षाभासजन्यत्वा
द्दुःखित्वं प्रश्नमर्हति ॥ १७ ॥ ॥

अज्ञातज्ञापनस्वंभावेनप्रमाणेनापूर्वार्थेबोधितेतद्विरोधीयः प्रमाणाभासगृहीतोर्थःसप्रश्नमर्हतीत्युक्तंप्रपंचयाति ॥ अहंनिर्मुक्तइति ॥ सदसीतियदन्यन्मानंतज्जइत्यर्थः ॥ १७ ॥

पृष्टमाकांक्षितं वाच्यं दुःखाभाव
मभीप्सितं ॥ १८ ॥ ॥ ॥

इदानींशिष्याकांक्षावशेनापिकार्यकल्पनंनघटतइत्याह ॥ पृष्टमिति ॥ किंतदाकांक्षितंतदाह ॥ दुःखाभावमभीप्सितमिति ॥ दुःखस्याभावोयस्मिंस्तदुःखाभावंब्रह्मरूपंमोक्षलक्षणमित्यर्थः ॥१८॥

कथं हीदं निवर्त्तेत दुःखं सर्वात्मना
मम ॥ इति प्रश्नानुरूपं यद्वाच्यं
दुःखनिवर्त्तकं ॥ १९ ॥ ॥

प्रश्नस्वरूपमुपन्यस्यतदनुरूपत्वंप्रतिवचनस्यानिगमयाति ॥ कथंहीति ॥ स्पष्टं ॥ १९ ॥

श्रुतेः स्वात्मनि नाशंका प्रामाण्ये
सति विद्यते ॥ तस्मादात्मविमुक्त
त्वं प्रत्याययति तद्वचः ॥ वक्तव्यं
तत्तथार्थं स्याद्विरोधेऽसति केन
चित् ॥ २० ॥ ॥ ॥

ननुपृष्टमेवोच्यतेप्रसंख्यानद्वारेणतद्व्यतिरेकेणश्रुतेर्दुःखापनयनसामर्थ्याभावादित्याशंक्यप्रमाणस्यप्रमेयावबोधनमेवकार्यं नकार्यांतरमस्तीतिपरिहरति ॥ श्रुतेरिति ॥ श्रुतेःस्वतःसिद्धेप्रामाण्येसतिस्वात्मनिस्वप्रमेयेनाशंकाविद्यतेस्वप्रमेयावभाससामर्थ्याभावाशंकानविद्यतइत्यर्थः ॥ किंततःसिद्धंतदाह ॥ तस्मादिति मुक्तत्वप्रत्ययंप्रतिकारणत्वंयातीत्यर्थः ॥ विरोधपरिहारस्य कृतत्वादितिभावः ॥ २० ॥

**इतोन्योनुभवः कश्चिदात्मनो नोपपद्यते॥ अविज्ञातं विजानतां विज्ञातारमितिश्रुतेः ॥ २१ ॥ ॥ ॥**

वाक्यस्योक्तार्थानुभवहेतुतांविहायगत्यंतरंनास्त्यनुभवमार्गगतमित्याह ॥ इतोन्यइति॥ प्रकारांतरकल्पनाचात्रानुपपन्नाश्रुतिविरोधादित्याह ॥ अविज्ञातमिति ॥ २१ ॥

**त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणां ॥ साधनत्वं व्रजत्येव शांतोदांतानुशासनात् ॥ २२ ॥ ॥**

यदुक्तंपूर्वपक्षिणाप्राक्चर्यानोशास्त्रसंविद्यास्यादनिष्टंतथासतिइतितदन्यथैवोपपत्तेर्नप्रसंख्यानकल्पकमित्याह ॥ त्वंपदार्थेति॥ शांतोदांतउपरतास्तितिक्षुःसमाहितोभूत्वात्मन्येवात्मानंपश्यतीतिश्रुतेरुपरतिशब्दनिर्दिष्टस्यसंन्यासस्यात्मज्ञानंप्रतिसाधनत्वावगमान्नतस्याशास्त्रसंवेद्यतयापरित्यागप्रसंगइत्यर्थः ॥

तथाचवाक्यार्थज्ञानस्यपदार्थज्ञानपूर्वकत्वात्पदार्थावधारणपर्यं तमेवाश्रमधर्माणांविधितोनुष्ठानंततःपरंतुवाक्यादवगतब्रह्मा त्मतत्त्वस्यमयेदमस्मैकर्तव्यमितिनियोज्यविषयप्रयोजनबुद्धे रनुत्पत्तेर्नतस्यक्कापिविधितःप्रवृत्तिःकिंतुसाधकावस्थायामभ्य स्तस्यनिवृत्तिरूपस्याश्रमधर्मस्यज्ञानाविरोधिनःसंस्कारमात्रे णानुवृत्तिर्भवतिततश्चनयथेष्टचेष्टाप्यवकाशंलभतइतिसर्वमव दातमेवास्मन्मतइतिभावः ॥ २२ ॥

त्वमर्थं प्रत्यगात्मानं पश्येदात्मान
मात्मनि ॥ वाक्यार्थं तत आत्मा
नं सर्वं पश्यति केवलं ॥२३॥ ॥

एतदेवप्रपंचयिष्यन्वाक्यार्थोदयप्रकारंश्रौतंव्युत्पादयति त्वमर्थमिति॥शांत्यादिसाधनसंपन्नोभूत्वात्मन्येवात्माभासव्या प्तस्वकार्यकारणसंघातपवनबहिरात्मानंप्रत्यक्चेतयितारंपश्ये दितिश्रुत्यर्थःप्रथमार्द्धेनोक्तःसर्वमेनंपश्यतीतिश्रुत्यर्थमुत्तरार्द्धे नाह ॥ ततइति ॥ एवंशोधितंप्रत्यगात्मानंसर्वंब्रह्मपश्यतीतिश्रु त्यर्थोदर्शितइतिद्योतयतिवाक्यार्थमिति ॥ २३ ॥

सर्वमात्मेति वाक्यार्थे विज्ञातेस्य
प्रमाणतः ॥ असत्त्वेद्यन्यमानस्य
विधिस्तं योजयेत्कथं ॥ २४ ॥

एवंविज्ञातवाक्यार्थस्याविधिगोचरतानैवसंभवतीत्याह ॥ स र्वमात्मेति ॥ स्पष्टं ॥ २४ ॥

तस्माद्वाक्यार्थविज्ञानान्नोर्ध्वं कर्म विधिर्भवेत् ॥ न हि ब्रह्मास्मिकर्त्रे ति विरुद्धे भवतो धियौ ॥ २५ ॥

वाक्यार्थविज्ञानात्प्रागेवविधयोवकाशंलभंतेनोर्ध्वमित्युपसंहरति ॥ तस्मादिति ॥ ऊर्ध्वंविध्यसंभवेहेतुमाह ॥ नहीति ॥२५॥

ब्रह्मास्मीति च विद्येयं नैव कर्तेति बाध्यते ॥ सकामो बद्ध इत्येवं प्रमाणाभासजातया ॥ २६ ॥ ॥

नन्वैक्यज्ञानेनभेदज्ञानमेवाकिमितिबाध्यतेविपरीतमेवाकिंनस्यादित्यतआह ॥ ब्रह्मास्मीतिचेति ॥ प्रमाणाभासाज्जाताप्रमाणाभासजातयेतिविग्रहः ॥ २६ ॥

शास्त्राद्ब्रह्मास्मि नान्योहमिति बुद्धिर्भवेद्दृढा ॥ यदायुक्ता तदैवंधीर्यथा देहात्मधीरिति ॥ २७ ॥ ॥

स्वभावप्रवृत्तायाबुद्धेःप्रमाणजातयाबाध्यत्वंदृष्टांतेनोपपादयति ॥ शास्त्रादिति ॥ दृढायदाभवेत्तदैवंधीःकर्त्ताहमित्येवंधीरयुक्तेत्यन्वयः ॥ यथादेहात्मधीर्मनुष्योहमित्यादिरूपाशास्त्राद्विदितात्मतत्त्वस्यनभवतितथेत्यर्थः ॥ २७ ॥

सभयादभयं प्राप्तस्तदर्थं यतते च यः ॥ स पुनः सभयं गंतुं स्वतंत्रश्चेन्न गच्छति ॥२८॥ ॥ ॥

विदितात्मतत्त्वस्यकर्त्ताकामीत्यादिधीरनवकाशेत्युक्तेर्थेदृष्टांतांतरमाह ॥ सभयादिति ॥ लोकप्रसिद्धार्थानुवादिश्लोकःस्पष्टार्थः ॥ २८ ॥

यथेष्टाचरणप्राप्तिः संन्यासादिविधौ कुतः ॥ पदार्थाज्ञानबुद्धस्य वाक्यार्थानुभवार्थिनः ॥ २९ ॥

यदुक्तंनियोगाभावेज्ञानिनोयथेष्टचेष्टाप्राप्तिरितितत्राह ॥ यथेष्टेति ॥ आदिपदाच्छ्रवणादिविधिर्गृह्यते॥पदार्थयोरासमंताज्ज्ञानंपदार्थाज्ञानंपदार्थस्वरूपालोचनंतेनबुद्धस्यदेहाद्यभिमानशून्यस्येतियावत् ॥ पदार्थाज्ञानाद्बुद्धस्यप्रतिबुद्धस्येतिवा॥ वाक्यार्थानुभवमर्थयमानस्यतत्रैवलग्नचित्तस्यकुतोयथेष्टाचरणप्राप्तिर्निमित्ताभावादवसराभावाच्चेत्यर्थः ॥ प्रबुद्धवाक्यार्थस्यतुमिथ्याज्ञानलेशस्याप्यभावात्तन्मूलायथेष्टचेष्टानोन्मिषतीतिभावः ॥ २९ ॥

अतः सर्वमिदं सिद्धं यत्प्रागस्माभिरीरितं ॥ ३० ॥ ॥ ॥

प्रकरणार्थमुपसंहरति ॥ अतःसर्वमिदमिति ॥ ३० ॥

योहि यस्माद्विरक्तः स्यान्नासौ त
स्मै प्रवर्तते ॥ लोकत्रयाद्विरक्तत्वा
न्मुमुक्षुः किमितीहते ॥ ३१ ॥ ॥

मुमुक्षोरपिनास्तियथेष्टचेष्टाकुतःसामुक्तस्यस्यादितिकैमुति कन्यायमाह ॥ योहीति ॥ ३१ ॥

क्षुधया पीड्यमानोपि न विषंत्यक्तु
मिच्छति ॥ मृष्टान्नध्वस्ततृड्जान
न्नामूढस्तज्जिघत्सति ॥ ३२ ॥ ॥

विदुषोनियोगपारतंत्र्याभावेपिभिक्षाटनादिप्रवृत्तवद्विषयांतरेपिप्रवृत्तिःकदाचित्स्यादितिचेत्तत्राह ॥ क्षुधयेति ॥ विषयाणांदुःखसाधनतावधारणपूर्वकंप्रागेवविषवत्त्यक्तानांनपुनरुपादानममूढस्यसंभवति ॥ भिक्षाटनादेस्तुज्ञाननिष्ठाविरोधाभावाच्छरीरस्थितिमात्रहेतुतयावश्यकत्वेप्यपूर्वोपचयहेतुत्वाभावाच्चसंस्कारवशादनुवृत्तिरितिनदोषइतिद्रष्टव्यं ॥ ३२ ॥

वेदांतवाक्यपुण्येभ्यो ज्ञानामृतम
धूत्तमं ॥ उज्जहारालिवद्यो नस्त
स्मै सद्गुरवे नमः ॥ २३३ ॥ ॥

उत्पन्नतत्त्वज्ञानस्ययद्यपिकिमपिकृत्यंनास्तितथापिगुरुशा

स्रेमानिनीयेएवेतिशिष्यान्शिक्षयन्निवगुरुप्रणामंनिबध्नाति ॥ वेदांतवाक्येति स्पष्टं नोस्मदर्थमित्यर्थः ॥ २३३ ॥

इतितत्त्वमसिप्रकरणमष्टादशमंविवृतं ॥ १८ ॥

प्रयुज्यतृष्णाज्वरनाशकारणं चि
किस्सितं ज्ञानविरागभेषजं ॥ न
याति कामज्वरसन्निपातजांशरी
रमालां शतयोगदुःखितां ॥ १ ॥

॥ तदेवंसंक्षेपविस्ताराभ्यांतत्त्वंपदार्थपरिशोधनपूर्वकंब्रह्मात्मैक्यलक्षणवाक्यार्थज्ञानंसफलंसर्ववेदांतप्रत्ययंप्रमाणयुक्तिभ्यामुपपादितंनित्यशुद्धबुद्धमुक्तसत्यज्ञानानंतानंदस्वभावस्य प्रत्यगात्मनोभेदविपर्यासाद्यनेकानर्थहेतुश्चाऽहंकारमनोबुद्धिचित्तवाच्यमंतःकरणमितिचतत्रतत्रोक्तं इदानींप्राधान्येनमनोध्यासनिबंधनएवात्मनःसंसारोऽतोमनःस्वरूपतःचेष्टानुसंधानेनतद्विलापनेयत्नःकार्य इत्यभिप्रायेणात्ममनःसंवादरूपंप्रकरणमारंभमाणोभगवान्भाष्यकारःप्रकरणप्रयोजनंतावदाहप्रयुज्येति ॥ चिकित्सितंचिकित्साभावेनिष्ठाज्ञानंविवेकरूपंविरागरूपंविरागऔदासिन्यंमनोवृत्तिविषयेष्वनासक्तिलक्षणंचभेषजंयस्मिंस्तच्चिकित्सितंतृष्णारूपज्वरनाशकारणंप्रयुज्य दुःखितांदुःखित्वंनयातिपुमानितियोजना ॥ कामएवज्वरस्तन्निमित्तःसन्निपातोमूर्छाआत्मानात्माविवेकलक्षणाततोजातांशरीरपरंपरांशतयोगैःसंबंधैर्दुःखितामित्यर्थः ॥ यद्वा चिकित्सितामितिभेषजविशेषणंयोज्यं ॥ सम्यग्यथाशास्त्रंसाधितमित्यर्थः १

अहं ममेति त्वमनर्थमीहसे परार्थ मिच्छंति तवान्य ईहितं ॥ न तेर्थ बोधो न हि मेस्ति चार्थिता तत श्चयुक्तः शम एव ते मनः ॥ २ ॥

भेषजप्रयोगप्रकरणमात्ममनःसंवादेनप्रपंचयति ॥ अहंममे त्यादिना ॥ हेमनअहंममेतिइदमित्यपिद्रष्टव्यंत्वमनर्थंव्यर्थमी हसेचेष्टसे ॥ ननुत्वदर्थमेवाहंचेष्टेऽतःकथमानर्थक्यामितिचेन्नाहं सांख्योयंप्रत्येवाभिमानस्तवेत्युत्तरमाह॥परार्थमिच्छंतीति ॥ त वेहितंपरार्थंपुरुषस्यभोगापवर्गार्थमन्येसांख्याइच्छंति नवयंवे दांतसिद्धांतवेदिनःविचार्यमाणेतन्मनीषितमपिमुधायतस्तेर्थबो धोनसंभवत्यचेतनत्वान्नापिमेत्वय्यर्थिताऽस्तिततश्चतेशमोलय एवयुक्तइत्यर्थः ॥ २ ॥

यतो न चान्यः परमात्सनातनात्स दैवतृप्तोहमतो न मेऽर्थिता ॥ सदैव तृप्तश्च न कामयेहितं यतस्व चेतः प्रशमाय ते हितं ॥ ३ ॥

आत्मनोर्थित्वाभावंसाधयति ॥ यतइति ॥ सनातनात्पूर्णा नंदरूपात्परमादविकारात्परमात्मनोन्योनाहंयतोतःसदैवतृप्तइ त्यादिरूपस्तस्माद्धेचेतस्त्वेप्रशमाययतस्वमुमुक्षुणामनोविलय नेयत्नःकार्यइत्यभिप्रायः ॥ ३ ॥

षड्डूर्मिमालाभ्यतिवृत्त एव यः स
एव चात्मा जगतश्च नः श्रुतेः ॥
प्रमाणतश्चापि मया प्रवेद्यते मुधैव
तस्माच्च मनस्तवेहितं ॥ ४ ॥

परमात्माभेदेनस्वस्यार्थित्वाभावउक्तस्तमेवाभेदमुपपादयति॥षड्डूर्मिमालेति॥अशनायापिपासाशोकोमोहोजरामृत्युरिति प्राणमनोदेहधर्माःषड्डूर्मयइवाविर्भावतिरोभावरूपास्तेषांमालाअविच्छिन्नाःपरंपरास्ताअभ्यतीत्यसर्वात्मनापृथक्कृत्यवृत्तःसिद्धोनिःप्रपंचइतियावत्‌यएवंविधःसएवजगतःसर्वस्यात्माचकारात्तवाहमेवात्माश्रुतेःयत्साक्षादपरोक्षाद्ब्रह्मयआत्मासर्वांतर इत्यादौश्रवणादित्यर्थः ॥ अहमात्मागुडाकेशसर्वभूताशयस्थितइत्यादिस्मृतिप्रमाणतोपि ॥ चकारात्कार्यकारणोपाधिद्वयपरामर्शमंतरेणस्वतोभेदानिरूपणादित्यादिन्यायाद्विद्वदनुभवाच्चमयाप्रवेद्यतेसम्यक्ज्ञायतेमुधैवेतिसुगमं ॥ ४ ॥

त्वयि प्रशांते न हि चास्ति भेदधी
र्यतो जगन्मोहमुपैति मायया ॥ ग्र
हो हि मायाप्रभवस्य कारणं ग्रहाद्वि
मोके नहि सास्ति कस्यचित्‌॥५॥

प्रत्यगात्मनःपरमात्माभेदंप्रामाणिकमुक्त्वाभेदप्रतिभासस्य

मनःकल्पितत्वेनाभासतामुपपादयति ॥ त्वयीति ॥ यतोभेदधि
योजगत्प्राणिजातमोहमाकुलीभावमकृतार्थताभिमानलक्षण
यामायया उपैतिनित्यंसंबध्यतेसाभेदधीस्त्वयिमनसिप्रशांतेन
चास्तिसुषुप्तौत्वदभावेतदभावदर्शनादित्यर्थः ॥ अन्वयव्यतिरे
काभ्यांभेदग्रहस्यानर्थहेतुतामुपपादयति ॥ ग्रहोहीति ॥ सुषु
प्त्यादौभेदग्रहाभावेमायामोहयोरदर्शनादित्यर्थः ॥ ५ ॥

न मेस्ति मोहस्तव चेष्टितेन हि प्र
बुद्धतत्त्वस्त्वसितो ह्यविक्रियः॥ न
पूर्वतत्त्वोत्तरभेदता हि नो वृथैव
तस्माच्च मनस्तवेहितं ॥६॥ ॥

इतश्चमनश्चेष्टितंवृथेत्याह ॥ नमेस्तीति ॥ असितोबंधरहि
तःप्रबुद्धतत्त्वस्वभावमसितत्त्वमविक्रियत्वंचव्युत्पादयति॥ नपू
र्वेति ॥ पूर्वतत्त्वंपूर्वावस्थापूर्वतत्त्वादुत्तरभेदताउत्तरकालेतत्त्व
भेदतानोस्माकंनास्ति तत्त्वप्रबोधात्पूर्वोत्तरकालयोर्नमेविशेषो
स्तीत्यर्थःहियस्मादेवंतस्मात्त्वत्कृतातिशयाभावादित्यर्थः ॥६॥

यतश्च नित्योहमतो न चान्यथा
विकारयोगे हि भवेदनित्यता ॥
सदा प्रभातोहमतो हि चाद्वयो वि
कल्पितं चाप्यसदित्यवस्थितं॥७॥

सर्वदृश्यातिवर्तित्वाच्चात्मनआगंतुकातिशयायोगंसाधयति

यतश्चेति॥अन्यथाअनित्यता ॥ ननुकुतोऽनित्यताप्राप्तिर्यानि षिध्यतेतत्राह॥विकारेति॥परिस्पंदपरिणामादिरूपविक्रियाभा वेपिप्रकाशाप्रकाशसंसर्गरूपविक्रियास्यादित्याशंक्याहसदेति ॥ सकृद्विभातोह्येवैषब्रह्मलोकःपश्यन्वैतन्नपश्यतीत्यादिश्रुतेरि त्यर्थः ॥ सतिदृश्यभेदेकथमद्वयत्वमतआह ॥ विकल्पितमिति रज्जुसर्पादिवदागंतुकत्वादसदित्यवस्थितंनिश्चितमित्यर्थः ॥ ७

अभावरूपं त्वमसीह हे मनो निरी

क्ष्यमाणे न हि युक्तितोऽस्तिता ॥

सतो ह्यनाशादसतोप्यजन्मतो द्व

यं च चेतस्तव नास्तितेष्यते॥८॥

मनसैवसद्वितीयत्वमात्मनइत्याशंक्याह ॥ अभावरूपमि ति ॥ यद्वाभेदकल्पकस्यमनसोऽभावरूपाद्पिसदाऽद्वयत्वमा त्मनइत्याह ॥ अभावरूपमिति ॥ युक्तितोनिरीक्ष्यमाणेत वास्तितानहीत्युक्तांयुक्तिमाह ॥ सतोहीति ॥ तथाचाहभगवा न् ॥ नासतोविद्यतेभावोनाभावोविद्यतेसतइतिद्वयंजन्मविना शाख्यंतेतवअतस्तवनास्तितेष्यतेपरमार्थसत्त्वंनेष्यतइत्यर्थः८

द्रष्टा च दृश्यं च तथाच दर्शनं भ्र

मस्तु सर्वस्तव कल्पितो हि सः ॥

दृशेश्च भिन्नं न हि दृश्यमीक्ष्यते

स्वपन्प्रबोधेन तथा न भिद्यते॥९॥

बीजाभावेकुतःफलमितिन्यायेनाद्वैतत्वमात्मनोविशदय
ति ॥ द्रष्टाचेति ॥ तत्रकल्पितस्त्वत्कृतःकिंचागंतुकस्याविज्ञा
तसत्त्वाभावादप्यात्माऽद्वयइत्याह ॥ दृशेश्चेति ॥ जडस्यस्वतः
स्फुरणाभावादस्फुरतश्चसत्त्वेप्रमाणाभावादित्यर्थः ॥ तथास
तिस्वपन्नात्माप्रबोधेनजाग्रदादिनानभिद्यते ॥ यथास्वापावस्था
यामद्वितीयएवतथावस्थांतरेपीत्यर्थः ॥ स्वापेचाद्वितीयत्वंस
लिलएकोद्रष्टाऽद्वैतोभवति ॥ अथास्मिन्प्राणएवैकधाभवतित
देवंवाक्सर्वैर्नामभिःसहाप्येतीत्यादिश्रुतिसिद्धं ॥ ९ ॥

**विकल्पना वापि तथाद्वया भवेद**
**वस्तुयोगात्तदलातचक्रवत् ॥ न श**
**क्तिभेदोस्ति यतो नचात्मनां ततो**
**द्वयत्वं श्रुतितोऽवसीयते ॥ १० ॥**

एवंविकल्पाभावेपिविकल्पनासत्यास्तीतिपुनरद्वैतानुपपत्ति
रित्याशंक्याह ॥ विकल्पनावापीति॥तथाद्दश्यवदेवविकल्पना
पिनभिद्यतइतिपूर्वश्लोकगतानुकर्षणार्थोवाशब्दः॥ किंत्ववस्तु
योगादवस्तुविषयकतयातन्निरूप्यत्वादद्वयाधिष्ठानातिरिक्तस्व
रूपरहिताभवेत्तत्रलोकेत्वलातचक्रवद्भ्रमदुल्मुकस्यचक्राकार
त्ववदितियोजना॥यथाभ्रमतोलातस्यचक्राकारतानपृथक्वस्तु
तथाविकल्पनापिचिदात्मातिरेकेणपृथग्वस्तुसतीनभवतीत्य
र्थःतथापिनात्मनोऽद्वयत्वंदृष्टिश्रुतिमत्यादिशक्तिरूपस्यस्वगत
भेदस्यसत्त्वात्तथाप्रतिशरीरमात्मभेदप्रथनात्सजातीयभेदोपप
त्तेश्चेत्याशंक्यश्रुतिविरोधान्मैवमित्याह॥नशक्तिभेदइति॥ तथा

चश्रुतिः॥ अकृत्स्नोहिसःप्राणन्नेवप्राणोनामभवतिवदन्वाक्पश्यं श्चक्षुःशृण्वन्श्रोत्रंमन्वानोमनस्तान्यस्यैतानिकर्मनामान्येवेति चिदात्मनोदृष्ट्यादिभेदस्योपाधिकतांदर्शयति ॥ एकोदेवोबहुधा निविष्टःएकंसंतंबहुधाकल्पयंति॥एकस्तथासर्वभूतांतरात्मेत्या दिश्रुतिरात्मनःसर्वत्रैकत्वमाह ॥ तथाभेदनिषेधश्रुतिस्मृतयो प्यत्रोदाहार्याः ॥ १० ॥

मिथश्च भिन्ना यदि ते हि चेतनाः
क्षयस्तु तेषां परिमाणयोगतः ॥
ध्रुवो भवेद्भेदवतां हि दृष्टतो जगत्क्ष
यश्चापि समस्तमोक्षतः ॥ ११ ॥

आगमबाह्यानामात्मभेदकल्पनांयुक्त्यानिराकरोति ॥ मि थश्चेति ॥ चेतनाआत्मानोयदिमिथोभिन्नाःस्युस्तर्हिभिन्नाः स्तेपरिमितायथामूलांकुरादयोयेचपरिमितास्तेविनाशि नस्तद्व देवेत्यात्मनांविनाशित्वप्रसंगइतिसमुदायार्थः ॥ परिमाणयोग तस्तेषांक्षयस्तुध्रुवोभवेत् ॥ भेदवतांहिदृष्टतोविनाशदर्शनादि तियोजना॥ किंचभेदपक्षेएकैकस्मिन्कल्पेएकैकमुक्तावप्यनंते षुगतकल्पेष्वनंतानांजीवानांमुक्तिसंभवादिदानींसमस्तमोक्ष तोभोक्त्रभावेतदर्थानांभोग्यानांजगतांक्षयश्चापिभवेदतोभेदप क्षोदुर्युक्तिकइत्यर्थः ॥ ११ ॥

न मेस्ति कश्चिन्न च सोस्मि कस्य
चिद्यतोद्वयोहं न हि चास्ति कल्पि

तं ॥ अकल्पितश्चास्मि पुरा प्रसि
द्धितो विकल्पनाया द्वयमेव क
ल्पितं ॥ १२ ॥ ॥ ॥



ननुतवापिजगज्जीवेश्वरादिभेदस्यविद्यमानत्वात्कथमुक्त
दोषपरिहारइत्याशंक्याह ॥ नमेस्तीति ॥ यतोहमद्वयोवस्तुतो
मेगुणभूतःप्रधानभूतोवान्याहशोवानकश्चिदस्ति ॥ यस्यापिक
स्यचिदहमस्मिसोपिनचास्तीतिसंबंधः यच्चकल्पितंजगत्तच्चन
ह्यस्तितथाचजीवेश्वरजगद्भेदस्यमय्यद्वयेकल्पितत्वात्कल्पित
स्यप्रमाणासहिष्णुतायाअलंकारत्वान्नास्त्यस्मादुक्तदोषप्रसंगइ
त्यर्थः ॥ ननुद्वैतवदद्वैतस्यापिपदार्थत्वाविशेषात्कल्पितत्वंतद
वस्थमित्याशंक्यनिरधिष्ठानकल्पनायोगान्निरवधिकबाधायोगा
च्चसर्वकल्पनायाःप्रागेवसिद्धकल्पितबाधावधितयापश्चादप्यव
शिष्यमाणंनकल्पितं ॥ किंतुस्वतःसिद्धंवस्त्वद्वयशब्देनोच्यत
इत्याह॥अकल्पितइति॥विकल्पनायाःपुराप्रसिद्धितोहमकल्पि
तोस्मिचकारादूर्ध्वमप्यवधिभूतत्वान्मध्येचतत्साक्षित्वादकल्पि
तएवास्मीतिगृह्यतेपरिशेषात्सापेक्षंद्वयमेवकल्पितमित्यर्थः १२

विकल्पनाचाप्यभवे न विद्यतेस
दन्यदित्येवमतो न नास्तिता ॥ य
तः प्रवृत्ता तव चापि कल्पना पु
रा प्रसिद्धेर्न च तद्विकल्पितं॥१३॥

उक्तमेवस्पष्टीकुर्वन्नात्मनोविकल्पनाद्यविषयत्वमाह ॥ विकल्पनाचापीति ॥ नास्तिभवउत्पत्तिर्यस्यतदभवंतस्मिन्नभवेनित्येसदन्यत्सतोन्यदसदित्यपिविकल्पनानचविद्यतेऽतएवंसतिननास्तिता ॥ आत्मनोनित्यत्वादित्यर्थः ॥ किंचामनस्कस्यकल्पनानुदयान्मनसश्चागंतुकतयास्वरूपसत्ताभावात्तदपिसविलासंयत्रकल्पितंतन्नकल्पनालंबनंकिंतुसर्वकल्पनासाक्षित्वेनपूर्वापरकालकलनाकलितंकूटस्थमेवात्मतत्त्वमित्याह ॥ यतइति ॥ तवमनसइत्यर्थः ॥ त्वत्कल्पनायाअपिपुराप्रसिद्धेरित्यर्थः ॥ १३ ॥

**असद्द्वयं तेपि हि यद्यदीक्ष्यते न दृष्टमित्येव न चैव नास्तिता ॥ यतः प्रवृत्ता सदसद्विकल्पना विचारवद्वापितथाद्वयं च सत् ॥ १४ ॥**

ननुयदुपलभ्यतेतदस्तीत्यभ्युपगम्यतेतन्नास्तीत्युपलभ्यतेचद्वैतंनाद्वैतमित्याशंक्यदर्शनादर्शनेनवस्तुसत्त्वासत्त्वयोःकारणेकिंत्वन्यएवतन्निश्चयहेतुरित्यभिप्रेत्याह॥ असद्वयमिति ॥ हेमनस्तेतवगोचरीभूतंयद्यदीक्ष्यतेतत्तद्द्वयंद्वैतंदृष्टमप्यसत् ॥ स्वप्नवद्दृष्टनष्टस्वरूपत्वात्तथानदृष्टंनदृश्यतइत्येवमेता वतावस्तुतोनास्तिनहिनीरूपस्यवायोश्चक्षुषानुपलंभेपिनास्तिताभवतिकिंत्वस्तित्वैवसतोपिवस्तुनोद्रष्टुरसामर्थ्याद्वादर्शनायोग्यत्वाद्वाप्यदर्शनसंभवादित्यर्थः ॥ नन्वदृष्टमपिनास्तीतिशशशृंगादिप्रसिद्धंसत्यंतथापिलब्धरूपंकचित्तुकिंचित्तादृगेवनिषिध्यतेविधा

नमंतरेणातोननिषेधस्यसंभवइतिन्यायेनद्वैतमस्तिनास्तीतिवि प्रतिपत्त्यालंबनंकिमप्यास्थेयमेवान्यथाविकल्पप्रसरायोगादि त्यभिप्रेत्याह ॥ यतःप्रवृत्तासदसद्विकल्पनेति ॥ यतोयस्मिन्न धिष्ठानेप्रतीयमानाविकल्पनातदस्त्यकल्पितरूपमित्यर्थः ॥ वि कल्पालंबनत्वेनाधिष्ठानसत्तामुक्त्वाऽवधित्वेनापितत्सत्त्वमाह॥ विचारवद्वेति वाशब्दश्चार्थः यथाविचारोनिर्णयमंतरेणनपर्यव स्यातितथासदद्वयंविनानविकल्पःप्रशाम्यति ॥ अतःसर्पधारा दंडमालादिविकल्पेष्वनुगम्यमानतयाअधिष्ठानत्वेनपुनःसर्व विकल्पनिषेधावसानतयावधित्वेनानुवर्त्तमानाऽविकल्पितानि षिद्धरज्जुस्वरूपवदध्यात्मादिविकल्पाधिष्ठानसन्मात्रत्वेनतन्नि षेधावधित्वेनचाविकल्पितमनपोह्यंचात्मतत्त्वमद्वयमस्तीत्येवो पलब्धमितितात्पर्यार्थः ॥ १४ ॥

**सदभ्युपेतं भवतोपकल्पितं विचार हेतोर्यदि तस्य नास्तिता ॥ विचार हानाच्च तथैव संस्थितं न चेत्तदिष्टं नितरां सदिष्यते ॥ १५ ॥**

किंचोक्तविधयादर्शनमात्रात्सत्त्वासत्त्वनिश्चयासंभवाद्विचा रोभ्युपेयस्तस्मिंश्चक्रियमाणेसदेवाद्वयमवशिष्यतइत्यभिप्रे त्याह ॥ सदभ्युपेतमिति॥सद्वस्तुनास्तीतिवदतातन्निर्णयायवि चारोभ्युपगम्यतेनवायदिसोभ्युपगम्यतेतदाभवतासद्वस्त्वभ्यु पेतंयतोविचारहेतोर्विचारसिद्ध्यर्थमुपकल्पितमुपस्थापितंकिम पिवस्तुसर्वैर्विचारकैरितियोजना॥ विचारोहिप्रमाणव्यापारस्य

फलावसानत्वनिश्चयंहेतुस्तर्कः सचनप्रमेयमंतरेणप्रसरमुपल भतेप्रमितंचनबाध्यतइतिसद्वस्तुसिद्धिरित्यर्थः ॥ विपक्षेबाधक माह॥यदीति॥यदितस्यसद्वस्तुनोनास्तितातदाप्रमाणप्रमेयप्रमा तृनिरूप्यस्याविचारस्य हानादप्रवृत्तेश्चकारात्सदभावनिर्णयहा नाच्च ॥ तथैवसंस्थितमनिर्णीतमेवसंस्थितंतथाचवस्तुतत्त्वान वधारणादैहिकामुष्मिकार्थप्रवृत्तिहानिःस्यादितिभावः ॥ एतेन विचारानभ्युपगमपक्षेचदोषउक्तोवेदितव्यः ॥ अथाविचारित मनिर्णीतंचतत्किमपिनेष्टंचेत्तर्हिविचारानिर्णययोःसदवसानमंत रेणपर्यवसानाभावान्नितरांसदिष्यतेसद्वस्त्विष्यतएवेत्यर्थःयद्वा हेमनोभवतोपकल्पितंद्वैतजातंविचारसिद्ध्यर्थंसदभ्युपेतमात्म तत्त्वनिश्चयफलविचारप्रवृत्तयेऽस्तीतिद्वैतमंगीकृतमित्यर्थः ॥ यदिपुनस्तस्यनास्तिता शून्यतैवद्वैतस्यस्यात्तदाविचारहानाद्वि चाराप्रवृतेश्चकारात्परमार्थनिर्णयाभावाच्च ॥ तथैवाविचारि तमनिर्णीतंचतत्त्वंसंस्थितंस्यात् ॥ अथतत्त्वानिर्णयेपुरुषा र्थासिद्धेस्तदनिर्णीतस्वभावमिष्टंनचेत्स्यात्तर्हिनितरांसादिष्यते विचार्यनिर्णयेसातिसर्वस्यसदवसानत्वाव्यभिचारादित्यर्थः॥क्वो व्यंतरस्फुरणंविनानसंशयावतारस्तेनविनानविचारप्रवृत्तिस्ता मृतेनवस्तुतत्त्वनिर्णयस्तेनचविनानपुरुषार्थलाभइतिविचारार्थ तयायथाप्रतिपन्नंद्वैतमभ्युपगतंनप्रामाणिकत्वेनतथाचभुजंगंर ज्जुत्वेनव्यवहरतइवातत्त्वंतत्त्वबुध्याव्यवहरतोनर्थप्राप्तिसंभ वात्तत्परिहारायविचारेऽवश्यंभाविनिक्रियमाणेसर्वेषुविशेषेष्व स्तितायाअव्यभिचाराद्विशेषणाव्यभिचारान्मिथोव्यभिचारि णांचानृतत्वात्सन्मात्रमेवसत्यंनद्वैतरूपोविशेषाकारइतिनित रांसिध्यतीतिभावः ॥ १५ ॥

असत्समं चैव सदित्यपीति चेदन
र्थवत्त्वान्नरशृंगतुल्यतः ॥ अनर्थव
त्त्वं त्वसति ह्यकारणं न चैव तस्मा
न्न विपर्ययेऽन्यथा ॥ १६ ॥

भवत्वेवंविचारान्यथानुपपत्त्यासद्वस्तुसिद्धिस्तदर्थक्रियांक रोतिनवाआद्ये क्षणिकत्वापत्तिरित्याभिप्रेत्य द्वितीये तस्यनरशृंगादेरविशेषइतिबौद्धःशंकते ॥ असत्सममिति ॥ अनर्थत्वादर्थक्रियारहितत्वादित्यर्थः ॥ श्रौतंसदसत्सममर्थक्रियाशून्यत्वान्नरशृंगवदित्यनुमानमप्रयोजकत्वेनदूषयति ॥ अनर्थवत्त्वमिति ॥ अनर्थवत्त्वंत्वसतिअसत्त्वेसाध्येनकारणंप्रयोजकं नभवति ॥ स्वभावसत्त्वसंभवादित्यर्थः ॥अनर्थक्रियाकारित्वस्यासत्त्वव्याप्तौसंदिग्धानैकांतितामुक्त्वाऽर्थक्रियाकारित्वस्यसत्त्वव्याप्तावनैकांतितामाह ॥ नचैवतस्मादिति ॥ तस्मादर्थक्रियाकारित्वान्नैवसत्त्वंपदन्यासाद्यर्थक्रियाकारिणिकंटकाद्यभावे सत्त्वव्यभिचारादित्यर्थः ॥ हेतुनिरसनमुपसंहरति ॥ नविपर्ययेन्यथेति ॥ विपर्ययेऽर्थक्रियाकारित्वाभावेनान्यथाअसत्त्वं नसंभवतिक्रियोत्पत्तेःपूर्वमुदासीनवस्तुदर्शनादन्यथासत्त्वार्थक्रिययोरन्योन्याश्रयापातादित्यर्थः॥ १६ ॥

असिद्धतश्चापि विचारकारणाद्द्वयं
च तस्मात्प्रसृतिं च मायया ॥ श्रु

# सतोह्यसत्त्वादसतश्च सत्वतो न च
# क्रियाकारकमित्यतोप्यजं॥२०॥

सद्वस्तुनःकूटस्थाद्वयत्वंश्रुत्यादिप्रमाणसिद्धंतदन्यथाविकल्प नंपुरुषापराधनिबंधनमित्युक्तमिदानींतदेवयुक्तितोद्रढयितुमुप क्रमते भवाभवत्वमिति ॥ तुश्चार्थःकिंचेत्यर्थे द्वैतमुत्पद्यमान स्वभावमनुत्पद्यमानस्वभावमुभयस्वभावंवा ॥ नाद्यस्तदासा पेक्षत्वेनशुक्तिरजतादिवन्मिथ्यात्वापातात् ॥ नद्वितीयः ॥ स दातनत्वापत्तौतदभावव्यवहारानुदयप्रसंगात् ॥ नतृतीयः ए कस्यविरुद्धोभयस्वभावत्वायोगादित्यभिप्रेत्यचतुर्थमनूद्यदूषय ति ॥ भवाभवत्वमिति ॥ भवश्चाभवश्चभवाभवौतयोर्भावःभ वाभवत्वमस्यद्वैतस्यभवाभवत्वंचेद्विरोधान्नेष्यतेतदावस्थितिर वस्थानंसत्त्वंनचस्यादितिशेषः ॥ नह्युभयस्वभावविलक्षणंक चित्सदुपलब्धमस्तीत्यर्थः ॥ चापरंयदिद्वैतस्यजन्मेष्यतेतदा स्वतएवजन्मासंभवादन्यस्मात्तद्वक्तव्यं तदपिसत्स्वभावमस त्स्वभावंवायतोऽद्वैतस्यजन्मेत्याकांक्षायांसर्वथापिनोपपद्यतइ त्याह ॥ अन्यस्थितिजन्मनान्यथेति ॥ अन्यस्मिन्नस्थितौस तिनजन्मसतोनजन्मेत्यर्थः ॥ अन्यथान्यस्थितौजन्मनेत्युपर ज्यतेअसतोपिनजन्मेत्यर्थः॥पक्षद्वयेपिदूषणमाह ॥ सतइति ॥ सतउपादानत्वेविकारित्वापत्तौविनाशादसत्त्वप्रसंगादसत श्चोपादानत्वेसत्वतःसत्त्वापत्तेःनहिशून्यमुपादानंस्यात्तस्यकार्ये ष्वननुगमादित्यर्थः ॥ तथाचवस्तुनःस्वभाववैपरीत्यायोगान्न सत्कार्यंद्वैतात्मनाजायतेनाप्यसदित्युत्पत्तिपक्षोऽपिदुर्निरूपइ तिभावः ॥ एवमुत्पाद्योत्पादकयोःस्वभावनिरूपणेसत्युत्पत्ति

तत्कारकविशेषयोःसुतरामनिरूपिताकारतासिद्धेत्याह ॥ नच क्रियाकारकमिति ॥ उपसंहरति ॥ अतोप्यजमिति ॥ उक्तयुक्तितोप्यजंनिर्विशेषमद्वयमात्मतत्त्वमित्यर्थः ॥ २० ॥

**अकुर्वदिष्टं यदि वास्य कारकं न किंचिदन्यन्ननु नास्त्यकारकं ॥ सतो विशेषादसतश्च सद्युतौ तुलां तयोर्यद्वदनिश्चयान्न हि ॥ २१ ॥**

नचक्रियाकारकमित्युक्तमेवस्फुटयन्नजत्वंवस्तुनःसाधयति ॥ अकुर्वदिति ॥ अस्यद्वैतजन्मनःकारकमकुर्वदिष्टंनिर्व्यापारं कारकमिष्टंचेदित्यर्थः ॥ अन्यदितिद्वितीयपादस्थंपदमादायय दिवान्यत्कुर्वदिष्टंवेत्यर्थः ॥ तत्राद्येतिप्रसंगंदोषमाह ॥ नाकिंचिदन्यन्ननुनास्तीति ॥ ननुनिश्चितंकिंचिदपिकारकंनास्तीतिन अपितुसर्वंसर्वस्यसर्वदाकारकंस्यादित्यर्थः ॥ द्वितीयेकारकत्वानुपपत्तिदोषमाह ॥ अकारकमिति ॥ अक्रियस्यकुर्वत्वायोगाक्रियावत्त्वेनित्येसदाकार्यप्रसंगादनित्येचक्रियावदंतरापेक्षायामनवस्थाप्रसंगात्तदनपेक्षायामात्माश्रयापत्तेःकुर्वत्वपक्षे कारकत्वासिद्धिरित्यर्थः ॥ अथवाप्रथमेविकल्पेनकिंचिदकारकमितिनिराकरणपदान्वयःसर्वमेवकारकंस्यादित्यर्थः ॥ द्वितीयदूषणंननुनास्तीतिकुर्वतःकारकत्वानिरूपणादित्यर्थः ॥ कथमनिरूपणमितिचेत्तत्रवक्तव्यं किंसदवस्थंकुर्वदसदवस्थंवा नोभयथापीत्याह ॥ सतोऽविशेषादसतश्चेति ॥ असतश्चाविशेषा

दितिसंबध्यते विशेषवत्त्वेवैरूप्यापत्तेरविशेषेचसदाकार्यंस्यान्न वास्यादित्यर्थः॥ अथसतोसतोवापूर्वसत्त्वासत्त्वप्रच्युत्यवस्थायां कार्यंस्यादितिभवेत्कारकत्वमितिमतंतत्रावस्थाप्रच्युतिकार्ययो र्यौगपद्यमभिमतंक्रमोवानाद्यइत्याहसच्युतावितिव्यवस्थायां कार्यमितिउपलक्षणमसच्चयुतौचतुलाया अंतयोःकोट्योर्यद्वन्नम नोन्नमनमनुभवतोःकार्यकारणभावोननिश्चीयते ॥ तथाकार्य कारणस्वरूपभेदोनहिनिश्चीयतइत्यर्थः ॥ द्वितीयेऽनवस्थाप्रसं गोऽवस्थाप्रच्युतेरपिकार्यतयातस्या अपितथाविधपूर्वकत्वापेक्ष णादितिद्रष्टव्यं ॥ २१ ॥

**न चेत्स इष्टः सदसद्विपर्ययः कथं**
**भवः स्यात्सदसद्व्यवस्थितौ ॥ वि**
**भक्तमेतद्द्वयमप्यवस्थितं न जन्म**
**तस्माच्च मनो हि कस्यचित् ॥२२॥**

वस्तुनोवस्थांतरापत्तिमभ्युपगम्यैतदवोचामवस्तुसतोसतो वाऽवस्थांतरंनोपपद्यतइतिनकस्यापिकार्यत्वंकारणत्वंवाविद्य तइत्याह ॥ नचेदिति॥ एवमुक्तदोषपरिहारात्सदसद्विपर्ययश्चे न्नेष्टस्तदासदसतोःस्वरूपव्यवस्थितौभवःकथंस्यात्कुतोयतएत द्द्वयमपिसच्चासच्चविभक्तंपरस्परसंसर्गशून्यंव्यवस्थितं नपूर्वाप रीभावोऽनयोर्मिथोवान्यापेक्षयावेत्यर्थः ॥ हेमनाहियस्मादेवं तस्मान्नकस्यचिदपिजन्मविद्यतइत्यवधारयेत्यर्थः ॥२२॥

**अथाभ्युपेत्यापि भवंतवेच्छतो ब्र**

वीमि नार्थस्तव चेष्टितेन मे ॥ न हानवृद्धी न यतः स्वतोसतो भवो न्यतो वा यदि वास्तिता तयोः॥२३॥

भवतुवाजन्मयस्यकस्यापितथापिनमेब्रह्मभूतस्यकाचित्क्षतिर्वृद्धिर्वेत्याह ॥ अथाभ्युपेत्यापीति ॥ मनसश्चेष्टितेनात्मनो नार्थोस्तीत्येवतत्प्रपंचयति नहानवृद्धीति मेस्तइतियोज्यं कुत इत्यतआह ॥ नयतइति ॥ यतोयस्माद्सतआत्मन्यविद्यमानस्यहानस्यवृद्धेर्वाभवउद्भवःस्वतोन्यतोवाहेत्वंतराद्वानसंभवतीतियोजना ॥ यदिवातयोर्हानवृद्धयोर्यद्यात्मन्यस्तितातथापितवचेष्टितेनमेनार्थइतिसंबंधः ॥ सिद्धेर्थेत्वचेष्टाया अकिंचित्करत्वादित्यर्थः ॥ २३ ॥

ध्रुवा ह्यनित्याश्च न चान्ययोगिनो मिथश्च कार्यं न च तेषु युज्यते ॥ अतो न कस्यापि हि किंचिदिष्यते स्वयं च तत्त्वं न निरुक्तिगोचरं ॥ २४ ॥ ॥ ॥

हीयमानोपचीयमानयोरात्मनिसंबंधानिरूपणाच्चनहानवृद्धीस्तइत्याह ॥ ध्रुवाइति॥ध्रुवाःस्थिराःकूटस्थाअनित्याःक्षणि

काश्चपदार्थाहिनिश्चितमन्ययोगिनोनभवंतिस्थिराणामविका रित्वात्क्षणिकानामन्यसंबंधकालपर्यंतमवस्थानासंभवादित्य त्यर्थः ॥ मिथश्चान्योन्यमपिस्थिरास्थिरयोर्नसंबंधित्वंसंभवति संबंधस्यसंबंधिसंबद्धत्वविकल्पासहत्वादित्यर्थः ॥ अतएवतेषु नकार्यंकिमपियुज्यतेघटतेसंबंधिताविकारभेदसत्त्वनिराकरण मुपसंहरत्यतइति ॥ नकिमपिकस्यापिसंबंधिपरमार्थतइष्यत इत्यर्थः ॥ ननुकथमात्मनोन्यसंबंधाभावोवेदांतवाक्यप्रमाणंप्र तिप्रमेयत्वोपगमादित्यतआह॥स्वयंचेति॥तत्त्वमात्मस्वरूपंस्व यंनिरुपाधिकं ननिरुक्तेर्वाक्यस्यमुख्ययावृत्त्यागोचरोविषयः शब्दप्रवृत्तिनिमित्तधर्माभावात्किंतुलक्षणयाशब्दस्यतत्रपर्यव सानमपेक्ष्यवेदांतप्रमेयत्वंतस्यांगीकृतमित्तिनविरोधइत्यर्थः ॥ ॥ २४ ॥

**समं तु तस्मात्सततं विभातवद्द्वया द्विमुक्तं सदसद्विकल्पितात् ॥ निरी क्ष्य युक्त्या श्रुतितश्च बुद्धिमान शेषनिर्वाणमुपैति दीपवत् ॥२५॥**

तदेवंदुर्निरूपद्वैतसाक्षिणोऽसंगाऽद्वयानंदरूपस्यस्वप्रकाश तयाप्रकाशमानंस्वरूपंश्रुतियुक्तिभ्यांनिश्चित्यपुमान्कृतकृत्यो भवतीतिद्वैताभासनिराकरणफलमुपसंहारव्याजेनाह॥समंत्वि ति ॥ सत्त्वासत्त्वाभ्यांविकल्पिताद्द्वयाद्वैतावभासात्सततंविमु क्तमितिसंबंधः ॥ सततंसमंविभातवत्प्रकाशमानमिति योजना ॥ दीपवत्सहसैवाशेषस्यबंधस्यनिर्वाणंपरिसमाप्ति

मुपैतिनिरीक्षणनिर्वाणयोर्नऽव्यवधानंकिमप्यस्तीत्यर्थः॥२५॥

अवेद्यमेकं यदनन्यवेदिनां कुता
र्किकाणां च सुवेद्यमन्यथा ॥ नि
रीक्ष्य चेत्थं त्वगुणग्रहोऽगुणं न या
ति मोहं ग्रहदोषमुक्तितः ॥ २६ ॥

उक्तलक्षणस्यात्मतत्त्वस्यनिरीक्षणंकिंविषयत्वेनाविषयत्वेन वेतिजिज्ञासायामविषयत्वेनैवेत्याह ॥अवेद्यमिति॥सर्वसाक्षिप्रत्यगात्मनोन्यन्नभवत्यद्वयंब्रह्मेतियेवेदिनस्तेषामनन्यवादिनामवेद्यं ॥अन्यथाभेदेनविषयतयावेदिनांकुतार्किकाणांसुवेद्यंपरिच्छिन्नतयासुज्ञेयं॥शास्त्रयुक्तिविचारप्रयासंविनास्वमत्यनुसारेणसुखबोधमित्यर्थः॥गुणेषुसत्त्वादिषुसविकारेषुग्रहोऽभिनिवेशोयस्यसगुणग्रहोनगुणग्रहोऽगुणग्रहःपुमान्देहाद्यभिमानहीनज्ञइतियावत् ॥ अगुणंनिर्विशेषमात्मतत्त्वमित्थमवेद्यमित्याद्युक्तरूपंनिरीक्ष्यालोच्यचकारादपरोक्षतयानुभूयमोहंनयातितत्र हेतुमाह॥ग्रहदोषमुक्तितइति ॥ ग्रहरूपाद्दोषान्मुक्तितोमुक्तेःमोहहेत्वज्ञानतत्कार्यबाधादित्यर्थः॥ २६ ॥

अतोन्यथा न ग्रहनाश इष्यते वि
मोहबुद्धेर्ग्रह एव कारणं॥ ग्रहोप्यहे
तुस्त्वनलस्त्वनिंधनो यथा प्रशां
तिं परमां तथा व्रजेत् ॥२७॥ ॥

कस्मादेवंमहताप्रयत्नेनाविषयतयाब्रह्मात्मनोवेदनमिष्य तेतत्राह॥अतोन्यथेति॥अतउक्तविधादात्मज्ञानादन्यथान्यस्मा द्धेत्वंतरात्प्रकारांतराद्वानग्रहनाशोमिथ्याज्ञाननिवृत्तिरिष्यते ॥ नान्यःपंथाविद्यतेऽयनायेतिश्रुतेः ॥ मास्तुतर्हिग्रहनाशइत्य तआह॥विमोहेति ॥ ग्रहेसकारणेसतिविमोहबुद्धेर्देहगेहादाव हंममेत्याद्यभिनिवेशाधियःसर्वानर्थबीजभूतायाअनिवृत्तिःस्या दित्यनिर्मोक्षप्रसंगइत्यर्थः ॥ ननुभवतुग्रहनाशान्मोहनाशोग्र हनाशएवकुतोब्रह्मात्मज्ञानादितिचेन्नज्ञानादज्ञानस्यैवनिवृत्ति संभवाद्ग्रहनिवृत्तिकारणमन्यदेष्टव्यमित्याशंक्याज्ञानकार्यत्वा द्ग्रहस्यतन्निवृत्तौस्वयमेवनिवर्ततइतिसदृष्टांतमाह ॥ ग्रहोपी ति ॥अहेतुर्निरुपादानःउपादाननिवृत्तौपुनःप्ररोहहेत्वभावात्प रमांनिरतिशयांशांतिमुपशांतिंमोक्षलक्षणांव्रजेदित्यर्थः ॥२७॥

विमथ्यवेदोदधितः समुद्धृतं सुरैर्म
हाब्धेरुक्त यथा महात्मभिः॥ तथा
ऽमृतं ज्ञानमिदं हि यैः पुरा नमो गु
रुभ्यः परमीक्षितं च यैः ॥२८॥

प्रकरणसमाप्तौगुरुनमस्काररूपंमंगलमाचरति ॥ विमथ्ये ति ॥यथासुरैर्देवैर्महात्मभिर्महाब्धेःक्षीरसागरादमृतंसमुद्धृतंपु रापूर्वंतथायैर्महात्मभिःगुरुभिर्वेदरूपादुदधितोविमथ्यालोड्ये दंप्रकरणरूपेणमयाप्रकाशितंज्ञानामृतंसमुद्धृतंपुरापूर्वंतथायैः परंपरमात्मतत्त्वंचेक्षितमपरोक्षीकृतंतेभ्योगुरुभ्योनमइतियो जना॥ अथवायैर्गुरुभिर्निमित्तभूतैर्मयापरंचेक्षितमितियोजना

॥ तस्मादात्मज्ञंह्यर्चयेद्भूतिकामइत्यादिश्रुतेः ॥ निरपेक्षंमुनिंशांतंनिर्वैरंसमदर्शनं ॥ अनुव्रजाम्यहंनित्यंपूयेयमंघ्रिरेणुभिरितिभगवद्वचनाच्चयुक्तमत्रगुरुसुज्ञपूजनमित्यर्थः ॥ २८ ॥

उपदेशसहस्रीयंविवृताहिमहात्मभिः ॥श्रद्धावेशान्मयाप्यस्याः पदयोजनिकाकृता ॥ १ ॥ समस्तवेदार्थरहस्यगद्यपद्यप्रबंधार्थत्रयावबोधः॥कथंनुमादृक्षुतिबिंबितःस्यादथापिभक्त्याहमिहाऽस्मिनुन्नः ॥ २ ॥ हृद्यंतराविष्कृतराममूर्तेस्तथागुरूणांविपुलप्रसादात् ॥ यथाकथंचिद्विचितेनविष्णुरनेनतुष्यत्वखिलांतरात्मा॥३॥ इतिश्रीमच्छंकराचार्यकृतोपदेशसाहस्र्याःपदयोजनिकानामटीकाकृष्णतीर्थशिष्यरामतीर्थविरचितासमाप्ता ॥

# (१) अनुद्भूतरूपादिखण्डनवादवीचिः ।

## तत्र उद्भूतत्वानुद्भूतत्वस्वरूपनिर्वचनम् ।

ननु रूपं द्विविधमुद्भूतमनुद्भूतं च । तत्र घ्राणरसनचक्षुःपिशाचादीनां भर्जनकपालस्थवह्न्याद्यूष्मणोश्चानुद्भूतं रूपमुद्भूतरूपं च घटपटादीनाम् । न च तादृशद्वैविध्ये मानाभावः, उद्भूतत्वानुद्भूतत्वयो रूपनिष्ठधर्मयोरनभ्युपगमेऽपि क्षतिविरहादिति वाच्यम् । द्रव्यचाक्षुषं प्रति सामान्यतो रूपत्वेन कारणत्वे घ्राणादीनामपि चाक्षुषापत्त्या उद्भूतरूपत्वेनैव तत्र हेतुत्वं घ्राणादिरूपव्यावृत्तमित्यवश्याभ्युपेयत्वात् । एवं स्पर्शोऽप्युद्भूतानुद्भूतभेदेन द्विविधः । तत्र घ्राणरसनचक्षुस्त्वक्पिशाचादीनां प्रभाबाष्पयोश्चानुद्भूतः स्पर्शः, घटपटादीनामनिन्द्रियवायुभर्जनकपालस्थवह्न्याद्यूष्मसौरादितेजःप्रभृतीनां चोद्भूतः स्पर्शः । न च स्पर्शस्य तादृशद्वैविध्ये मानभावः, उद्भूतत्वानुद्भूतत्वयोः स्पर्शनिष्ठधर्मयोरनभ्युपगमेऽपि क्षतिविरहादिति वाच्यम् । द्रव्यस्पार्शने सामान्यतः स्पर्शत्वेन कारणत्वे घ्राणादीनां प्रभाबाष्पयोश्च स्पार्शनापत्त्या उद्भूतस्पर्शत्वेनैव तत्र हेतुत्वं, तच्चोद्भूतत्वं घ्राणादिस्पर्शप्रभाबाष्पव्यावृत्तमित्यवश्यमभ्युपगमात् । एवं रसोऽप्युद्भूतानुद्भूतभेदेन द्विविधः । घ्राणरसनमणिवज्रादीनामनुद्भूतो रसः उद्भूतो रसश्च गुडादीनाम् । न च तादृशद्वैविध्ये मानाभावः, रसरासनं प्रति सामान्यतो रसत्वेन कारणत्वे रसनसंयुक्तप्रकृष्टमहत्त्ववत्समवायसंनिकर्षेण घ्राणमणिवज्रादीनामपि रसोपलब्ध्यापत्त्या उद्भूतरसत्वेनैव तत्र हेतुत्वं, तच्चोद्भूतत्वं घ्राणादिरसव्यावृत्तमित्यवश्याभ्युपगमात् । एवं गन्धोऽप्युद्भूतानुद्भूतभेदेन द्विविधः । तत्र घ्राणपाषाणमणिवज्रादीनामनुद्भूतो गन्धः, उद्भूतो गन्धश्च घटपटचंपकादीनाम् । न च तादृशद्वैविध्ये मानाभावः, गन्धघ्राणजत्वावच्छिन्नं प्रति सामान्यतो गन्धत्वेनैव हेतुत्वे घ्राणसंयुक्तप्रकृष्टमहत्त्ववत्समवायलक्षणसन्निकर्षेण पाषाणादीनामपि गन्धोपलब्ध्यापत्त्या उद्भूतगन्धत्वेनैव तत्र हेतुत्वं, तच्चोद्भूतत्वं पाषाणादिगन्धव्यावृत्तमित्यवश्याभ्युपेयत्वात् । न

च गन्धघ्राणजत्वावच्छिन्नं प्रति गन्धत्वेनैव कारणत्वं घ्राणसंयुक्तमहदुद्भूतरसवत्समवायस्य सन्निकर्षतया च न घ्राणादीनां गन्ध इत्येवास्तु किं गन्धनिष्ठोद्भूतत्वकल्पनेन, निर्गन्धस्यापि रसवतो जलस्य सत्त्वेनोक्तयुक्त्या रसनिष्ठोद्भूतत्वस्यावश्यकत्वादिति वाच्यम्। अनन्तरसानां सन्निकर्षकारणतावच्छेदककोटौ प्रवेशमपेक्ष्योद्भूतगन्धत्वेन गन्धस्य कारणताया एव लघुत्वात्। धूमस्य नीरसत्वे तदीयगन्धग्रहे उक्तसन्निकर्षस्य व्यभिचाराच्चेति नैयायिकसिद्धान्तः।

तत्र रूपनिष्ठोद्भूतत्वानुद्भूतत्वे कः पदार्थः ? किमुभयमेव जातिः ? अथ वोद्भूतत्वं जातिस्तदभावोऽनुद्भूतत्वम् ? अथवा अनुद्भूतत्वजातिस्तदभाव उद्भूतत्वम् ? इति चेत्।

अत्र सिद्धान्तानुयायिनो नैयायिकाः। अनुद्भूतत्वं जातिस्तदभाव उद्भूतत्वं न तूद्भूतत्वं जातिस्तदभावोऽनुद्भूतत्वम्, नीलत्वपीतत्वशुक्लत्वादिना सङ्करात्।

अथैवमनुद्भूतत्वमपि कथं जातिः नीलत्वादिना सङ्करात्। न चानुद्भूतत्वं नीलत्वपीतत्वादीनां सर्वेषामेव विरुद्धमनुद्भूतरूपस्यातीन्द्रियतया तत्र नीलत्वादिसत्त्वे मानाभावादिति वाच्यम्। तथासति तत्र रूपत्वादिसत्त्वेपि मानाभावात्, घ्राणादावनुद्भूतरूपात्मकधर्मिसत्त्वेऽपि मानाभावाच्च। पृथिवीत्वादे रूपत्वावच्छिन्नव्याप्यतया घ्राणादावनुद्भूतरूपस्य तत्र रूपे रूपत्वस्य च सिद्धिरिति विभाव्यते, तदा रूपत्वस्य नीलाद्यन्यतमत्वव्याप्यतया नीलत्वादेरपि तत्रावश्यकत्वात्।

नव्यास्तु नीलत्वादेर्यस्य कस्यचिदेकस्य तद्व्याप्यमिति वाच्यं विनिगमकाभावात्, विनिगमकाभावेन सर्वेषामेव व्याप्यत्वाभ्युपगमे च नीलत्वपीतत्वादीनामेव परस्परं-सङ्करप्रसङ्गादिति चेत्। सत्यम्। नीलत्वपीतत्वव्याप्यं नानैवानुद्भूतत्वमनुद्भूतत्वाभावकूटवत्त्वमेवोद्भूतत्वम्, तद्रूपत्वेनैव द्रव्यचाक्षुषं प्रति जनकत्वं तादृशाभावकूटवत्त्वस्यानुगतत्वात्, उद्भूतत्वस्यैव नीलत्वपीतत्वव्याप्यनानाजातित्वे च तेन रूपेण द्रव्यचाक्षुषं प्रति जनकत्वस्य परस्परं व्यभिचारापत्तेः। न च तथापि घ्राणादिनिष्ठमनुद्भूतरूपं नीलात्मकं पीताद्यात्मकं वेत्यत्र विनिगमकाभाव इति वाच्यम्। विनिगमकाभावेन व्याप्यवृत्तिनीलपीतादिनानानुद्भूतरूपाणामेव तत्राभ्युपगमात्।

वस्तुतस्त्वनुद्भूतत्वं शुक्लत्वव्याप्यमेव सर्वेषामेवानुद्भूतं शुक्लमित्यभ्युपगमात्, शुक्लरूपस्य च घ्राणाद्यात्मकपृथिव्यामपि सम्भवात्। न च शुक्लत्वव्याप्योत्कर्षापकर्षाभ्यां समं साङ्कर्यमिति वाच्यम्। अनुद्भूत-

रूपस्यात्यन्तापकृष्टरूपतया तत्रोद्भूतशुक्लसाधारणोत्कर्षसत्त्वे मानाभावात् । न च तथापि भास्वरत्वमादाय साङ्कर्यं दुर्वारं तेजसो भास्वररूपवत्त्वनियमेन चक्षुरादिरूपे भास्वरत्वस्यावश्यकत्वात्, तादृशनियमानभ्युपगमे तेजसो रूपवत्त्वनियमस्याप्यपह्नवसम्भवेन तत्रानुद्भूतरूपस्याप्यसिद्धिप्रसङ्गादिति वाच्यम् । अनुद्भूतत्वस्य भास्वरत्वव्याप्यविरुद्धभेदेन द्विविधत्वात्, तादृशानुद्भूतत्वाभावद्वयवद्रूपत्वेन चाक्षुषं प्रति हेतुता ।

अथ सर्वेषामेवानुद्भूतरूपं शुक्लमित्यभ्युपगमे अनुद्भूतत्वमेव नीलत्वपीतत्वादिसकलशुक्लत्वविरुद्धजातिव्यापिका घ्राणादिनिष्ठानुद्भूतशुक्लरूपव्यावृत्ता द्रव्यचाक्षुषजनकत्वावच्छेदकत्वेन सिद्धा जातिस्तु लाघवात् । अनुद्भूताभावद्वयवद्रूपत्वेन द्रव्यचाक्षुषं प्रति जनकत्वे गौरवात् । न च शुक्लत्वतद्व्याप्यभास्वरत्वमादाय साङ्कर्यमिति वाच्यम् । शुक्लत्वतद्व्याप्यभास्वरत्वयोरनुद्भूतत्वव्याप्यविरुद्धभेदेन द्विविधत्वात् । अनेकजातिकल्पनं तदवच्छिन्नं प्रति पाकावयवरूपयोरनेककार्यकारणभावकल्पनं च फलमुखं,फलमुखं गौरवं च न दोषायेति सिद्धान्त इति चेन्न ।

नीलत्वपीतत्वादीनां रूपत्वसाक्षाद्व्याप्यत्वनियमात्, भास्वरत्वस्य रूपत्वसाक्षाद्व्याप्यजातिसाक्षाद्व्याप्यत्वनियमाच्च । तादृशनियमानभ्युपगमे पृथिव्यादे रूपवत्त्वनियमस्याप्यपह्नवसम्भवेनानुद्भूतरूपस्यासिद्धिप्रसङ्गात् ।

एवं स्पर्शनिष्ठानुद्भूतत्वमपि स्पर्शत्वादिव्याप्या नानाजातिः, जलस्पर्शनिष्ठानुद्भूतत्वं शीतत्वव्याप्यं, तैजसस्पर्शनिष्ठानुद्भूतत्वमुष्णत्वव्याप्यं, पृथिवीवायुस्पर्शनिष्ठानुद्भूतत्वमनुष्णाशीतत्वं व्याप्यम्, तदभावकूटस्यानुगतत्वात् । उद्भूतस्पर्शत्वस्यैव शीतत्वादिव्याप्यनानाजातित्वे उद्भूतस्पर्शत्वेन द्रव्यस्पार्शनं प्रति जनकत्वस्य परस्परं व्यभिचारापत्तेः । रसनिष्ठानुद्भूतत्वमपि तिक्तमधुरत्वादिव्याप्या नाना जातिः । घ्राणरसनादिकं च विनिगमनाभावात्तिक्तमधुराद्यनुद्भूतरसवदेव । वस्तुतो रसनिष्ठानुद्भूतत्वं मधुरत्वव्याप्यमेव सर्व एवानुद्भूतरसो मधुर इत्यभ्युपगमात् । रसनाद्यात्मकजलनिष्ठरसेऽपि तस्य सत्त्वेन तिक्तत्वादिव्याप्यत्वासम्भवात्, 'अपां मधुर एव रस' इति नियमात् । तादृशानुद्भूतत्वाभाववद्रसत्वमेवोद्भूतरसत्वम्, तेनैव रूपेण रसरासनत्वादिव्याप्यनानाजातित्वे च रसरासनत्वावच्छिन्नं प्रति तेन रूपेण जनकत्वस्य परस्परव्यभिचारापत्तेश्च । गन्धनिष्ठानुद्भूतत्वं च विनिगमकाभावेन द्विविधम्, एकं सुरभित्वव्याप्यमपरं चासुरभित्वव्याप्यम्, तदभावद्वयवद्गन्धत्वमेवोद्भूतगन्धत्वम् तेनैव रूपेण

गन्धघ्राणजत्वावच्छिन्नं प्रति जनकत्वम् । उद्भूतगन्धत्वस्यैव जातित्वे सुरभ्यसुरभ्योरेव क्वचित्क्वचित्सत्त्वेन सुरभित्वादिकमादाय साङ्कर्यापत्तेः, नानात्वाभ्युपगमे च गन्धघ्राणजत्वावच्छिन्नं प्रति तेन रूपेण जनकत्वस्य परस्परं व्यभिचारापत्तेः । घ्राणपाषाणादिकं च सुरभ्यसुरभ्यनुद्भूतगन्धवदेव विनिगमकाभावादित्याहुः ॥ इति उद्भूतत्वानुद्भूतत्वस्वरूपनिर्वचनम् ॥

## अनुद्भूतरूपादिखण्डनम् ।

अत्र मीमांसकानुयायिनो नव्यनैयायिकाः । तादृशरूपादिद्वैविध्ये मानाभावः, सामान्यतो द्रव्यचाक्षुषं प्रति रूपत्वेन द्रव्यस्पार्शनं प्रति स्पर्शत्वेन रसरासनत्वावच्छिन्नं प्रति रसत्वेन गन्धघ्राणजत्वावच्छिन्नं प्रति गन्धत्वेन लाघवेनैव हेतुत्वात् । नचैवं घ्राणरसनचक्षुःपिशाचादीनामपि चाक्षुषापत्तिः, तेषां प्रभाबाष्पयोः स्पार्शनापत्तिः; घ्राणरसनमणिवज्रादिवृत्तिरसानामपि रासनापत्तिः, घ्राणपाषाणमणिवज्रादिगन्धानामपि घ्राणजापत्तिरिति वाच्यम् । तेषां नीरूपत्वनिःस्पर्शत्वनीरसत्वनिर्गन्धत्वाभ्युपगमात् । एवं यत्र यत्रानुद्भूतरूपरसगन्धस्पर्शवत्त्वं नैयायिकसिद्धान्तिभिरभ्युपेयते तत्रैव नीरूपनीरसनिर्गन्धनिःस्पर्शत्वाभ्युपगमात् लाघवात्, तेषां रूपादिमत्त्वे मानाभावाच्च, द्रव्यत्वादेरिव पृथिवीत्वादेरपि रूपादिमत्त्वव्याप्यत्वे मानाभावात् । नचैवं प्रत्यक्षसिद्धरूपादिमदवयव्यानारम्भका एव परमाणवो घ्राणादिकमारभन्ते इति नियतारम्भवादिमते साधु शोभते भूतपरमाणूनामपि रूपादिरहिततयाऽवयवरूपादिविरहादेवावयविनि घ्राणादौ रूपाद्यनुत्पत्तेः सुवचत्वात् । य एव परमाणवः प्रत्यक्षसिद्धरूपादिमत्पृथिव्यादिकमारभन्ते त एव घ्राणादिकमप्यारभन्ते इत्यनियतारम्भवादिनये तु न सङ्गच्छते प्रत्यक्षसिद्धरूपादिमदारम्भकतान्यथानुपपत्त्या परमाणुषु रूपादेरावश्यकत्वेऽवयवरूपादिक्रमेण घ्राणादिष्वपि रूपाद्युत्पत्तौ बाधकाभावादिति वाच्यम् । अनियतारम्भनयेऽपि समवायसम्बन्धेन रूपाद्युत्पत्तिं प्रति तादात्म्यसम्बन्धेन घ्राणाद्यारम्भकद्व्यणुकत्वेन प्रतिबन्धकतया तत्र रूपाद्यनुत्पादात्, द्व्यणुकेरूपाद्यनुत्पत्तौ अवयववृत्तिरूपाद्यभावादेव घ्राणादौ त्रसरेण्वादितदवयवपरम्परायां रूपाद्युत्पत्तेरसम्भवात् । घ्राणाद्यारम्भकत्वं च साक्षात्परम्परासाधारणतदवयवत्वसम्बन्धेन घ्राणादिमत्त्वम् । परमाणुवारणाय द्व्यणुकत्वप्रवेशः । द्व्यणुकत्वं च विलक्षणपरिमाणवत्त्वम् । यद्वा घ्राणाद्यारम्भकजन्यावयवत्वेन प्रतिबन्धकत्वम् । घ्राणाद्यारम्भकजन्यावयवत्वं च

साक्षात्परम्परासाधारणतदवयवत्वकालिकविशेषणत्वोभयसम्बन्धेन घ्राणादिमत्त्वम् । साक्षात्परम्परासाधारणतदवयवत्वं च तन्निष्ठसमवायसम्बन्धावच्छिन्नसंयोगाद्याधारतावच्छेदकताविशेषवत्त्वम् । अस्तु वा समवायसम्बन्धेन रूपाद्युत्पत्तौ तादात्म्यसम्बन्धेन घ्राणादिनैव प्रतिबन्धकत्वं लाघवात् । नचैवं घ्राणाद्यवयवे रूपाद्युत्पत्तिर्दुर्वारेति वाच्यम् । एतदनुरोधेनैव घ्राणत्वादेरवयवावयविवृत्तिजातित्वाभ्युपगमात् ।

अथैवं घ्राणरसनादिभेदेन तादृशबहुतरप्रतिबध्यप्रतिबन्धकभावकल्पनामपेक्ष्य घ्राणादावनुद्भूतरूपादिकल्पनैव लघीयसी, द्रव्यचाक्षुषादिकं प्रति उद्भूतरूपत्वादिना हेतुत्वादेवानुद्भूतरूपादिसत्त्वेपि चाक्षुषाद्यनुत्पादात् । न च तत्रानुद्भूतरूपाभ्युपगमेऽप्यनियतारम्भनयेऽपि घटपटादावुद्भूतरूपवत्यनुद्भूतरूपोत्पादवारणायानुद्भूतरूपं प्रति घटपटादीनामनन्तप्रतिबन्धकत्वं दुर्वारम्, अनियतारम्भनयेऽनुद्भूतरूपं प्रति उद्भूतरूपस्यासमवायिकारणतया व्यभिचारेण दुर्वचत्वादिति वाच्यम् । अनुद्भूतरूपं प्रति सामान्यतस्तदितररूपत्वेनैव तादात्म्यसम्बन्धेन प्रतिबन्धकत्वात् । न च तथाप्यनियतारम्भनये घ्राणादावुद्भूतरूपोत्पत्तिवारणाय उद्भूतरूपं प्रति घ्राणत्वादिना प्रतिबन्धकत्वमावश्यकम्, उद्भूतरूपं प्रति उद्भूतरूपस्यासमवायिकारणत्वाभ्युपगमेपि घ्राणाद्यारम्भकद्व्यणुकेपि उद्भूतरूपापत्तेर्दुर्वारत्वादिति वाच्यम् । निरुक्तप्रतिबन्धकाभावाद्यात्मकानुद्भूतरूपसामग्रीसत्त्वेनानुद्भूतरूपस्यैव घ्राणादावुत्पादात्, नीलेतरघटत्वनिश्चयत्वादिवदनुद्भूतेतररूपत्वात्मकस्योद्भूतरूपत्वस्यार्थसमाजग्रस्तत्वेन कार्यतानवच्छेदकतया तदवच्छिन्नापादनासम्भवात् । यदि चानुद्भूतरूपाभ्युपगमेऽवयवरूपजन्यतावच्छेदकजातिद्वयमेकमनुद्भूतत्वव्याप्यमपरं च तद्विरुद्धम्, अन्यथा साङ्कर्यापत्तेः, तथाच घ्राणादौ तदारम्भकद्व्यणुके चानुद्भूतत्वविरुद्धावयवरूपजन्यतावच्छेदकवैजात्यावच्छिन्नापत्तिवारणाय तादृशजात्यवच्छिन्नं प्रति घ्राणत्वादिना प्रतिबन्धकत्वमनियतारम्भनये तथाप्यावश्यकमिति सूक्ष्ममीक्ष्यते, तदापि न तादृशजात्यवच्छिन्नं प्रति घ्राणत्वादिना प्रातिस्विकरूपेण प्रतिबन्धकत्वम्, अपि तु सामान्यतोऽनुद्भूतरूपवत्त्वेनैव तादात्म्यसम्बन्धेनोद्भूतरूपत्वावच्छिन्नं प्रति प्रतिबन्धकत्वमतो लाघवमिति चेन्न ।

घ्राणादावनन्तानुद्भूतरूपतद्ध्वंसतदुभयकार्यकारणाभावातिरिक्तानुद्भूतत्वजातिकल्पनां द्रव्यचाक्षुषादिकं प्रति उद्भूतरूपत्वादिना गुरुधर्मेण कारणत्वकल्पनां चापेक्ष्य रूपत्वाद्यवच्छिन्नं प्रति घ्राणत्वादिना कतिपयप्रतिबन्धकत्वकल्पनाया एव युक्तत्वात् ।

वस्तुतस्त्वनियतारम्भनये रूपत्वाद्यवच्छिन्नं प्रति तादात्म्यसम्बन्धेन घ्राणादिना घ्राणाद्यारम्भकद्वयणुकत्वादिना वा प्रतिबन्धकत्वमेव नोपेयं क्रियासंयोगकार्यकारणभावोक्तयुक्त्या तत्तद्व्यक्तित्वविशिष्टसमवायसम्बन्धेन सत्त्वावच्छिन्नोत्पत्तिं प्रति तत्तद्व्यक्तित्वेन समवायिकारणत्वस्यावश्यकतया यावद्विशेषसामग्रीबाधादेव घ्राणादौ रूपाद्युत्पत्तेरसम्भवात्, घटपटादिरूपतत्तद्व्यक्तिसमवेतातिरिक्तरूपादेरलीकत्वात्। नचैवं घ्राणादावनुद्भूतरूपत्वादिना प्राचीनेनानियतारम्भनयेऽनुद्भूतरूपं प्रति तादात्म्यसम्बन्धेन तदितररूपवतोऽनुद्भूतेतररूपत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेनानुद्भूतरूपवतश्च प्रतिबन्धकत्वं नोपेयमुक्तक्रमेण यावद्विशेषसामग्रीविरहादेवातिप्रसङ्गवारणसम्भवात्, तथाच जरन्मते को विशेष इति वाच्यम्। अनन्तानुद्भूतरूपतद्ध्वंसतदुभयकार्यकारणभावातिरिक्तानुद्भूतत्वजातिकल्पनाया द्रव्यचाक्षुषं प्रत्युद्भूतरूपत्वेन गुरुधर्मेण कारणत्वकल्पनायाश्च जरन्मते विशेषत्वात्। तेन रूपादेरुद्भूतत्वानुद्भूतत्वरूपद्वैविध्यखण्डनम्, द्रव्यचाक्षुषादिकं प्रति उद्भूतरूपत्वादिना कारणत्वकल्पने च गौरवान्मानाभावाच्च। परन्तु घ्राणादीनां नीरूपत्वनिःस्पर्शत्वाभ्युपगम एवानियतारम्भनये न युक्तः, रूपस्पर्शभेदेन घ्राणादेः प्रतिबध्यप्रतिबन्धकभावकल्पनामपेक्ष्य लाघवाल्लौकिकविषयतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नोत्पत्तिं प्रत्येव घ्राणत्वादिना प्रतिबन्धकत्वं रूपस्पर्शौ तु तेषु वर्त्तेते एवेत्यभ्युपगमस्यैव युक्तत्वात्। न च तावता घ्राणादेः प्रत्यक्षतावारणेऽपि तद्वृत्तिरूपस्पर्शादेः तद्वृत्तिघ्राणत्वादिजातेश्च प्रत्यक्षापत्तिर्दुर्वारा चक्षुःसंयुक्तरूपवन्महत्समवायादिलक्षणस्य सन्निकर्षस्य सत्त्वात्, समवेतत्वसम्बन्धेनापि प्रत्यक्षत्वावच्छिन्नं प्रति घ्राणत्वादिना प्रतिबन्धकत्वोपगमे तद्वृत्तिसत्ताद्रव्यत्वपृथिवीत्वादेरपि घटादावप्रत्यक्षत्वापत्तेः, तद्वृत्तिरूपस्पर्शादीनां तु तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वोपगमे चानन्तप्रतिबध्यप्रतिबन्धकभावकल्पनापत्तेरिति वाच्यम्। घ्राणादेरप्रत्यक्षत्वे तद्वृत्तिरूपस्पर्शादेरपि प्रत्यक्षासम्भवात्, चक्षुःसंयुक्तचाक्षुषसमवायत्वक्संयुक्तत्वाचसमवायत्वाभ्यामेव चक्षुःसंयुक्तसमवायादिलक्षणसन्निकर्षस्य कारणत्वाभ्युपगमात्। चाक्षुषत्वादिकं चोपलक्षणं न तु विशेषणम्, तेन घटादेः पूर्वं चाक्षुषादिविरहेऽपि तद्वृत्तिगुणकर्मजातीनां न प्रत्यक्षानुपपत्तिः। न च त्वक्संयुक्तत्वाचसमवायत्वेन कारणत्वे वायूष्मादिवृत्तिस्पर्शादेरपि प्रत्यक्षं न स्यात् त्वाचसमवायविरहादिति वाच्यम्। नव्यनैयायिकैर्वायूष्मादेरपि त्वाचाङ्गीकारात्। तस्मादनियतारम्भनये घ्राणादीनां रूपस्पर्श-

